BIBLIOTHECA INDICA:

COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

Asiatic Society of Bengal.

NEW SERIES, Nos. 1087, 1106, 1115, 1138.

# ŚUDDHIKAUMUDĪ

GOVINDANANDA KĀVIKAṄKAṆĀCĀRYYA.

EDITED BY

PAṆḌITA KAMALAKṚṢṆA SMṚTIBHŪṢAṆA

CALCUTTA:

PRINTED BY UPENDRA NATHA CHAKRAVARTTI, AT THE SANSKRIT PRESS

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET.

1905.

# शुद्धिकौमुदी।

कविकङ्कणाचार्य्य-

श्रीगोविन्दानन्दविरचिता

एसियाटीकसोसाइटीनामिकायाः सभाया

अनुमत्या

भट्टपल्लीनिवासिना

श्रीकमलकृष्णस्मृतिभूषणेन

संस्कृता।

कलिकाता-राजधान्यां

श्रीउपेन्द्रनाथचक्रवर्त्तिना

संस्कृतयन्त्रे मुद्रिता।

एसियाटीकसोसाइटीनामिकया सभया प्रकाशिता च।

१९०५ खृष्टाब्दे।

# शुद्धिकौमुदी।

कविकङ्कणाचार्य्य-

श्रीगोविन्दानन्दविरचिता

एसियाटीकसोसाइटीनामिकायाः सभाया
अनुमत्या

भट्टपल्लीनिवासिना
श्रीकमलकृष्णस्मृतिभूषणेन
संस्कृता।

कलिकाता-राजधान्यां
श्रीउपेन्द्रनाथचक्रवर्त्तिना
संस्कृतयन्त्रे मुद्रिता।
एसियाटीकसोसाइटीनामिकया सभया प्रकाशिता च।

१९०५ खृष्टाब्दे।

# PREFACE

The present work is Śuddhi Kriya Kaumudī the fourth of Govindānanda's code. In this treatise the author has examined every "Malamāsa" or intercalary month from Saka 1400—1457 corresponding to 1478 to 1535 A.D. This appears to be the period of the author's literary activity, and it corroborates the date of the author as arrived at in the preface to the Varṣa Kriyā Kaumudī.

The author seems to be a precurser of Raghunandana as in this work he goes over almost all the topics treated by that author in his Jyotiṣa-tattva, Śuddhi-tattva and Malamāsa tattva.

His exceptionally correct and comprehensive definition of Malamāsa (মলমাস), his lucid treatment of Akala and his detailed description of all the rites necessary on the death of a man, go to give him a high position among the compilers of Smriti.

Three Mss. have been used in preparing the manuscript copy for the press; one of them No. 379, was kindly procured for me by the Asiatic Society from the India Office, London; the second No. B-57 belongs to the Asiatic Society of Bengal, and the third to Paṇḍit Gaṅgā Viṣṇu Cakravartti of Khunberia, a descendant of the author. The copy brought from the India Office, though correct was full of omissions.

I have added to the index certain differences of opinion between Raghunandana and the author.

BHATPARA,
The 26th September 1905. } KAMALAKṚṢṆA SMṚTIBHŪSANA.

# शुद्धिकौमुदी ।

---

आनन्दं प्रणमन्महेन्द्रमुकुटप्रोतेन्द्रनीलामल-
श्रेणीश्रीक्षतचञ्चरीकनिवहव्यासङ्गसम्भावनम् ।
स्वप्रोद्भूतभवो*त्तमाङ्गतटिनीसम्भूतगङ्गावहं
श्रीगोविन्दपदाम्बुजं वितनुतामृद्धिं परामान्तरीम् ॥
आलोक्याखिलसंग्रहानविकलं दृष्ट्वा पुराणान्यपि
प्रोक्ताः सम्यगथो विविच्य मुनिभिर्मन्वादिभिः संहिताः ।
श्रीमत्तातपदारविन्दविलसद्धूलीभरोद्देशतः
श्रीगोविन्दकविः करोति गहनां शुद्धेरिमां कौमुदीम् ॥

---

## अथ शुद्धिस्वरूपं निरूप्यते ।

तत्र वेदबोधितकर्म्मार्हता शुद्धिः। अर्हता (च) तत्तद्विधिबोधितत्वं यत्कर्म्मसम्पादनाय येषां पात्रकालादीनां यादृशं विधिबोधितत्वं तत्कर्म्मणि तेषां सैव शुद्धिरित्यर्थः।

* क पुस्तके—तमोत्तमाङ्ग—।

नचांङ्गतेकर्म्माङ्गाचमने सत्यामपि शुद्धौ कर्म्माहत्वायोगाद-व्याप्तिरिति वाच्यम्। अस्ति च तत्रापि कर्म्माहत्वं किन्तु उत्तरीय-धारणाद्यङ्गान्तराकरणे एवाङ्गते कर्म्माङ्गाचमनेऽङ्गबाधात् कर्म्मैव तावद्विगुणं भवति (नतु) तत्र नास्ति शुद्धिः, अतएव तदाचमनं कर्म्माङ्गमित्युच्यते।

तत्र तावच्छुद्धिनिरूपणे कर्त्तव्ये प्रथमं तावत्प्रतियोग्यशौच-निरूपणमुखेन अशौचशुद्धिर्निरूप्यते।

तत्र कश्चित्—स्नान्यतिरिक्तप्रयत्नानपनेयत्वे* सति सजातीय-संसर्गानर्हत्वापादकत्वमित्यशौचलक्षणमाह। तदयुक्तम्। अतीते अङ्गास्पृश्यत्वे सत्यव्याप्तेः सपिण्डजननकन्याजननादावव्याप्तेश्च।

नापि स्नान्यतिरिक्तप्रयत्नानपनेयत्वे सति कर्म्मानर्हत्वमशौच-मिति अधःशौचस्थले स्नानापनेयाशौचेऽ† व्याप्तेः।

जानूर्द्धं क्षतजे जाते नित्यकर्म्मापि नाचरेत्।
सूतके च समुत्पन्ने क्षुरकर्म्मणि मैथुने॥
धूमोद्गारे तथा वान्ते नित्यकर्म्माण्यपि त्यजेत्।
जलौकां गूढपादञ्च क्रिमिगण्डूपदादिकम्।
कामाद्धस्तेन संस्पृश्य नित्यकर्म्म च नाचरेत्॥

इति कालिकापुराणे कर्म्मानर्हत्वप्रतिपादनाच्च रक्तपात-क्षौरकर्म्म

---

* क पुस्तके प्रयत्नापनयने सति।
† ख पुस्तके—स्नानापनयनाशौचे।

धूमोद्गार-वान्त-जलौकादिस्पर्शेष्वतिव्याप्तेः । ततस्तद्दिने पतित-मेवोद्दिष्टं तत्परदिने प्रसज्येत । स्त्रीणां रजोयोगे चातिव्याप्तेः । न च

रात्रिभिर्मासतुल्याभि गर्भस्रावे विशुद्ध्यति ।

रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला ॥

इति मनुना*ऽशौचप्रकरणपठितत्वात् स्त्रीरजोयोगेऽप्यशौचत्व-मिति वाच्यम् । लक्ष्यानुरोधेन हि लक्षणं कल्पनीयं न तु लक्षणानुरोधात् लक्ष्यकल्पनमतिप्रसङ्गात् ।

न च शास्त्रे लोके वा स्त्रीरजोयोग-रक्तपात-क्षौर-वान्त-जलौका-स्पर्शनादौ चाशुद्धिमात्रेऽशौचपदव्यवहारः क्वापि दृश्यते प्रत्युत—

उदक्याशौचिभिः स्नायात् संस्पृष्टस्तैरुपस्पृशेत् ॥

इति याज्ञवल्क्येन भेदनिर्देशं कृत्वा स्त्रीरजोयोगेऽशौचपद-प्रयोगो निषिद्धः ।

मनुना तु गर्भस्रावशुद्धिप्रसङ्गेन स्त्रीरजोयोगेऽपि शुद्धिरुक्ता न तु तदशौचमन्यथाऽशौचान्तरकृत्यान्यपि प्रसज्येरन् ।

सर्व्वं गोत्रमसंस्पृश्यं तत्र स्यात् सूतके सति ।

मध्येऽपि सूतके दद्यात् पिण्डान् प्रेतस्य तृप्तये ॥

इति भविष्यपुराणवचनान्मरणान्तरपातवत् रजोयोगमध्येऽपि रजस्वलायाः प्रेतपिण्डदानप्रसङ्गः स्यात् । जातरक्तपातवान्ता-देरन्नभक्षणेऽशौचान्नभक्षणप्रायश्चित्तप्रसङ्गः स्यात् ।

किञ्च [एवं* प्रयत्नानपेयाशुद्धिमात्रस्याशौचपदस्य जनन मरणविशेषाशुद्ध्यर्थस्य च सूतकपदस्य द्वयोः सामान्यविशेषतया भिन्नार्थत्वे सति]—

देये पितॄणां श्राद्धे तु अशौचं जायते यदि।
तदशौचे व्यतीते तु तेषां श्राद्धं विधीयते॥

इति (सामान्यस्य) ऋष्यशृङ्गवचनस्य—

दानं प्रतिग्रहो होमः स्वाध्यायः पितृकर्म्म च।
प्रेतपिण्डक्रियावर्ज्जं सूतके† विनिवर्त्तते॥

इति विशेषशङ्खवचनदर्शनात्त‡दितरपरत्वे प्रेतपिण्डक्रियावर्ज्ज-मित्यनेन प्रतिप्रसूतस्य मृताहसम्बन्धिनः प्रेतैकोद्दिष्टसांवत्सरिक-श्राद्धस्य सूतकमध्ये प्रसक्तिः स्यात्।

अशौचसूतकयोस्तुल्यार्थत्वे हि तुल्यविषयकवचनयोर्विरोधे सत्येकवाक्यतावशात् सूतकान्ते सांवत्सरिकं प्रेतैकोद्दिष्टञ्च ¶प्रसज्ज-ज्जते नान्यथेति। अतो रजोयोगबाधितं सांवत्सरिकं प्रेतैको-द्दिष्टञ्च—

---

* ख पुस्तके—[ ] चिह्नितांशः पतितः।

† ग पुस्तके—अशौचे विनिवर्त्तते।

‡ ख पुस्तके—( ) तद्दितरपरत्वे इत्यारभ्य प्रसक्तिः स्यादित्यन्तसन्दर्भस्थाने—दायाद्दिकपिण्डदानस्य सूतकमध्यविधाननियमेन विधानवैफल्यात् प्रेतपिण्ड-क्रियापदेनोपलक्षितस्य मृताहसम्बन्धिनः प्रेतैकोद्दिष्टसांवत्सरिकश्राद्धस्य सूतके जननमरणाशौचसंभेदे निवृत्तिप्रतिषेधात् तन्मध्य एव प्रसक्तिः स्यात् अशुद्धि-सामान्यात् सूतकस्य विशेषत्वे वचनयोर्भिन्नविषयतया ऋष्यशृङ्गवचनस्य सूतके-तराशुद्धिविषयत्वात् इति पाठः।

¶ ग पुस्तके—प्रसज्येत।

आद्यविघ्ने समुत्पन्ने मृताहेऽविदिते तथा।

एकादश्यां प्रकुर्व्वीत कृष्णपक्षे विशेषतः॥

इति वचनात् कृष्णैकादश्यामेव कार्य्यं न तु रजोयोगान्ते। मृतान्ते ग्रहण्यादिरोगान्ते वेति सर्व्वगौड़शिष्टाचारः।

वस्तुतस्तु अशौचशब्दो जननमरणनिबन्धने शुचित्वाभावे योगरूढ़ः सूतकशब्दसमानार्थः।

अतएव

अशौचन्तु प्रवक्ष्यामि मृत्युप्रसवलक्षणम् *।

इति दक्षेणाशौचस्वरूपं निरूपितम्। तस्माज्जननमरणनिबन्धनं वेदबोधितकर्म्मानर्हत्वमशौचमित्यशौचलक्षणम्।

नचाशौचलक्षणे सहरोदनशवस्पर्शादावव्याप्तिरिति वाच्यं अभक्ष्यभक्षणादिसहकारेण मरणस्यैव† [कर्म्मानर्हत्वजनकत्वात्। राहुदर्शने तु-ग्रहणे शावमाशौचमिति ब्रह्माण्डपुराणवचनेन पक्वान्नपाकस्थालीत्यागशुद्धिस्नानादीनां शावाशौचकर्म्मणामतिदेश एव न तु तत्राशौचम्। अथवा वेदबोधित] कर्म्मानर्हत्वापादको जननमरणजन्यापूर्व्वविशेषोऽशौचम्।

* ख पुस्तके—कारणम्।

† क ग पुस्तकद्वये—[ ] चिह्नितांशः पतितः।

## अथाशौचकालो निरूप्यते।

तत्र मनुः—

शुध्येत् विप्रो दशाहेन द्वादशाहेन भूमिपः।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति॥

अस्यार्थः—मासद्वयाधिकषड्वर्षोपरि सपिण्डमरणे वेदाग्निरहितस्य गर्भाधानादिसंस्कारयुक्तस्य ब्राह्मणस्य दशाहमशौचम्।

अत्र च सूर्य्योदयात् पूर्व्वमशौचे जाते पूर्व्वदिनं ग्राह्यम्।

यथा काश्यपः—

रात्रावेव समुत्पन्ने मृते रजसि सूतके।
पूर्व्वमेव दिनं ग्राह्यं यावन्नाभ्युदितो रविः॥

शूद्रस्य तु षड्वर्षोपरि सपिण्डमरणे "शूद्रस्य त्रिंशता शुद्धिरिति देवलवचनात्" त्रिंशद्दिवसात्मकसावनमासाशौचम्।

अग्निहोत्रिणो मन्त्रब्राह्मणात्मकवेदाध्ययनयुक्तस्य एकाहमशौचम्। श्रौताग्निवेदाध्ययनयोरेकगुणहीनस्य त्र्यहं गुणद्वयहीनस्य केवलस्मार्त्ताग्नेश्चतुरहः।

यथा दक्षः—

*एकाहाद्ब्राह्मणः शुध्येयोऽग्निवेदसमन्वितः।
हीने हीनतरे चैव त्र्यहश्चतुरहस्तथा॥

---

* ग पुस्तके—एकाहस्तु समाख्यातः।

तथा बृहस्पतिः—

त्रिरात्रेण विशुध्येत योऽग्निवेदसमन्वितः।
पञ्चाहेनाग्निहीनस्तु दशाहाद्ब्राह्मणब्रुवः॥

अत्राग्निपदं स्मार्त्ताग्निपरं वेदपदं मन्त्रब्राह्मणात्मकपरं पञ्चाहेनाग्निहीनस्त्वित्यनेन केवलं मन्त्रात्मकवेदाध्ययनयुक्तस्य पञ्चाहमशौचमुक्तम्।

तत्र ब्राह्मणब्रुवमाह अङ्गिराः—

गर्भाधानादिसंस्कारै र्युक्तश्च नियमव्रतैः।
नाध्यापयति नाधीते विज्ञेयो ब्राह्मणब्रुवः॥

एष चाशौचसङ्कोचोऽध्यापनादितत्कर्मार्थमेव न तु सन्ध्यादिनिमित्तम्।

सूतके कर्म्मणां त्यागः सन्ध्यादीनां विधीयते।
होमः श्रौते तु कर्त्तव्यः शुष्कान्नेनापि वा फलैः॥

इति छन्दोगपरिशिष्टे सन्ध्यादीनि निषिध्य* होममात्रस्य प्रतिप्रसवात् ब्राह्मणस्य च स्वाध्यायानिवृत्त्यर्थमित्यादि गौतमादिनानामुनिवचनाच्च।

शुचीननिधनां(ना)स्त्वन्यान् गालाग्नौ हावयेद्द्विजान्।
शुष्कान्नेन फलैर्वापि वैतानं जुहुयात्तथा॥
न स्पृशेयुरिमानन्ये न च तेभ्यः समाहरेत्।
चतुर्थे पञ्चमे चैव संस्पर्शः कथितो बुधैः॥

---

* ख पुस्तके—सन्ध्यादिनिषिध्य।

इति कूर्म्मपुराणे साम्नेरपि चतुर्थे पञ्चमाहे चाङ्गास्पृश्यत्वनिवृत्तिकथनाच्च ।

‡अत्रैवाङ्गाशौचमाह सम्वर्त्तः—

चतुर्थेऽहनि कर्त्तव्यमस्थिसञ्चयनं बुधैः ।
अस्थिसञ्चयनादूर्द्धमङ्गास्पृश्यो विधीयते ॥

शूद्रस्य तु शूद्राणां दशमात्परमिति विशेषवचनादस्थिसञ्चयनं तन्निमित्तकश्राद्धमेकादशाहे (एव) कर्त्तव्यम् । अङ्गाशौचे निवृत्ते हि अस्थिसञ्चयनमित्यङ्गाशौचप्राप्तिः ।

तथा अशौचकालत्रिभागेणैवाङ्गाशौचमाह देवलः—

अशौचकालाद्विज्ञेयं स्पर्शनन्तु त्रिभागतः ।
शूद्र विट्-क्षत्र-विप्राणां यथाशास्त्रप्रचोदितात् ॥

‡ क ग.पुस्तकद्वये—सम्वर्त्तवचनं नोल्लिखितम् ।

## अथ जननाशौचम्।

ब्राह्मणस्य वेदाग्निरहितस्य सपिण्डजनने दशाहमशौचं एकाहाद्यशौचस्य पूर्व्वोक्तगुणाद्यपेक्षया बोद्धव्यम्। शूद्रस्य तु सपिण्डजनने मासाशौचम्।

तथा मनुः—

जननेऽप्येवमेव स्यात् द्विजानां शुद्धिमिच्छताम्।

एवमेवेति शुध्येद्विप्रो दशाहेनेत्याद्यतिदेशः।

अत्र सपिण्डानामस्पृश्याशौचाभावमाह कूर्म्मपुराणे—

सूतके तु सपिण्डानां संस्पर्शो नैव दुष्यति।

सूतिकायास्तु दशाहमेव सर्व्ववर्णानामस्पृश्याशौचमाह प्रचेताः—

सूतिका सर्व्ववर्णानां दशाहेन विशुध्यति।

ऋतौ च न पृथक्शौचं सर्व्ववर्णेष्वयं विधिः॥

*पतेः शूद्रा तु संस्पृश्या त्रयोदशभिरेव च।

इति यमवचनमत्यन्तासच्छूद्रविषयम्।

पितुः पुमपत्योत्पत्तौ सचेलस्नानानन्तरमेवास्पृश्याशौचाभावः।

तथाचादिपुराणम्—

सूतके तु मुखं दृष्ट्वा जातस्य जनकस्ततः।

कृत्वा सचेलं स्नानन्तु शुद्धो भवति तत्क्षणात्॥

सूतिकास्पर्शे पितुरपि दशाहमस्पृश्यत्वम्।

---

* क पुस्तके गतेः।

तथा पराशरः—

> यदि पत्न्यां प्रसूतायां द्विजः सम्पर्कमिच्छति।
> सूतकन्तु भवेत्तस्य* यदि विप्रः षडङ्गवित्॥

सूतकमङ्गाशौचम्। सूतिकास्पर्शिनीनां सपत्नीनामपि दशाहमङ्गाशौचम्।

पराशरः—

> अन्याश्च मातरस्तावत्तद्‌गेहं न व्रजन्ति चेत्।
> सपिण्डाश्चैव संस्पृश्याः सन्ति सर्व्वेऽपि निश्चयम्॥

तावदिति पिण्डवद्दशाहमस्पृश्या भवन्तीत्यर्थः, यदि तद्‌गेहं न व्रजन्ति तदा संस्पृश्या एव तद्‌गृहगमने हि अंशसम्भावना। कन्योत्पत्तौ पितुः सचेलस्नानमपि नास्ति—

> जाते पुत्रे पितुः स्नानं सचेलन्तु विधीयते।
> इति सम्वर्त्तवचनात्।

पुत्रोत्पत्तौ ब्राह्मणी-क्षत्रिया-वैश्यानाञ्च विंशतिरात्रोत्तरकालमेव दैवपित्र्यकर्म्माधिकारः कन्योत्पत्तौ मासेनेति।

तथा च पैठीनसिः—

सूतिकां पुत्रवतीं विंशतिरात्रेण स्नातां सर्व्वकर्म्माणि कारयेत्. मासेन स्त्रीजननीम्।

* न पुस्तके—तस्य।

शूद्रायास्तु सर्व्वदेव मासेन शुद्धिरशौचव्यापनात्।

न चाद्यादेव वचनात् जननाशौचस्य ह्रासः* इति वाच्यम्॥ अस्य वचनस्य सूतिकागोचरतयाऽशौचह्रासाकाङ्क्षायां प्रवृत्तत्वात् तुल्यकालसम्भवत्वेनाशौचसङ्कराविषयस्य जननाशौचस्य सपिण्ड-सामान्यविषयत्वेन भिन्नविषयत्वाच्च।

पुत्रजन्मनि श्राद्धमच्छिन्ननाड्यामेव कर्त्तव्यम् स्तन्याभावात् स्तन्यप्राशिनो बालस्य नाशशङ्कया। अशक्तया च अशौचापगमेऽपि कार्य्यम्।

तथाच विष्णुधर्म्मोत्तरे—

अच्छिन्ननाड्यां कर्त्तव्यं श्राद्धं वै पुत्रजन्मनि।
अशौचापगमे कार्य्यमथवापि नराधिप॥

तथा मार्कण्डेयपुराणम्—

नैमित्तिकमथो वक्ष्ये श्राद्धमभ्युदयात्मकम्।
पुत्रजन्मनि तत्कार्य्यं जातकर्म्मसमं नरैः॥

तथा ब्रह्मपुराणे—†

देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनाम्।
आयान्ति तदहस्तस्मात् पुण्यं पञ्चसु सर्व्वदा॥

आदिपुराणम्—

शौचाशौचं प्रकुर्व्वीरन् शूद्रवद्वर्णसङ्कराः॥

---

* क पुस्तके—ह्रासः।
† क पुस्तके—ब्रह्मपुराणपदं नास्ति।

शूद्रवदिति मासाशौचातिदेशः। वर्णसङ्कराः अपकृष्टवर्णेनोत्कृष्ट-(वर्ण) स्त्रीषु जनिताः।

मातृवद् वर्णसङ्करा इति वचनं आनुलोम्येन जातवर्णसङ्कर-विषयम्।

अथ षष्ठदिनं प्राप्य विहितषष्ठ्यादिदेवतापूजार्थं नाशौचं सर्व्ववर्णानाम्।

तथा विष्णुधर्म्मे—

सूतिकावासनिलया जन्मदा नाम देवताः।
तासां यागनिमित्तार्थं शुद्धिर्जन्मनि कीर्त्तिता॥

तासां यागनिमित्तार्थमित्यनेन सन्ध्यादिकन्तु न कर्त्तव्य-मित्यायातम्। जन्मनि जन्माशौचमात्रे न तु मरणाशौचान्तरापाते शुद्धिरित्यर्थः। अत्रास्य वचनस्य प्रकृताशौचस्यैवापवादकत्वे प्राप्ते जन्मनोऽनुपादानबलात् जन्माशौचान्तरापातेऽपि शुद्धिः।

सूतके तु समुत्पन्ने द्वितीये समुपस्थिते।
द्वितीये नास्ति दोषस्तु प्रथमेनैव शुध्यति॥

इति यमवचनेन सजातीयद्वितीयाशौचस्य दोषाभावप्रतिपाद-नाच्च। शिष्टाचारोऽप्येवम् एव।

# अथाशौचे विधिनिषेधौ ।

जावालः—

सन्ध्यां पञ्चमहायज्ञान् नैत्यिकं स्मृतिकर्म्म च ।
तन्मध्ये हापयेत्तेषां दशाहान्ते पुनः क्रिया ॥

नैत्यिकं विधिपूर्व्वकं स्नानमभीष्टदेवतापूजनञ्च तन्मध्ये अशौच-मध्ये ।

कूर्म्मपुराणे—

शुचीननिधनांस्त्वन्यान् शालाग्नौ हावयेद् द्विजान् ।
शुष्कान्नेन फलैर्वापि वैतानं जुहुयात्तथा ॥

शुचीनशौचरहितान् अनिधनान् होमार्थानुकल्पितधनांश्च द्विजान् शुष्कान्नं शक्तवो लाजाश्च ।

छन्दोगपरिशिष्टम्—

होमः श्रौते तु कर्त्तव्यः शुष्कान्नेनापि वा फलैः ।
अकृतं हावयेत् स्मार्त्ते तदभावे कृताकृतम् ॥

कृतादिशब्दान् स एव व्याकरोति—

कृतमोदनशक्त्वादि तण्डुलादि कृताकृतम् ।
व्रीह्यादि चाकृतं प्रोक्तं इति हव्यं त्रिधा बुधैः ॥

शङ्खः—

दानं प्रतिग्रहो होमः स्वाध्यायः पितृकर्म्म च ।
प्रेतपिण्डक्रियावर्ज्जं सूतके* विनिवर्त्तते ॥

---

* क पुस्तके—अशौचे ।

होमः काम्यहोमः स्वाध्यायस्वाध्ययनं पितृकर्म्म अमावस्यादि-श्राद्धम्।

प्रेतपिण्डक्रियापदेन मृताहसम्बन्धिश्राद्धजातीयमुपलक्ष्यते न तु दशाहादिकपिण्डदानं तस्य सूतकमध्ये विधाननियमेन पुनर्विधान-वैफल्यात्।

तच्च मृताहसम्बन्धिजातीयं सपिण्डीकरणान्तषोड़शश्राद्धं सांवत्सरिकमपि ऐकादशाहिकषाण्मासिकानामपि मृताहावधि-विहितत्वेन*तत्सम्बन्धित्वात्† ।

न च पर्णनरदाहे कृते साग्नेरायश्राद्धस्य दाहावध्यशौचावसान द्वितीयदिनविहितत्वेन मृताहसम्बन्धित्वाभावादप्रसक्तिरिति वाच्यम्।

एकमृताहसम्बन्धित्वेन तज्जातीयतया अन्यत्रापि ग्रहणादिति। वस्तुतस्तु सांवत्सरिकश्राद्धातिरिक्त(?)पार्व्वणविधिकश्राद्धेतरश्राद्धमत्र विवक्षितमिति।

सूतके जनने मरणे चेत्यर्थः। एवञ्च प्रेतश्राद्ध-प्रतिसांवत्सरिक-श्राद्धयोः पर्य्युदासादशौचकालमध्ये करणप्रसक्तौ तदुत्तरकाल-कर्त्तव्यतामाह ऋष्यशृङ्गः—

देये पितृणां श्राद्धे तु अशौचं जायते यदि।
तदशौचे व्यतीते तु तेषां श्राद्धं विधीयते॥

---

* ख पुस्तके—श्राद्धसम्बन्धित्वात्।
† ख पुस्तके—इत आरभ्य प्रकृताकुत्तरपर्य्यन्तं कतिपयपङ्क्तयो न सन्ति।

ऋणीभूतेन दातव्यं या तिथिः प्रतिपद्यते।
सा तिथिस्तस्य कर्त्तव्या न लभ्या वै कदाचन॥

इत्येवं शङ्खवचनेनाभिवर्द्धितेऽवश्यदेये मृताहसम्बन्धिन्यावश्यकश्राद्धे इत्यर्थः। अतः सिद्धमशौचमध्यपतितं षोड़शश्राद्धं सांवत्सरिकश्राद्धञ्चाशौचान्तद्वितीयदिने प्रशस्तकालोपलक्षिततिथावेव कार्य्यम्।

अतएव श्राद्धविवेके अपाटवाशौचाभ्यामपि पतितमेकोद्दिष्टमेकादश्यामशौचान्ते च मलमासपाते न कर्त्तव्यम्। किन्तु मलमासाव्यासन्नकृष्णैकादश्यामेवेत्युक्तम्।

अत्र केचित्—

पक्षिण्यशौचे रात्रावेव तत्तिथेर्लाभात् परदिने भिन्नतिथौ विधानाभावादकरणप्रसङ्गभियाऽशौचानन्तरश्राद्धयोग्यकालोपलक्षिततिथेर्विवक्षितत्वात् निषिद्धेतरस्यैव योग्यत्वात् तस्मिंश्च मलमासस्यापि निषिद्धत्वात् मलमासोत्तरतिथावेव कार्य्यमित्याहुः। तदयुक्तम्,

परदिने तिथेर्द्विमुहूर्त्तमात्रव्यापित्वे तन्मध्य एव श्राद्धप्रसङ्गात्तस्यापि निषिद्धेतरत्वादिति।

श्राद्धविवेककर्त्तुः पुनरयमाशयः—

या तिथिरित्यत्र तिथिपदेन दिनमुच्यते ततश्च ऋणीभूतेन सता यदहोरात्रं प्राप्यते अशौचान्तदिनोत्तरदिनमित्यर्थः। तस्मिंश्च दिने मलमासाद्यविघ्ने जाते वक्ष्यमाणलघुहारीतवचनादनन्तरकृष्णैकादश्यामेवेति। अथवा परदिने तत्तिथेः किञ्चिन्मात्रलाभेन

दर्भिणाद्यशौचे रात्रावेव तत्तिथेः समाप्तत्वेन वा भिन्नतिथौ विधानाभावादकरणप्रसङ्गभिया अशौचानन्तरप्रशस्तकालोपलक्षिततिथेर्व्विवक्षितत्वात् मध्याह्नापराह्णयोश्च प्रशस्तत्वात् तस्मिंश्च तिथौ मलमासाख्यविघ्ने तदनन्तरकृष्णैकादश्यामेव श्राद्धं वक्ष्यमाणवचनादिति।

समयप्रकाशकारस्तु-मलम्या वै कदाचनेति वचनान्मलमासे ऽप्यशौचकालीनप्रथमतिथावेव कार्य्यमित्याह।

तन्न समीचीनम्—

तस्मिंश्च प्रकृते मासि कुर्य्याच्छ्राद्धं यथाविधि।
तथैवाभ्युदयं कार्य्यं नित्यमेकं हि सर्व्वदा॥

इति हारीतेन प्रकृतमास्येव श्राद्धविधानात्।

गर्हितः पितृदेवेभ्यः सर्व्वकर्म्मसु तं त्यजेत्।

इति गृह्यपरिशिष्टवचनाच्च।

सपिण्डीकरणादूर्द्ध्वं यत्किञ्चित् श्राद्धिकं भवेत्।
इष्टं वाप्यथवा पूर्त्तं तन्न कुर्य्यान्मलिम्लुचे॥

इति लघुहारीतेन यत्किञ्चिदित्यनेन सर्व्वेषां श्राद्धानां निषेधाच्च।

न च

नैहेताव विशेषेज्यामन्यत्रावश्यकाद्विधेः।

इति गृह्यपरिशिष्टेनासम्भवत्कालान्तरकाणां कर्म्मणां प्रतिप्रसवात् मलम्या इत्यनेनास्याप्यसम्भवत्कालान्तरकत्वादिति वाच्यम्।

विघ्नपतितश्राद्धस्य कृष्णैकादश्यां विधानेन सम्भवत्कालान्तरकत्वात् 'मलम्या वै कदाचनेति' निषेधस्तु स्वेच्छयाऽन्यतिथ्यनुष्ठान-

विषयः, अन्यथा रक्तादिपातेऽपि रात्रावपि शौचकालीनप्रथमतिथौ श्राद्धप्रसङ्गः स्यादित्यलं बहुना।

अत्राशौचान्तदिने यदि रक्तपातादिना विघ्नः स्यात्तदा—

श्राद्धविघ्ने समुत्पन्ने मृताहेऽविदिते*तथा।
एकादश्यां प्रकुर्व्वीत कृष्णपक्षे विशेषतः॥

इति लघुहारीतवचनादनन्तरकृष्णैकादश्यामेव कार्य्यम्। कपालाधिकरणन्यायेन प्रथमोपस्थितत्वादतिप्रसङ्गभयाद्वा अनन्तरकृष्णैकादश्या एव न्यायोपात्तत्वात्।

तत्रापि यद्यशौचान्तरं स्यात्तदा तदशौचे व्यतीते तु कार्य्यं पूर्व्ववचनाद्विघ्नान्तरे त्वन्यस्यामनन्तरकृष्णैकादश्यामेवेति एतच्च मृताहसम्बन्धिन्यावश्यकश्राद्ध एव न तु काम्यपार्व्वणपक्षिकादौ "नानुकल्पविधिः काम्ये" इति सर्व्वत्रतदधिकरणे दर्शितत्वात्।

शूद्रस्य तु त्रिंशद्दिवसाशौचमध्ये प्रथममासिकप्राप्तौ तच्छ्राद्धमनन्तरकृष्णैकादश्यामेव कार्य्यं न त्वशौचान्तदिने। आद्यैकोद्दिष्टादिसपिण्डीकरणान्तानां षोडशश्राद्धानां तदादितदन्तन्यायात् कृताद्यैकोद्दिष्टस्यैव मासिकश्राद्धेऽधिकारादशौचोत्तरकालकर्त्तव्याद्यश्राद्धाकरणकृताधिकाराभावरूपविघ्नेनैव बाधितस्य प्रथममासिकस्याशौचमध्ये प्राप्त्यभावेनाशौचबाधितत्वाभावादिति ध्येयम्॥

कृष्णैकादश्यामपि करणाशक्तौ द्वितीयमासिकदिने प्रथम-

---

* न द्दश्यते—मृताहाविदिते।

मासिकस्य विधानाभावादेव प्रसङ्गाभावात् तदादितदन्त-न्यायेनाक्रान्तप्रथममासिकस्य द्वितीयमासिकेऽधिकाराभावात् मासिकद्वयमेव कृष्णैकादश्यामेकत्र कार्य्यमिति प्राचीनविदुषां सम्मतम्।

मासिकं पतितं दृष्ट्वा मासिकेनैव कारयेत्।

इति मूर्खकल्पितवचनं विदुषामुपहसनीयत्वेन हेयमेव॥

अत्र लघुहारीतवचने विशेषतःपदोपादानात् आदित्यसंक्रमणं विशेषेणायनद्वयमितिवत् शुक्लैकादश्यामपि विघ्नपतितमृताहश्राद्धं कृष्णपक्षे तु प्रशस्तमन्यथा तदनर्थकं स्यादिति तीरभुक्तीयाः।

वस्तुतस्तु अविज्ञातमृतेऽमावस्यायां श्रवणदिवसे वा इति प्रचेतोवचनोक्तामावस्याश्रवणदिवसाभ्यामपि कृष्णैकादश्यां विशेषतः श्राद्धं प्रशस्तम्।

अतएव राजमार्त्तण्डे भोजराजः—

श्राद्धविघ्ने समुत्पन्ने मृतस्याविदिते दिने।

अमावस्यां प्रकुर्व्वीत वदन्त्येके मनीषिणः॥ इति॥

न तु शुक्लपक्षात् कृष्णपक्षे विशेषस्त इत्यर्थः—विधिद्वयकल्पना-गौरवात् वाक्यभेदापत्तेश्च। प्राधान्याद् विशेष्येणैकादशीपदेन सह विशेषणपदसम्बन्धस्य न्याय्यत्वाच्च। शुक्लैकादश्यां पतितश्राद्धप्रसङ्गे सर्व्वदेशीयाचारविरोधाच्च।

कुमारप्रसवेऽच्छिन्नायां नाड्यां यदा पित्राद्युपकारार्थं गुड़ादिद्रव्यं कश्चिदशौची ददाति तदा तत्प्रतिग्रहे न दोषः।

अशौचिनोऽपि तद्दाने नाशौचम्। गुड़ादिद्रव्यञ्च—गुड़-तिल हिरण्य भूमि चतुष्पद धान्य-घृत-वस्त्र तुरग-रथ-च्छत्र-च्छाग-मत्स्य-शयना-सनानि।

आदिपुराणे—

तत्र दद्यात् सुवर्णञ्च भूमिं गां तुरगं रथम्।
छत्रं छागञ्च मत्स्यञ्च शयनञ्चासनं गृहम्॥
जातश्राद्धे न दद्यात्तु पक्वान्नं ब्राह्मणेष्वपि॥

कूर्म्मपुराणे—

जाते कुमारे* तदहः कामं कुर्य्यात् प्रतिग्रहम्।
हिरण्य-धान्य-गो-वासस्तिलान्न-गुड़-सर्पिषाम्॥

अथ लवण-मधु-मांस-पुष्प-फल-शाक-काष्ठ-तृण-जल-दधि-दुग्ध-घृत-तैलौषध्यजिन-शक्तु-लाज-मोदक-तण्डुलादिषु तत्स्वाम्यनुमत्या स्वयं गृह्यमाणेषु नाशौचम्। क्रीतेषु पुष्पेषु अशौचिहस्तान्नेष्वपि न दोषः।

आदिपुराणे—

लवणं मधु मांसञ्च पुष्प-मूल-फलानि च।
काष्ठं लोष्ट्रं तृणं पर्णं दधि क्षीरं घृतं तथा॥
औषधं तैलमजिनं शुष्कमन्नञ्च नित्यशः।
अशौचिनां गृहाद् ग्राह्यं स्वयं पण्यञ्च मूलजम्॥

---

* ग पुस्तके—दद्यात्।

मूलं मूल्यं तेन जातं क्रीतमित्यर्थः। अशौचे सपिण्डाना-
मन्योऽन्यस्यान्नभक्षणे न दोषः।

यमः—

सूतके तु कुलस्यान्नं न दोषं मनुरब्रवीत्॥

अशौचे निवृत्ते त्वशौचकालोत्पन्नपापक्षयार्थं किञ्चिदवश्यं देयम्।

सम्वर्त्तः—

दद्याद्दाप्त परं सम्यक् विप्राऽध्यायात् धर्म्मवित्।
दानञ्च किञ्चिना देयमशुभात्तारकं हि तत्॥

---

## अथ बालाद्यशौचम् ।

कूर्म्मपुराणे—

अन्तर्दशाहे बालस्य यदि स्यान्मरणं पितुः ।
मातुश्च सूतकं तत् स्यात् पिता त्वस्पृश्य एव च ॥

जननाशौचकालाभ्यन्तरे यदि बालस्य मरणं भवति तदा-मातापित्रोर्जननाशौचापगमेन शुद्धिः, तत् स्वजात्युक्तं जननाशौचं न तु मरणाशौचमित्यर्थः । फलन्त्वशौचसङ्करे ज्ञेयम ॥

तथाच वृद्धमनुः—

दशाहाभ्यन्तरे बाले प्रमीते तस्य बान्धवैः ।
शावाशौचं न कर्त्तव्यं जन्माशौचं* विधीयते ॥ इति ।

अस्पृश्यश्च यावदशौचं पिताप्यङ्गास्पृश्यत्वंयुतः स्यात् । मातुरङ्गास्पृश्यत्वं स्थितमेव ।

तथा पराशरः—

अन्तःसूतके चेद्गोत्थानादाशौचं सूतकवत् ॥

अस्यार्थः-जननाशौचमध्ये यदि बालो म्रियेत तदा आ उत्थानात् अशौचकालपर्य्यन्तं सूतकवदङ्गास्पृश्यत्वयुक्तमशौचमित्यर्थः ।

न च आ उत्थानाद्दशमदिनपर्य्यन्तं मातुरेव सर्व्ववर्णानामङ्गास्पृश्यत्वयुक्तमशौचमन्येषां सद्यःशौचमिति शुद्धिविवेकव्याख्यानं युक्तम् ।

---

* ग पुस्तके—जन्माशौचम् ।

अन्तर्दशाहे बालस्य यदि स्यान्मरणं पितुः।
मातुश्च सूतकं तत् स्यात् पिता त्वस्पृश्य एव च॥

इति कूर्म्मपुराणवचनविरोधेन तदेकवाक्यतया उत्थानपदस्य स्वाशौचान्तार्थत्वं मातापित्रोः स्वजात्युक्ताशौचस्यैव युक्तत्वात्।

अतः शूद्रसूतिकाया मासाशौचं सिद्धं एतच्च हारलताकार-मृत्युञ्जय-बलभद्रादीनां प्रामाणिकानां सम्मतम्।

एतस्मिन्नेव विषये सपिण्डानामशौचाभावमाह शङ्खः—

बालस्त्वन्तर्दशाहे तु प्रेतत्वं यदि गच्छति।
सद्य एव विशुद्धिः स्यान्नाशौचं नैव सूतकम्॥

अशौचं मरणाशौचं सूतकं जननाशौचम्। किन्त्वत्र स्नानं पाकस्थालीत्यागश्च। अत्र विट्शूद्राणामेव व्यवस्था विशेषवचनाभावात्। मृतजाते तु विशेषाश्रवणात् सम्पूर्णं जननाशौचमेव सर्व्वेषां सपिण्डानामिति।

तथाच मिताक्षराधृतपारस्करः—

गर्भे यदि विपत्तिः स्याद् दशाहं सूतकं भवेत्॥

अशौचकालादूर्द्धं षण्मासपर्य्यन्तं बालमरणे किञ्चिद्गुणहीनानां सपिण्डानां सद्यःशौचं षण्मासादूर्द्धं द्विवर्षपर्य्यन्तं बालमरणे किञ्चिद्गुणहीनानां सपिण्डानामेकरात्रम्। द्विवर्षादूर्द्धं मासद्वयाधिकषड्वर्षपर्य्यन्तं बालमरणे त्रिरात्रम्। अतःपरं दशरात्रमिति।

याज्ञवल्क्यः—

आदन्तजन्मनः* सद्य आचूडान्नैशिकी स्मृता।

त्रिरात्रमाव्रतादेशाद्दशरात्रमतःपरम्॥

दन्तजन्मादि कालोपलक्षणम्।

अजातदन्तो मासैर्वा मृतः षड्......

वस्त्राद्यैर्भूषितं कृत्वा निक्षिपेत्तन्तु काष्ठवत्॥

इति वचने अजातदन्तो वा षड्भिर्मासैर्गतो वा इत्यभिधानात् षण्मासकालपरत्वम्।

तथा चोपनिषद् दन्तजन्म सप्तमे मासीति।

तथा—ऊनद्विवार्षिके विप्रे मृते शुद्धिस्तु नैशिकी।

इत्यभिधाय—

निवृत्तचूडके विप्रे त्रिरात्राच्छुद्धिरिष्यते।

इत्यभिधानात् चूड़ाकालस्य तृतीयवर्षोपलक्षकता एतस्माद्दचर्य्यात् व्रतस्यापि गर्भाष्टमकालोपलक्षकत्वम्।

यथा याज्ञवल्क्यः—

गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनयनमिति।

दशाहादूर्द्धं षण्मासपर्य्यन्तं बालमरणे निर्गुणयोर्मातापित्रोरेकरात्रं षण्मासादूर्द्धं द्विवर्षपर्य्यन्तं बालमरणे मातापित्रोस्त्रिरात्रम्।

तथा कूर्म्मपुराणम्—

अजातदन्त†मरणे पित्रोरेकाहमिष्यते।

---

* क पुस्तके—आदन्तजननात्।

† कं ख पुस्तकद्वये—अदन्तजात—।

दन्तजाते त्रिरात्रं स्यात् यदि स्यातां तु निर्गुणौ ॥
अत्यन्तनिर्गुणसपिण्डानामप्येवम् ।

कूर्म्मपुराणे—

अदन्तजन्ममरणं सम्भवेद्यदि सत्तमाः ।
एकाहञ्च* सपिण्डानां यदि तेऽत्यन्तनिर्गुणाः ॥

पैठीनसिः—

अकृतचूड़ानां त्रिरात्रम् । सगुणसपिण्डानां तु द्विवर्ष-पर्य्यन्तं सद्यःशौचम् ।

शङ्खलिखितौ—

बाले चातीते सद्यःशौचं सगुणानामात्रिवर्षात् ।

सगुणयोस्तु मातापित्रोः षण्मासपर्य्यन्तं सद्यःशौचम् । वर्षद्वय-पर्य्यन्तमेकरात्रम् ।

पारस्करः—

अद्विवर्षे प्रेते मातापित्रोरशौचमेकरात्रम् ।

क्षत्रिय-वैश्ययोर्विशेषमाह अङ्गिराः—

अनत्रिवर्षके विप्रे मृते शुद्धिस्तु नैशिकी ।
द्व्यहेन क्षत्रिये शुद्धि स्त्रिभिर्वैश्ये मृते तथा ॥
निवृत्तचूड़के विप्रे त्रिरात्राच्छुद्धिरिष्यते ।
तथैव क्षत्रिये षड्भिर्वैश्ये नवभिरेव च ॥
एतच्च गर्भाष्टमपर्य्यन्तमतःपरं स्वजात्युक्तं सर्व्वेषाम् ।

* ग पुस्तके—एकरात्रम् ।

यथा ऋष्यशृङ्गः—

यत्र त्रिरात्रं विप्राणामशौचं संप्रदिश्यते।
तत्र शूद्रे द्वादशाहः षट्च क्षत्रवैश्ययोः॥
अतःपरन्तु सर्व्वेषां स्वजात्युक्तं विनिर्द्दिशेत्॥

शूद्रेत्वयं विशेषः त्रिंशद्दिनादूर्द्धं षण्मासपर्य्यन्तं बालमरणे त्रिरात्रम्।

तथा शवद्वाशौचानुवृत्तौ शङ्खः—

*अनूढानान्तु कन्यानां तथा वै शूद्रजन्मनाम्॥

अनूढानां कन्यानां वाग्दत्तानामिति शुद्ध्यशौचे वाचस्पतिः। शूद्रजन्मनामजातदन्तानामित्यर्थः।

षण्मासादूर्द्धं द्विवर्षपर्य्यन्तं शूद्रमरणे पञ्चाहमशौचं द्विवर्षादूर्द्धं षड्वर्षपर्य्यन्तं द्वादशाहमशौचम्। षड्वर्षोपरि शूद्रमरणे मासाशौचमाह—

अङ्गिराः—

शूद्रे त्रिवर्षान्न्यूने तु मृते शुद्धिस्तु पञ्चभिः।
अत ऊर्द्ध्वं मृते शूद्रे द्वादशाहो विधीयते॥
षड्वर्षान्तमतीतो यः शूद्रः संम्रियते यदि।
मासिकन्तु भवेच्छौचमित्याङ्गिरसभाषितम्॥

त्रिवर्षो वर्त्तमानतृतीयवर्षस्तस्मादूनो समाप्तद्विवर्ष इत्यर्थः।

---

* पुस्तके—ऊढानां कन्यकानान्तु।

यच्च—

अनुपनीतो विप्रस्तु राजा चैवाधनुर्ग्रहात्।
अगृहीतप्रतोदस्तु वैश्यः शूद्रस्त्ववस्त्रयुक्॥
म्रियते यत्र तत्र स्यादशौचं त्र्यहमेव च।
द्विजन्मनामयं कालस्त्रयाणान्तु षडाब्दिकः॥
पञ्चाब्दिकस्तु शूद्राणां स्वजात्युक्तमतःपरम्॥

इति ब्रह्मपुराणवचने त्रयाणां द्विजातीनां द्विवर्षोपरि षड्वर्षपर्य्यन्तं त्रिरात्राभिधानं तद्वेदाग्निमतां सगुणानामेव। अतएव उपनयनात् परमेव धनुःप्रतोदयोर्ग्रहणविधानादुपनयनकालोऽपि षड्वर्षात्परं सगुणानां त्रयाणां द्विजातीनां युक्त इति ध्येयम्।

एवं शूद्रस्यापि यत्पञ्चाब्दपर्य्यन्तं त्रिरात्राभिधानं तदपि—

त्रिंशद्दिनानि शूद्रस्य तदर्द्धं न्यायवर्त्तिनः॥

इति याज्ञवल्कीयोक्तपञ्चदशाहाशौचि-सच्छूद्रपरमेवेति। सच्छूद्रास्तु श्रद्धया द्विजातिशुश्रुषा पञ्चमहायज्ञादि-शूद्रविहितक्रियावन्तः। एवंविधानां पञ्चदशाहाशौचिनां सच्छूद्राणामपि षोड़शवर्षोपरि अनूढ़भार्य्यशूद्रमरणे मासाशौचमाह शङ्खः:—

अनूढ़भार्य्यः शूद्रस्तु षोड़शात् वत्सरात् परम्।
मृत्युं समधिगच्छेत्तु* मासं तस्य च बान्धवाः॥
शुद्धिं समधिगच्छन्ति नात्र कार्य्या विचारणा॥

---

* ग पुस्तके समवगच्छेत्तु।

न च शूद्रमात्रस्यैव षड्वर्षोपरि ऊढ़भार्य्यमरणे मासाशौचं षोड़शवर्षपर्य्यन्तमनूढ़भार्य्यमरणे द्वादशाहं तदुपरि मासाशौचमिति शङ्खवचनस्यार्थ इति तीरभुक्तीयमतमुपादेयम्।

कथमङ्गिरोभ्यां षड्वर्षोपरि सामान्येन मासाशौचस्य विहितत्वात्। अस्मादुक्तरीत्या सम्भवति गत्यन्तरे तद्वचनस्य विषयसङ्कोचे प्रमाणाभावाच्च।

अनूढ़भार्य्यविशेषणस्वरसेन षोड़शवत्सरात् पूर्व्वं तन्मरणे द्वादशाहकल्पनया शङ्खवचनस्य स्वार्थहान्यस्वार्थकल्पनादोषप्रसङ्गाच्च इत्यलं बहुना।

वर्षद्वयाभ्यन्तरे कुमारस्य कन्यायाश्च मरणे भूमौ खननं कृत्वा स्थापितव्यं न कदाचित्प्रेतक्रिया अग्निदाहश्च कार्य्यः।

याज्ञवल्क्यः;—

जनद्विवर्षं निखनेन्न कुर्य्यादुदकं ततः॥

उदकमुपलक्षणं श्राद्धादिकमपि न कार्य्यम्। यदि तु द्विवर्षाभ्यन्तरे मोहादिना दाहः कृतस्तदा मातापित्रोः सपिण्डानाञ्च त्रिरात्रं ब्राह्मणस्य, एकादशाहं क्षत्रियाणां, द्वादशाहं वैश्यानां, विंशतिरात्रं शूद्राणामशौचम्।

तथाचादिपुराणम्—

अव्यतीतद्विवर्षन्तु प्रेतो यत्रापि दह्यते।
अतिमोहाभिभूतैश्च देशधर्म्मेण माऽऽहवात्॥
अशौचं ब्राह्मणानान्तु त्रिरात्रं तत्र विद्यते।
राज्ञामेकादशश्चैव वैश्यानां द्वादशाह्निकम्॥
अपि विंशतिरात्रेण शूद्राणान्तु भवेत् क्रमात्।

अत्र च पिण्डोदकदानं कार्य्यम्—

जातदन्तस्य वा कुर्य्युर्नाम्नि वापि कृते सति॥

इति मनुवचनात्।

# अथ स्त्र्याशौचम् ।

आदिपुराणम्—

आजन्मनस्तु चूड़ान्तं यत्र कन्या विपद्यते ।
सद्यःशौचं भवेत्तत्र सर्व्ववर्णेषु नित्यशः ॥
ततो वाग्दानपर्य्यन्तं यावदेकाहमेव हि ।
अतःपरं प्रवृद्धानां त्रिरात्रमिति निश्चयः ।
वाक्प्रदाने कृते तत्र ज्ञेयं चोभयतस्त्र्यहम् ॥
पितुर्व्वरस्य च ततो दत्तानां भर्त्तुरेव हि ।
स्वजात्युक्तमशौचं स्यात् सूतके मृतकेऽपि वा ॥

अस्यार्थः—

जननदिवसाद्वर्षद्वयपर्य्यन्तं कन्यामरणे सपिण्डानां सद्यःशौचं नित्यशः सगुणत्वनिर्गुणत्वेऽपीत्यर्थः, वत्सरद्वयोपरि वाग्दानपर्य्यन्तं सपिण्डानामेकाहम् अतःपरं अकृतवाग्दानावस्थातः परं प्रवृद्धानां वाग्दानेन प्राप्ताधिकाररूपाणां त्र्यहं अधिकारूपं व्यक्तीकरोति. वाक्प्रदान इति वाग्दाने कृतेऽकृतपाणिग्रह-संस्काराणां भर्त्तृपक्षे पितृपक्षे च त्रिरात्रं विवाहेन दत्तानां मरणे भर्त्तृपक्ष एवाशौचं स्वजात्युक्तं नतु पितृकुले इति ।

तथाच विष्णुः—

स्त्रीणां विवाहः संस्कारः संस्कृतासु स्त्रीषु नाशौचं पितृकुले इति ।

एवञ्च —

उत्कृष्टायाभिरूपाय वराय सदृशाय वै ।
अप्राप्तामपि तां तस्मै कन्यां दद्याद्यथाविधि ॥

इति मनुना-अप्राप्तकालाया अपि विवाहविधानात् । कदाचि-द्वालावस्थायां पाणिग्रहणे सति संस्कारानन्तरं पितृकुले अशौचा-भावात् भर्त्तृकुल एव सम्पूर्णाशौचमेवेति ध्येयम् ॥

यत्र तु वाग्दानं न स्यात् तत्र विवाहपर्य्यन्तमेकाहमशौचम् । कूर्म्मपुराणे—

स्त्रीणामसंस्कृतानान्तु वाक्प्रदानात् परं सदा ।
सपिण्डानां त्रिरात्रं स्यात् संस्कारे भर्त्तुरेव हि ॥
अहस्त्वदत्तकन्यानामशौचं मरणे स्मृतम् ॥

याज्ञवल्क्यः—

अहस्त्वदत्तकन्यासु वालेषु च विशोधनम् ॥

अतएव—

दत्तानां चाप्यदत्तानां कन्यानां कुरुते पिता ।
चतुर्थेऽहनि तास्तेषां कुर्व्वीरन् सुसमाहिताः ॥

इति वचने दत्तानामूढ़ानां अदत्तानां वाग्दत्तानां चतुर्थेऽहनि पिता अधिकारी श्राद्धं कुर्य्यादिति-श्राद्धविवेके हारलतायाञ्च व्याख्यातम् । अतएव प्रदत्तानां त्रिरात्रमिति केषाञ्चिदज्ञानां हेयमेव ।

न च वाग्दानस्य कालपरत्वं दातुरिच्छाधीनत्वेन वाग्दान-कालनियमाभावात् । एवञ्च यदा वाग्दत्ता वा दत्ता वा कन्या

कर्म्माधिकारिणी स्यात्, तदा त्रिरात्राशौचं कृत्वा चतुर्थेऽहनि पित्रोः कर्म्म कुर्य्यात्।

अकृतवाग्दाना तु एकरात्रमशौचं कृत्वा परेऽहनि माता-पित्रोः कर्म्म-कुर्य्यात्।

तथा ऋष्यशृङ्गः—

अपुत्रस्य तु या पुत्री सापि पिण्डप्रदा भवेत्।
तस्य पिण्डान् दशैतान् वा एकाहेन च निर्व्वपेत्॥

इति हारलताकारः।

कर्म्मानधिकारिण्यास्त्वदत्ताया वा कन्यायाः पितृमातृमरणे "यस्य यावदशौचं तस्मिन्मृते तस्य तावत्" इति न्यायात् मातृबन्धौ गुरौ मित्रे इति जावालवचनाच्च गुरुत्वेनैकरात्रमिति।

केचित्तु—

श्रावाशौचं त्रिरात्रं स्यान्महागुरुनिपातने।
दुहितॄणान्तु दत्तानां सर्व्ववर्णेष्वयं विधिः॥

इति वचनं पठित्वा व्यवस्थापयन्ति। तदमूलं। पाणिग्रहणानन्तरं दत्तयाः पित्रोर्महागुरुत्वाभावात् समूलत्वेऽपि वाग्दत्ताविषय-मिति।

अत्र च—

जननाशौचमध्ये जातमृतायां बालायां सपिण्डवत् पितुरपि अशःशौचमाजन्मनस्तु चूडान्तमिति वचने आजन्मन इत्यु-पादानादिति केचित्।

प्राचीनास्तु—

आजन्मनस्तु चूड़ान्तं यत्र कन्या विपद्यते ॥

इति वचने आजन्मन इत्यस्य ज्ञातिपरत्वेनैवोपपत्तेः येन केनापि- लिङ्गेन संख्यया कालेन वावश्यकं निर्देशः कर्त्तव्य इति लिङ्गं संख्या कालः स्वतन्त्रमिति न्यायेन अन्तर्दशाहे बालस्य इति कूर्म्म- पुराणे पुंलिङ्गनिर्द्देशस्याकिञ्चित्करत्वात्—

अन्तः सूतके चेदोत्थानादाशौचं सूतकवदिति पारस्करवचनेन सामान्योपदेशाच्च अशौचमध्ये कन्यामरणे पुत्रमरणवत्पितुरङ्गा- स्पृश्यत्वयुक्तशेषदिनव्यापकमशौचम् । मातुस्तु सर्व्वथैव मासेन स्त्रीजननीमिति पैठीनसिवचनात्मासेनैव शुचिः । अन्यथा पितृ- वन्मातुरपि सद्यःशौचं स्यादिति वदन्ति ।

वस्तुतस्तु—पितुर्व्वरस्य चेति वक्ष्यमाणोपसंहारादाजन्मनस्तु चूड़ान्तमित्यपि पितृपरमिति युक्तमुत्पश्यामः ।

मृतजातायान्तु बालायां विशेषाश्रवणात् सर्व्वेषामेव सम्पूर्णन्तु जननाशौचम् ।

निर्गुणस्य सोदरभ्रातुर्व्विशेषमाह कूर्म्मपुराणे व्यासः—

आदन्तात् सोदरे सद्य आचूड़ादेकरात्रकम् ।
आप्रदानात्त्रिरात्रं स्याद्दशरात्रमतः परम् ॥

अतःपरं पतिकुले विवाहात् परमित्यर्थः । विकाहेन दत्तायाः कन्यायाः पितृप्रधानगृहे यदि प्रसवमरणे स्यातां तदा भ्रात्रा- दीनामेकरात्रं मातापित्रोस्त्रिरात्रम् ।

तथाचादिपुराणम्—

दत्ता नारी पितुर्गेहे म्रियते सूयतेऽथवा।

स्वमशौचं चरेत् सम्यक् पृथक्स्थानव्यवस्थिता॥

तद्बन्धुवर्गस्त्वेकेन शुध्येत्तु जनकस्त्रिभिः॥

पृथक्स्थाने व्यवस्थिता पितुरप्रधानगृहे प्रसवे स्वमशौचं भर्त्तृसम्बन्ध्यशौचं नार्य्येव चरेत् नतु पित्रादिः। म्रियत इत्यस्य यथायोग्यमन्वयः।

पितुः प्रधानगृहे तु प्रसवमरणे बन्धुवर्गस्यैकरात्रं पितुस्त्रिरात्रं बन्धुवर्गः सहवासी भ्रातृ-भ्रातृपुत्र-पितृव्यादिः। जनकपदेन जनन्यपि-ग्राह्या जनककर्त्तृत्वाविशेषात्। हारलताशुद्धिविवेकयोरप्ययमेव स्वरसः। वाचस्पतिमिश्रोऽपि 'पृथक्स्थाने स्वं ज्ञातिरेवाचरेत् न पित्रादिरिति व्याचख्यौ। स्वं स्वकुलं भर्त्तृकुलमेवेति कुवेर-वलभद्रौ।

तथाच कल्पतरुलिखितं व्यासवचनम्—

दत्ता नारी पितुर्गेहे प्रधाने सूयते यदा।

म्रियते वा तदा तस्याः पिता शुध्येत्त्रिभिर्दिनैः॥

मनुः—

विवाहितापि चेत् कन्या म्रियते पितृवेश्मनि।

तस्यांस्त्रिरात्राच्छुध्यन्ति बान्धवा नात्र संशयः॥

अत्र स्त्र्यशौचे* आदिपुराणे सर्व्ववर्णेष्विति श्रवणात् शूद्रस्यापि ब्राह्मणतुल्यैव व्यवस्था।

---

* ग पुस्तके—तत्रस्त्र्यशौचे।

## अथ विदेशस्थाशौचम् ।

बृहस्पतिः—

अन्यदेशमृतं ज्ञातिं श्रुत्वा पुत्रस्य जन्म च ।
अनिर्गते दशाहे तु शेषाहोभिर्विशुध्यति ॥

तथा विष्णुः—

श्रुत्वा देशान्तरस्थो जननमरणे अशौचशेषेण शुद्ध्येत्* ।
जननाशौचकाले व्यतीते यदि श्रूयते तदा सपिण्डानामशौचाभाव एव ।

यथा देवल

नाशौचं प्रसवस्यास्ति व्यतीतेषु दिनेष्वपि ॥

अत्रैव पितुः पुत्रजन्मश्रवणे सचेलस्नानमात्रमाह मनुः—

निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च ।
सवासा जलमाप्लुत्य शुद्धो भवति मानवः ॥

निर्दशं ज्ञातिमरणमित्यशौचाभावपरम् । अशौचकालातिक्रमे संवत्सरमध्ये सपिण्डमरणश्रवणे त्रिरात्रं संवत्सरोपरि तु स्नानमात्रम् ।

तथा मनुः—

अतिक्रान्ते दशाहे तु त्रिरात्रमशुचिर्भवेत् ।
संवत्सरे व्यतीते तु स्पृष्ट्वैवापो विशुध्यति ॥

दशाह इति संपूर्णाशौचोपलक्षणम् ।

---

* ख पुस्तके श्रुत्वा देशान्तरस्थे—शुद्धिः ।

अत्र तु प्रथमसंवत्सरोपरि पितृमातृमरणश्रवणे एकाहमाह देवलः—

अघाहःसु व्यतीतेषु ज्ञातिश्चेच्छ्रूयते मृतः।
तत्र त्रिरात्रमाशुच्यं भवेत् संवत्सरान्तरे॥
ऊर्द्ध्वं संवत्सरादाद्यादबन्धुश्चेच्छ्रूयते मृतः।
भवेदेकाहमेवात्र तच्च संन्यासिनां न तु॥
बन्धुर्माता पिता चैव स्त्रीणां च पतिरेव च॥

आद्यादिति विशेषणात् द्वितीयसंवत्सरोपरि तु स्नानमात्रेण शुद्धिः।

संवत्सरमध्ये सपिण्डमरणश्रवणे चतुःपञ्चाहाशौचिनोः पक्षिणीमाह गोतमः—

श्रुत्वा*चोर्द्ध्वं दशम्याः पक्षिणीं, व्याप्यांशौचं कुर्य्यादितिश्शेषः।

त्र्यहाशौचिनां पक्षिण्यशौचिनाञ्च एकाहमाह-विष्णुः—

अतीते अशौचे संवत्सरान्ते एकरात्रं†। अन्ते मध्य इत्यर्थः।

अत्र कश्चिद्वेदाग्निनिबन्धनत्र्यहाशौच—ब्राह्मणविषयमेवेदं विष्णुवचनं समानोदकव्याघ्रादिहतादीनान्तु त्र्यहाशौचिना—मशौचबहिःश्रवणेऽपि त्र्यहाशौचमेव विशेषवचनाभावादित्याह।

तदयुक्तं विशिष्टत्र्यहाशौचिपरत्वे प्रमाणाभावात् विनि-

* ग पुस्तके—अर्द्धात्।
† क पुस्तके—एकरात्रेण।

गमनाविरहेण विष्णुवचनस्य सकलत्र्यहाशौचिपरत्वात्। अशौच-बहिःश्रवणे सर्व्वत्रैवाशौचह्रासस्य दर्शनात् सम्भनोदकादि-स्थलेऽपि तथैव न्याय्यत्वाच्च ह्रासं प्रति स्वाशौचदिवातिक्रमस्यैव कारणत्वाच्च।

तथा एकाहाशौचिनां सद्यःशौचमाह गोतमः—

बालदेशान्तरितप्रव्रजितानां सद्यःशौचम्। यत्र तद्दिने मृतो न श्रूयते तद्देशान्तरम्।

विगतन्तु विदेशस्थं शृणुयाद्यो ह्यनिर्दशम्।
यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत्॥

इति मनुवचनादत्र—

शुद्धिविवेकः—

दशाहादूर्द्धं षण्मासपर्य्यन्तं त्रिरात्रं षण्मासादूर्द्धं नवममास-पर्य्यन्तं गोतमोक्तं पक्षिण्यशौचं तदूर्द्धं संवत्सरपर्य्यन्तं विष्णूक्त-मेकाहमिति। तन्मन्दम्—

अघाहःसु व्यतीतेषु* ज्ञातिश्चेच्छ्रूयते मृतः।
तत्र त्रिरात्रमाशुच्यं भवेत्संवत्सरान्तरे॥

इति देवलेन संवत्सरं व्याप्यैव त्रिरात्रविधानात्।

श्रुत्वा चोर्द्ध्वं दशम्याः पक्षिणीमिति गोतमेन-व्यतीतेऽशौचे एक-रात्रमिति विष्णुना च अशौचानन्तरमेव पक्षिण्येकाहयोर्विधा-

---

* ग पुस्तके—अशौचाहःस्वतीतेषु बन्धु—।

नाम्, तस्मादुक्तैव हारलताकारादिसम्मता व्यवस्था साधीयसीति। वर्णचतुष्टयस्यैव व्यवस्था विशेषाग्रहणात्।

यथा शङ्खः—

अतीते सूतके स्वे स्वे त्रिरात्रं स्यादशौचकम्।
संवत्सरे व्यतीते तु सद्यःशौचं विधीयते॥

स्वे स्वे इति वीप्सा वर्णचतुष्टयव्याप्त्यर्था। सूतकपदं मरणाशौचपरं नाशौचं प्रसवस्यास्तीति पूर्व्वोक्तदेवलवचनाच्च।



## अथाशौचसङ्करः।

कूर्म्मपुराणे—

यदि स्यात् सूतके सूतिर्मृतके वा मृतिर्भवेत्।
शेषेणैव भवेच्छुद्धिरहःशेषे द्विरात्रकम्॥
मरणोत्पत्तियोगे तु मरणाच्छुद्धिरिष्यते॥

अस्यार्थः—सपिण्डजननाशौचमध्ये अपरस्मिन् सपिण्डजनने पूर्व्वजननाशौचशेषेण शुद्धिः। सपिण्डमरणाशौचद्वयेऽप्येवम्। एतच्च नवमदिनपर्य्यन्तम्। दशमदिने तु समानजातीयसम्पूर्णाशौचद्वयसन्निपाते दशमद्दिनादधिकेन दिनद्वयेन शुद्धिः। मरणदशाहशेषे जनने सति न दिनद्वयेन किन्तु मरणेनैव शुद्धिरित्याह मरणोत्पत्तियोगेत्विति।

तथा विष्णुः—

जनने यद्यपरं जननं भवति तदा पूर्व्वेण शुद्धिः। रात्रिशेषे दिनद्वयेन प्रभाते दिनत्रयेण मरणाशौचे ज्ञातिमरणेऽप्येवम्।

रात्रिशेषे दिनद्वयेनेति अहःशेषे द्विरात्रकमित्यस्य समानार्थम्। अत्र रात्रिशेषशब्दः सर्व्ववर्णानामशौचान्तदिनपरः। रात्रीणामशौचाहोरात्राणां शेषेऽहोरात्र इत्यर्थः। प्रभाते एकादशदिनस्यारुणोदयवेलायां सूर्य्योदयात्पूर्व्वं समानाशौचपाते दशमदिनत्रयेण शुद्धिः। एतच्च संपूर्णाशौचद्वयसन्निपात एव बोद्धव्यम् नत्वसंपूर्णाशौचद्वयेऽपि—

बौधायनसूत्रे—अथ यदि दशरात्राः सन्निपतेयुराद्यं दशरात्र-

मशौचमानवमाहिवसादित्यत्र दशरात्रपदश्रवणादानवमादित्युक्तत्वाच्च।

एवञ्च जननान्तरे जनने मरणान्तरे मघवृद्धिमदशौचाभ्यन्तरे च समानजातीयाशौचे सति रात्रिशेषे दिनद्वयेन प्रभाते च दिनत्रयेण इति प्रवर्त्तत एव।

अत्र नवमदिनाभ्यन्तरे उत्पन्नस्याशौचस्य दशमदिने श्रवणेऽपि पूर्व्वेणैव शुद्धिर्नतु दिनद्वयं वर्द्धते दशरात्राः सन्निपतेयुरिति बौधायनवचने यदि स्यात् सूतके सूतिरिति कूर्म्मपुराणवचने चाशौचान्तरोत्पत्तेरेव विहितत्वात् नतु श्रवणस्य श्रवणपरत्वे लक्षणाप्रसङ्गात्।

समानकालव्यापि-सपिण्डजननाशौचसपिण्डमरणाशौचयोः सन्निपाते मरणाशौचेन शुद्धिः।

मरणोत्पत्तियोगे तु मरणाच्छुद्धिरिष्यते।

इति कूर्म्मपुराणवचनात्।

## अथाघवृद्धिमदशौचम्।

सपिण्डमरणाशौचकालभागद्वयोपरि पितृमातृमरणं स्त्रियाश्च भर्तृमरणं सपिण्डजनन-स्वकन्याजननयोरशौचकालभागद्वयोपरि स्वपुत्रजननाशौचं भवति तदा तेनैव परभाविनाऽघवृद्धिमदशौचेन शुद्धिः। अघवृद्धिमज्जननमरणसन्निपाते तु सर्व्वथा मरणेनैव शुद्धिः।

एतत् सर्व्वं व्यक्तमाह आदिपुराणे व्यासः—

आद्यं भागद्वयं यावत् सूतकस्य तु सूतके।
द्वितीये पतिते चाद्यात् सूतकात् शुद्धिरिष्यते॥
अत ऊर्द्धं द्वितीयात्तु सूतकाच्च शुचिः स्मृतः।
एवमेव विचार्य्यं स्यात् मृतके मृतकान्तरे॥
मृतकस्यान्तरे यत्र सूतकं प्रतिपद्यते।
सूतकस्यान्तरे वाथ मृतकं यत्र विद्यते॥
मृतस्यान्ते भवेच्छुद्धिः सर्व्ववर्णेषु नित्यशः॥

तथाच शङ्खः—

परतः परतः शुद्धिरघवृद्धौ विधीयते।
स्याच्चेत्पञ्चतमादह्नः पूर्व्वेणैव विशुध्यति॥

सपिण्डजननात् स्वकन्याजननाच्च स्वपुत्रजननस्याङ्गास्पृश्यत्व-वत्त्वेनाघवृद्धिमत्त्वम्। तथा सपिण्डमरणात् पितृमातृमरणस्य स्त्रियास्तु पतिमरणस्य तेषां महागुरुत्वेनाऽघवृद्धिमत्त्वम्। परतः शेषाहेऽघवृद्धिमदाशौचे सति परतः पराशौचादघवृद्धिमत एव

उपदेशात् [*तदभावे बाधकस्यैव बाधितत्वात् यथा पुत्त्रोत्पत्तौ पूर्व्वस्य मरणेऽनुजजन्मनिबन्धनमशौचमव्याहतमिति प्राचीनाचारोऽपीदृश एव।

मृतस्य मातापित्रोस्तु मृतस्यैव बालस्य जननाशौचेनैव शुद्धिः-तयोरेवाङ्गास्पृश्यत्वयुक्तजननाशौचविधानात्। श्रतेव यदि मरणाशौचं स्यात् तदानेनैव मरणाशौचेन शुद्धिः।

मातुश्च सूतकं तत् स्यादिति कूर्म्मपुराणवचनेन—

दशाहाभ्यन्तरे बाले प्रमीते तस्य बान्धवैः।
शावाशौचं न कर्त्तव्यं जन्माशौचं विधीयते॥

इति ब्रह्मपुराणवचनेन बालमरणस्य जन्माशौचत्वप्रतिपादनात् मरणाशौचस्याङ्गास्पृश्यत्ववत्त्वेन स्नानशान्त्यादिप्रयत्नापनेयत्वेन च ततोऽपि गुरुत्वाच्च। (?)]

अथ यदि रात्रिशेषे दिनद्वयेनेति वर्द्धितेऽशौचेऽशौचान्तरं स्यात् तदा वर्द्धितेनैव पूर्व्वाशौचेन शुद्धिः, द्वितीयाशौचेन पूर्व्वाशौचस्य वर्द्धितत्वेन गुरुत्वेन—

सूतके च समुत्पन्ने द्वितीये समुपस्थिते।
द्वितीये नास्ति दोषस्तु प्रथमेनैव शुध्यति॥

इति यमवचने द्वितीयाशौचस्य स्वातन्त्र्याभावप्रतिपादनाच्च। अन्यथा प्रक्रताशौचान्तत्वाभावात् शय्यादानवृषोत्सर्गादिकं न स्यात्।

— —

* पुस्तके—[ ] चिह्नितांशोऽधिकः।

एवञ्च समानाशौचद्वयसन्निपाते पूर्व्वाशौचस्य शेषार्द्धे मध्याशौचस्य पूर्व्वार्द्धेऽघहविमदशौचे सति मध्याशौचस्य बाधितत्वेनाल्पकालव्यापित्वात् पूर्व्वाशौचस्यैव बलवत्तया परतः परतः शुद्धिरिति व्यवतिष्ठत एव ।

एवञ्च पूर्व्वाशौचाज्ञाने तन्मध्यपतितस्य पराशौचस्य ज्ञातस्य शेषेऽतीतपूर्व्वाशौचज्ञाने सति पराशौचेनैव शुद्धिः—अतीतस्य यथाकाले ज्ञानाभावादनिमित्ततया बाधकत्वाभावात् ।

अत्र च सङ्कराशौचे सर्व्ववर्णेषु नित्यश इति आदिपुराणवचनश्रवणात् विशेषवचनाभावाच्च शूद्रस्यापि ब्राह्मणतुल्यैव व्यवस्था ।

---

## अथ गर्भस्रावाशौचम् ।

आदिपुराणे—

षण्मासाभ्यन्तरं यावत् गर्भस्रावो भवेद्यदि ।
तदा माससमैस्तासां दिवसैः शुद्धिरिष्यते ॥
अत ऊर्द्धं स्वजात्युक्तमशौचं तासु विद्यते ।
सद्यःशौचं सपिण्डानां गर्भस्य पतने सति ॥

तासामिति—बहुवचनं वर्णचतुष्टयस्त्रीणां ग्रहणम् । षण्मास-पर्य्यन्तं गर्भस्रावे स्त्रीणामेवाशौचं न पुंसाम् । सप्तमाष्टममासीयगर्भे जातमृते मृतजाते वा स्त्रीणां सम्पूर्णाशौचं, सपिण्डानां सद्यःशौचं अत्यन्तनिर्गुणसपिण्डानामेकरात्रं यथेष्टाचरणशीलानां त्रिरात्रम् ।

तथा कूर्म्मपुराणे—

अर्व्वाक् षण्मासतः स्त्रीणां यदि स्याद् गर्भसंस्रवः ।
तदा माससमैस्तासामशौचं दिवसैः स्मृतम् ॥
अत ऊर्द्धन्तु पतने स्त्रीणां स्याद्दशरात्रकम् ।
सद्यःशौचं सपिण्डानां गर्भस्रावाच्च वा ततः ॥
गर्भस्तु*तावदहोरात्रं सपिण्डेऽत्यन्तनिर्गुणे ।
यथेष्टाचरणे ज्ञातौ त्रिरात्रमिति निश्चयः† ॥

---

* ग पुस्तके—च्युतौ । मूलपुस्तके—च्युतात् ।

† ग पुस्तके—निर्णयः ।

अत ऊर्द्धं षण्मासादूर्द्धं दशरात्रमिति स्वजात्युक्ताशौचोपलक्षणं सपिण्डानां षण्मासादूर्द्धं सद्यःशौचविधानात् षण्मासात् पूर्व्वमशौचाभाव एव।

जातमृते मृतजाते वा कुलस्य त्रिरात्रमिति हारीतवचनमपि सप्तमाऽष्टममासीयगर्भपाते यथेष्टाचरणशीलज्ञातिविषयम्।

यथेष्टाचरणशीलत्वञ्च सर्व्वाशित्वे सर्व्वविक्रयित्वे सति विहितकर्म्मानुष्ठानशीलत्वम्।

यदा तु सप्तमाष्टममासीयो गर्भः पतितो दैववशाज्जीवति तदा सपिण्डानामपि सम्पूर्णाशौचम्। द्वितीयादिदिने मृते तु पूर्व्वोक्तबालाद्यशौचविषयत्वेन मातापित्रोरुक्तास्पृश्यत्वयुक्तं सम्पूर्णाशौचं सपिण्डानान्तु सद्यःशौचमेव।

प्रथमदिने जातमृते तु पितुरपि सद्यःशौचम्—

स्त्रीणान्तु पतितो गर्भः सद्योजातो मृतोऽथवा।
वस्त्राद्यैर्भूषितं कृत्वा निक्षिपेत्तन्तु काष्ठवत्॥
खनित्वा शनकैर्भूमौ सद्यःशौचं विधीयते।

इत्यादिपुराणवचने सद्योजातमृतस्य सद्यःशौचविधानात्। मातुस्तु पूर्व्वोक्तकूर्म्मपुराणवचनात् सम्पूर्णमेव। अत्यन्तनिर्गुणसपिण्डानामेकरात्रं यथेष्टाचरणानां त्रिरात्रमित्यपि प्रथमदिनमृतविषये बोद्धव्यम्।

द्वितीयमासे विशेषमाह मरीचिः—

गर्भस्रुत्यां यथामासमचिरे तूत्तमे त्रयः।
राजन्ये च चतूरात्रं वैश्ये पञ्चाहमेव च॥

षष्टाहेन तु शूद्रस्य शुद्धिरेषा प्रकीर्त्तिता।

अस्यार्थः—गर्भस्रुत्यां यथामासमिति पूर्व्वलिखितादिपुराणवचन समानविषयम्। अचिरे द्वितीयमासीये गर्भस्रुते उत्तमे ब्राह्मणजातौ त्रयो दिवसा अशौचकालः। क्षत्रिये चतुर्दिनं वैश्ये पञ्चदिनं शूद्रस्याष्टौ दिवसाः।

यदत्र माससंख्येयदिवसातिरिक्तमेकरात्रं ब्राह्मणस्य, द्विरात्रं क्षत्रियस्य, त्रिरात्रं वैश्यस्य, षड्रात्रं शूद्रस्येत्युक्तं तद्दैवपित्र्यकर्म्माधिकारार्थम्। एतदपि द्वितीयमासात् प्रभृति षण्मासपर्य्यन्तं माससंख्यदिनातिरिक्तं यथावर्णमेकरात्रादिकं दैवपित्र्यकर्म्माधिकारार्थं बोद्धव्यम्।

प्रथममासे तु गर्भनिर्णयाभावेन रजोऽविशेषत्वात रजस्वलावत् शुद्धिः।

अतएव हारीतः—

गर्भपतने स्त्रीणां त्रिरात्रं माधीयो रजोऽविशेषत्वादिति।

अथ पतितगर्भस्य प्रतिपत्तिमाह आदिपुराणे—

'स्त्रीणां तु पतितो गर्भः सद्योजातो मृतोऽथवा।
अजातदन्तो मासैर्व्वा मृतः षड्भिर्गतैर्व्वहिः॥
वस्त्राद्यैर्भूषितं कृत्वा निक्षिपेत्तन्तु काष्ठवत्।
खनित्वा शनकैर्भूमौ सद्यःशौचं विधीयते॥

स्त्रीणां सप्तमाष्टममासीयः पतितो गर्भो मृतजातो जीवजातो वा सद्य एव मृतः अनुत्पन्नदन्तो वा षण्मासाभ्यन्तरे मृतः

षण्मासैर्गतैर्वा सप्तममासादौ मृतस्तं भूमौ निक्षिप्य सद्यःशौचं कर्त्तव्यमिति।

एतच्च षण्मासात् परं सद्यःशौचं सगुणानामेवेति बालाद्यशौचे उक्तमेव।

अत्र प्रसङ्गात् रजस्वलाशुद्धिर्निरूप्यते।

रजस्वला चोपरते रजसि चतुर्थदिने स्वामिनिमित्तं शुद्धा दैवपित्र्यकर्म्मणि तु पञ्चमदिन एव।

मनुः—

रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला।
साध्वी शुद्धा स्यादित्यर्थः। चतुर्थदिने तु स्नानम्॥

हारीतः—

शुद्धेऽस्तमिते सन्ध्यायां वा निशायां क्षितिशायिनी।
रजस्वला चतुर्थेऽह्नि स्नात्वा शुद्धिमवाप्नुयात्॥

उपरत इति विशेषणात् रजःस्थितौ चतुर्थदिनेऽपि न शुद्धेत्यर्थः।

अङ्गिराः—

साध्व्याचारा न तावत् स्त्री रजो यावत् प्रवर्त्तते।
वृत्ते रजसि साध्वी सा गृहकर्म्मणि चेन्द्रिये॥

वृत्ते अतीते ऐन्द्रिये मैथुने।

शातातपः—

भर्त्तुः शुद्धा चतुर्थेऽह्नि अशुद्धा दैवपैत्र्ययोः।
दैवे कर्म्मणि पैत्रे च पञ्चमेऽहनि शुध्यति॥

भर्तुर्दृष्टार्थकर्मापि अर्पणे च यदा न तु मैथुने।

चासामाद्यायतनञ्च निन्दितैकादशी च या।

इति मनुवचनेन निषिद्धत्वात्।

तथा मिताक्षरालिखितमत्रिवचनम्—

रजस्वला यदि स्नाता पुनरेव रजस्वला।

अष्टादशदिनादर्व्वागशुचित्वं न विद्यते॥

एकोनविंशतेरर्व्वागेकाहं स्यात्ततो द्व्यहम्।

विंशप्रभृत्युत्तरेषु त्रिरात्रमशुचिर्भवेत्॥ इति॥

वशिष्ठः—

रजस्वला त्रिरात्रमधःशयीत नाप्सु स्नायात् न दिवा स्वप्यात् नाग्निं स्पृशेत् नापि अधन्यजं न मांसमश्नीयात् न ग्रहं निरीक्षेत न हसेत् न किञ्चिदाचरेत्।

अप्सु निमज्ज्येत्यर्थः। अधन्यजः शूद्रः, ग्रहः सूर्यादिः। न किञ्चित् दैवकार्य्यं लेपनादिगृहकार्य्यमपि सर्व्वं नाचरेदित्यर्थः।

अङ्गिराः—

आतुरा तु यदा नारी रजसा मलिनीकृता।

चतुर्थेऽहनि संप्राप्ते ताञ्च स्पृष्ट्वा त्वनातुरा॥

दशैकादशवाराञ् वा स्नानं कुर्य्यात् पुनःपुनः।

एवं तस्या विशुद्धिः स्यात् परिवर्त्तितवाससः॥

रजस्वला तु या नारी अन्योन्यमुपसंस्पृशेत्।

सवर्णे स्वेकरात्रेण द्विरात्रमसवर्णके॥

उत्तमवर्णस्पर्शे तु स्नानमात्रम्।

विष्णुः—

अधिकवर्णां रजस्वलां स्पृष्ट्वा स्नात्वाऽश्नीयात्।

मनुः—

रजस्वला तु संस्पृष्टा श्वाद्विजम्बूकवायसैः।
निराहारा भवेत्तावत् यावत् कालेन शुध्यति॥

बृहस्पतिः—

पतितान्त्यश्वपाकेन संस्पृष्टा तु रजस्वला।
प्रथमेऽह्नि त्रिरात्रं स्याद् द्वितीये त्र्यहमाचरेत्॥
अहोरात्रं तृतीये तु चतुर्थे नक्तमेव च॥

## अथ सपिण्डाद्याशौचम्।

बृहस्पतिः—

दशाहेन सपिण्डास्तु शुध्यन्ति प्रेतसूतके॥
त्रिरात्रेण सकुल्यास्तु स्नात्वा शुध्यन्ति गोत्रजाः॥

प्रेतसूतके इति मरणे जनने चेत्यर्थः—

एतच्च याद्दृशवयस्कसपिण्डमरणे सम्पूर्णाशौचं ताद्दृशवयस्कस्यैव समानोदकस्य मरणे त्रिरात्रं विधीयते तेन बालमरणाशौचं समानोदकानां नास्ति विशेषवचनाभावात्। तथा व्याघ्रादिहतेषु समानोदकानामपि त्रिरात्रं अविशेषेण बृहस्पतिना त्रिरात्राभिधानात् यथा—व्याघ्रादिहतानां मातुलादीनां पक्षिण्याद्याशौचमेव विशेषाभावादिति।

सपिण्डतोक्ता मत्स्यपुराणे—

लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः।
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम्॥

लेपभाज इत्यादिना हेतुमुपन्यस्य फलमाह तेषामिति तेषां सपिण्डानां पिण्डलेपदस्य पिण्डलेपभागिनां ससन्ततीनां चत्वाच्च सापिण्ड्यं साप्तपौरुषं परस्परनिष्पाद्यतया सप्तसु पुरुषेष्ववस्थितम्। अत्रैकपिण्डस्वधानामिति वक्ष्यमाणमनुवचनात् संसन्ततित्वलाभः।

अयमर्थः—पिण्डः पिण्डलेपसम्बन्धः तेन सह वर्त्तमानाः

'सपिण्डाः । स च सम्बन्धः साक्षात् परम्परयापि । तेषां समानां पिण्डलेपदातृत्वभोक्तृत्वसम्बन्धः साक्षात् सन्ततीनान्तु पिण्ड-लेपयोस्तुल्यसम्प्रदानकत्वसम्बन्धः परम्परयेति । लेपसम्बन्धात् पिण्डोऽपि 'पार्व्वणपिण्ड एव सोऽपि स्वगोत्रजानामेव न तु मातामहादीनां पिण्डाद्या इत्यभिधानात् लेपसाहचर्य्याच्च ।

अतएव शङ्खलिखितौ—

सपिण्डता तु सर्व्वेषां गोत्रतः साप्तपौरुषी ।

पिण्डश्चोदकदानञ्च शौचं चैव तदानुगम् ॥

सर्व्वेषां वर्णानां 'गोत्रतो गोत्रैक्ये सतीत्यर्थः, तान् पुरुषान् आ समन्तादनुगच्छतीत्यर्थः ।

एवञ्च वृद्धप्रपितामहपितामहस्य यो भ्राता तेन तत्सन्ततिभिश्च सह सापिण्ड्याभावः पिण्डलेपसम्बन्धाभावादिति ।

ततश्च—गोत्रैक्ये सति साक्षात्परम्परया वा पार्व्वणपिण्डलेप-सम्बन्धाश्रयत्वं सपिण्डलक्षणं सम्यक्षम् । *अथवा गोत्रैक्ये सति तुल्यसम्प्रदानकपार्व्वणपिण्डलेपसम्बन्धाश्रयत्वं सापिण्ड्यम् ।

तुल्यसम्प्रदानकानां पिण्डलेपानां सम्बन्धस्याश्रयास्त्रयो भवन्ति सम्प्रदानं दाता यदपेक्षया सम्प्रदानस्य तुल्यता सोऽपीति ।

अत्र भ्रातुरभावे तुल्यसम्प्रदानकपितामहादिपिण्डसम्बन्धा-पेक्षया पितापि सपिण्डो भवतीति । सपिण्डकानां बालादीनान्तु योग्यतया सापिण्ड्यं योग्यता च तादृशपिण्डलेपसम्बन्धाश्रयत्वेन वेदबोधितत्वमिति ।

* पुस्तकान्तरे—अथ गोत्रैक्यीसत्यन्तलक्षणं नोपयुक्तमिति ।

एवञ्च साप्तपौरुषमिति यदुक्तं तदुपलक्षणं पित्रादीनां षट्पुरुषाणां मध्ये एकस्य जीवितत्वे पतितप्रव्रजितत्वे वा पार्व्वणद्वित्राद्धयोः पिण्डलेपसम्बन्धादष्टमपुरुषपर्य्यन्तं सापिण्ड्यं मन्तव्यम्। द्वयोर्जीवितत्वे पतितप्रव्रजितत्वे वा नवमपुरुषपर्य्यन्तं सापिण्ड्यम्। तथा पितृपितामहप्रपितामहानां त्रयाणां जीवितत्वेऽपि नवमपुरुषपर्य्यन्तमेव न तु दशमस्य पितरि पितामहे प्रपितामहे च जीवति नैव कुर्य्यादिति विष्णुना श्राद्धनिषेधात्तस्य लेपभोक्तृत्वाभावात् किन्तु त्रयाणां मध्ये एकस्य भाविनि मरणे पश्चान्नवमस्य लेपभोक्तृत्वयोग्यतासद्भावान्नवमपर्य्यन्तमेवेति।

यदा तु पित्रादीनां षण्णां मध्ये त्रयः पतितप्रव्रजिता अन्नमेव जीवन्तो भवन्ति तदा दशमपुरुषपर्य्यन्तं सापिण्ड्यं तस्य लेपसम्बन्धाश्रयत्वात्।

एवञ्च—चतुःपञ्चादीनां पतितप्रव्रजितत्वे दशमादूर्द्ध्वं पुरुषेष्वपि सापिण्ड्यप्रसक्तौ तन्निषेधमाह सुमन्तुः—

ब्राह्मणानामेकपिण्डस्वधानामादशमात् सपिण्डताविच्छिन्ना भवति।

अस्यार्थः—ब्राह्मणानामित्युपलक्षणं एकत्र पिण्डेषु पिण्डलेपेषु स्वधासम्बन्धो दानसम्बन्धो येषां तेषां क्रमादाय दशमपुरुषमवधिं कृत्वा तत्पुरुषेषु सपिण्डताधर्म्माविच्छेदः तेषु सपिण्डता नासीत्यर्थः किन्तु तमादाय तत्परेष्वेव सपिण्डतेति दशमपुरुषपर्य्यन्तमेव पिण्डलेपभागित्वं तत्पूर्व्वेषान्तु तन्नासीति दर्शितम्। एवञ्च लेपभाजश्चतुर्थाद्या इत्युपलक्षणं मन्तव्यम्।

यत्तु—

सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते।
समानोदकभावस्तु जन्मनाम्नोरवेदने॥

इति मनुवचनम्।

तस्यायमर्थः—आत्मानं विहाय सप्तमे चात्मनोऽष्टम इति। शेषभागिभ्य ऊर्द्ध्वं यावदमुकनाम्नोऽस्माकं पुरुषादयं जात इति विशेषतः सामान्यतो वा ययमस्मत्कुले जात इति ख्याते तावत् समानोदकता। जन्मनाम्नोरवेदने ज्ञाने तु समानोदकभावो निवर्त्तते निवृत्तसमानोदकभावास्तु केवलं गोत्रजाः।

तथा ब्रह्मपुराणे—

सर्व्वेषामेव वर्णानां विज्ञेया साप्तपौरुषी।
सपिण्डता ततः पश्चात् समानोदकधर्म्मता॥
ततः कालवशात्तत्र विस्मृतेर्जन्मनामभिः।
समानोदकसंज्ञाऽपि तावन्मात्रा विनश्यति॥

ऊढ़ानान्तु पतिवत् साापिण्ड्यं पतिकुल एव—

एकत्वं सा गता यस्माच्चरुमन्त्राहुतिव्रतैः।

इति व्यासवतादिवचनात् सपिण्डीकरणे पार्व्वणपिण्डलेपसद्भावाच्च। पितृकुलेषु सपिण्डतानिवृत्तिरसगोत्रत्वादिति।

कन्यानान्तु त्रैपुरुषिकं साापिण्ड्यमाह्वादिपुराणे—

सपिण्डता तु कन्यानां सवर्णानां त्रिपौरुषी॥

सपिण्डने पार्व्वणपिण्डलेपदातृत्वयोग्यतया सत्यपि साप्तपौरुषिके साापिण्ड्ये वचनात् पुरुषत्रयादूर्द्ध्वं सपिण्डकार्य्यकरत्वं नास्तीति।

वसिष्ठः—

असपिण्डता तु सप्तमपुरुषं स्याद्विज्ञायते।

अप्रत्तानां स्त्रीणां त्रिपौरुषम्॥

अप्रत्तानामविवाहितानां तेन पितृपितामहप्रपितामहैश्च अर्द्धं सापिण्ड्यकार्य्याभावात् कन्याया जनने मरणे च सपिण्डोत्त-माशौचं नास्ति एवं तेषामपि जननमरणे न कन्यायाः सपिण्डोत्त-माशौचं एवं कन्यायाः प्रपितामहभ्राता तत्सन्ततिभिश्च सह सापिण्ड्यकार्य्याभावात् समानोदककार्य्यम्।

एवमधस्तनपुरुषत्रय एव सापिण्ड्यात् भ्रातुः प्रपौत्रादधो-जातानां समानोदककार्य्यमेवेति ध्येयम्।

यत्तु—

अप्रत्तानां तथा स्त्रीणां सापिण्ड्यं साप्तपौरुषम्।

प्रत्तानां भर्तृसापिण्ड्यं प्राह देवः पितामहः॥

इति वङ्कधरेण लिखितं तत्रापि "सापिण्ड्यन्तु त्रिपौरुषं" इत्येव पाठः प्रागुक्तादिपुराणादिवचनैकवाक्यतावशात्। अन्यथा पूर्व्वार्द्धं विफलं स्यात् पुत्रादीनामपि तथात्वात्।

तत्रापि साप्तपौरुषमिति पाठे यथायथस्तदा यासां पतित-प्रव्रजितास्तयः पित्रादयस्तद्विषयं वचनमिदं मन्तव्यम्।

अथ प्रकृतमनुसरामः।

कूर्म्मपुराणे—

मातामहानां मरणे त्रिरात्रं स्यादशौचकम्।

एकोदकानां मरणे सूतकं चैतदेव हि॥

पितृभगिनीसुत-मातृभगिनीसुत-भागिनेयेषु मृतेषु पक्षिण्य-शौचम्।

तथा व्यासः—

पक्षिणी योनिसम्बन्धे बान्धवेषु मृतेषु च*।

एकरात्रं समुद्दिष्टं गुरौ सब्रह्मचारिणि॥

आगामिदिवायुक्तवर्त्तमानाहोरात्रं पक्षिणी। गुरुरत्रोपाध्यायो वेदाङ्गव्याख्याता तस्मिन् मृते शिष्यस्यैकरात्रम्।

स्मृत्यन्तरे श्वश्रूश्वशुरयोर्मरणे त्रिरात्रम्।

श्वशुरमधिकृत्य कूर्म्मपुराणे—

त्रिरात्रं श्वश्रूमरणे श्वशुरे तावदेव हि॥

भिन्नस्थानमृते त्वेकरात्रम्।

विष्णुः—

आचार्य्य-पत्नी-पुत्रोपाध्यायमातुलश्वश्रूश्वशुर्य्यसहाध्यायि शिष्ये-ष्वतीतेष्वेकरात्रेण।

---

* पुस्तके च तथैव च।

उपनीय साङ्गवेदाध्यापक आचार्य्यस्तस्य पत्न्यां पुत्रे च मृते त्र्यहमर्थ्ये श्यालके शिष्ये वेदैकदेश-वेदाङ्गाध्येता। मातृष्वसृ-पितृष्वसृमरणे एकरात्रं तन्मानत्वात् तयोः पत्युश्चैकरात्रम्।

दौहित्रे मृते त्रिरात्रं श्रोत्रिये विद्याचारसम्पन्ने भिन्नकुलजे एकवासे मृते त्रिरात्रम्।

तथा यमः—

मातुले पक्षिणी ज्ञेया तत्पुत्रे चैकरात्रकम्।
दौहित्रे च त्रिरात्रं स्यात् श्रोत्रिये स्वगृहे मृते॥

मनुः—

मातुले पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु च।
शिष्योऽत्र अध्यापितसकलवेदः।

यत्तु—

गुरुः करोति शिष्याणां पिण्डनिर्व्वपणं सदा।
ज्ञात्वा तत् पैतृकं शौचं स्वजातिविहितञ्च यत्॥

इति ब्रह्मपुराणवचनं तत् सकलकर्माधिकारिगुरुविषयम्।

श्यालके एकरात्रमाह अङ्गिराः—

"एकरात्रमशौचं हि श्यालके च तथाखिदम्।
जामातरि मृते चैकरात्रं यजिमृते च तथा॥

यस्य यावत्यस्मिन् मृते तस्य तावदशौचमिति न्यायेन श्वशुर तुल्यत्वावगमात्। एवञ्च पितृष्वसृ मातृष्वसृ-मातुलेषु मातुः सपत्न भ्रातरि च उपाध्याये जामातरि स्वगृहे मृते त्रिरात्रम्।

कूर्मपुराणे—

त्रिरात्रमसपिण्डेषु स्वगृहे संस्थितेषु च ॥

तथाच एकरात्राशौचिनां पक्षिण्यशौचिनाञ्च प्रधानगृहमरणे त्रिरात्रमाह भविष्येऽपि—

मातामहे तथातीते चैकरात्राद्यशौचिनाम् ।

मरणं स्याद्यदा गेहे प्रधाने च त्र्यहं चरेत् ॥

मनुः—

अश्रोत्रिये त्वहः कृत्स्नमनूचाने तथा गुरौ ॥

अश्रोत्रिये असमानाधिकृत्यापि स्वगृहे मृते इत्यर्थः। अनूचाने साङ्गवेदाध्येतरि एकग्रामस्थे एकरात्रम्। अथवायस्य राज्ञोऽधिकारे वसतिः तस्मिन्नश्रोत्रिये मृते उपाध्यायपुत्रपत्न्योश्च मरणे सज्योतिरशौचम्। सज्योतिस्तु दिवा चेन्मरणं दिवामात्रं रात्रौ चेद्रात्रिमात्रम्।

आदिपुराणे—

प्रेते राजनि *सज्योति र्यस्य स्याद्विषये स्थितिः ।

उपाध्यायसुते चैव तत्पत्न्यां चैतदेव हि ॥

श्रोत्रियनृपे त्वेकरात्रं—जावालः—

मातृबन्धौ गुरौ मित्रे मण्डलाधिपतावहः ॥

याज्ञवल्क्यः—

गुर्वन्तेवास्यनूचानमातुलश्रोत्रियेषु च ।

†निवासराजनि प्रेते तदहः शुद्धिकारणम् ॥

---

* ग पुस्तके—त्वथाशु ।

† ग पुस्तके—असौरसेषु पुत्रेषु भार्यास्वन्यगतासु च । इत्यधिकः पाठः ।

अनूचानः साङ्गवेदाध्येतमात्रः श्रोत्रियस्तु वेदाध्यापको दशकर्म-संस्कृतः एतयोरेकग्रामवासयोरिति पूर्व्वसूत्रम्।* सजातीया-नौरसपुत्राणां मरणे सङ्गृहीताया भार्य्यायाः सजातीयापकृष्ट-जातीयायाः प्रसवमरणे च त्रिरात्रम्।

उत्कृष्टजातीयायास्तु स्त्रिया अपकृष्टजातिगमने महापातकित्वेनाशौचाभावः सजातीयोत्कृष्टजातीयान्यपुरुषसङ्गताया भार्य्यायाः प्रसवमरणे च आचार्य्यमरणे च त्रिरात्रम्। य उपनीय साङ्गवेदमध्यापयति स आचार्य्यः।

त्रिरात्रानुवृत्तौ विष्णुपुराणम्—

अनौरसेषु पुत्रेषु जातेषु च मृतेषु च।
परपूर्व्वासु भार्य्यासु प्रसूतासु मृतासु च॥

तथा हारीतः—

परपूर्व्वासु भार्य्यासु पुत्रेषु कृतकेषु च।
त्रिरात्रं स्यात्तथाचार्य्ये भार्य्यास्वन्यगतासु च॥
आचार्य्यपुत्रपत्न्योश्च* अहोरात्रमुदाहृतम्॥

शिष्ये सतीर्थे त्रिरात्रमिति बौधायनवचनात् शिष्यमरणे गुरोस्त्रिरात्रं शिष्योऽत्र य उपनीय साङ्गवेदमध्यापितः। वेदसहाध्यायि-वेदाङ्गसहाध्यायि-शिष्ययोरेकस्मिन् मृतेऽपरस्यैकरात्रञ्च। प्रथममन्यस्य दत्ता विवाहितेनैव जनितपुत्रा पुत्रसहिता यदान्यमाश्रिता अन्येनापि जनितपुत्रा तदा द्वयोरपि पुत्रयोः प्रसवमरणे च

* नपुस्तके—आचार्य्यसुते।

द्वितीयपुत्रपितुस्त्रिरात्रमशौचं तत्सपिण्डानामेकरात्रम्। भिन्न-पितृकयोस्तु द्वयोरेकमातृजातयोः प्रसवे मरणे च मातृजातस्य-मशौचम्।

तथाचादिपुराणे—

आदावन्यस्य दत्तायां कदाचित् पुत्रयोर्द्वयोः।
पितुस्तत्र त्रिरात्रं स्यादेकरात्रं सपिण्डिनाम्॥
एकमाता द्वयोर्यत्र पितरौ द्वौ च कुत्रचित्।
तयोः स्यात् सूतकादैक्यं मृतकाच्च परस्परम्॥

पुनर्विवाहितायास्तु प्रसवे मरणे च सम्पूर्णाशौचं पैशाचरूप-विहितविवाहितत्वात्।

तथाच—

पैशाचः कन्यकाच्छलादिति॥

अत्यन्तभिन्ने भिन्नकुलजेऽपि मृते एकरात्रम्। मातृबन्धौ गुरौ मित्र इति जाबालवचनात्।

मातुर्मातुःस्वसुः पुत्रा मातुः पितुःस्वसुः सुताः।
मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः॥

तुल्यन्यायात् पितृबन्धुष्वप्येकरात्रम्।

पितुर्मातुःस्वसुः पुत्राः पितुः पितुःस्वसुः सुताः।
पितुर्मातुलपुत्राश्च विज्ञेया पितृबान्धवाः॥

अथ स्नेहेन वा सपिण्डादिजदहनवहने अशौचिगृहे शयनाद्यकरणे एकरात्रम्। अशौचिगृहवासे अन्नभक्षणरहितस्य दहन-वहनकर्तु-

त्रिरात्रमशौचम्। मातुराप्तबान्धवानां मातुलादीनां दहनवहने अशौचिगृहवासाभावेऽपि त्रिरात्रम्। दहनवहनाभावेऽपि कामतः सकृदशौचान्नभक्षणे अशौचिजात्युक्तमेवाशौचम्।

मनुः—

असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत्।
विशुध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान्॥
यद्यन्नमत्ति तेषां तु दशाहेनैव शुध्यति।
अनदन्नन्नमह्नैव न चेत्तस्मिन् गृहे वसेत्॥

बन्धुवत् स्नेहेनेत्यर्थः। अहस्तुल्या तु स्नानमात्रं वक्ष्यते। गृह-वासाभावे एकरात्रविधानात् विशुध्यति त्रिरात्रेणेति गृहवासे बोद्धव्यम्।

एवमूढाया दुहितुः स्नेहेन दहनवहनादिकारिणः पितु-रप्येकरात्राशौचमिति ध्येयम्।

कूर्मपुराणे—

यस्तेषामन्नमश्नाति सकृदेवापि कामतः।
तदशौचे निवृत्तेऽसौ स्नानं कृत्वा विशुध्यति॥

आपदि तु वहनादिकं कृत्वा कामतोऽशौच्यन्नभक्षणे त्रिरात्रमाह कूर्मपुराणे—

यद्यन्नमत्ति तेषां तु त्रिरात्रेण ततः शुचिः। इति।

अनापद्यापदि वाऽकामतोऽशौच्यन्नभक्षणे यावदश्नाति तावदेवा-शौचम्।

अङ्गिराः—

प्रेतान्नमसपिण्डस्य यावदश्नात्यकामतः।
तावत्त्र्यहान्यशौचं स्यादपिण्डानां कथञ्चन॥

अपिण्डानामसपिण्डानाम्।

कूर्मपुराणे—

यावत्तदन्नमश्नाति दुर्भिक्षोपहतो नरः।
तावत्त्र्यहान्यशौचं स्यात् प्रायश्चित्तं ततःपरम्॥

एवञ्चोत्कृष्टजातेरशौचिनो यावदन्नं कामतो भुङ्क्ते तावदेवाशौचं अकामतो दोषाभाव इति ध्येयम्।

नित्यान्नदायिनां सङ्कल्पान्नदायिनाञ्चामान्नभक्षणे न दोषः। पक्वान्नभक्षणे तु त्रिरात्रमशौचम्। दुग्धपानञ्च त्रिरात्रं प्रायश्चित्तम्।

कूर्मपुराणे—

अन्नसत्रप्रवृत्तानामाममन्नमगर्हितम्।
भुक्त्वा पक्वान्नमेतेषां त्रिरात्रन्तु पयः पिबेत्॥

अशौचिना सह शयनोपवेशनेनालिङ्गनाङ्गस्पर्शनादिषु कामतः सदैव क्रियमाणेषु अशौचितुल्यमशौचं अकामतः स्नानमेधाशनञ्च।

कूर्मपुराणे—

यस्तैः सहासनं कुर्य्याच्छयनादीनि चैव हि।
बान्धवो वा परो वापि स दशाहेन शुध्यति॥

अदृष्टबुद्धा द्विजदहनवहने सद्यःशौचं इतप्राशनञ्च।

आदिपुराणे—

अनाथं ब्राह्मणं दीनं दग्ध्वा च धनवर्ज्जितम् ।
स्नात्वा संप्राश्य तु घृतं शुध्यन्ति ब्राह्मणादयः ॥

पराशरः—

अनाथं ब्राह्मणं दीनं ये वहन्ति द्विजातयः ।
पदे पदे फलं तेषां यज्ञतुल्यं न संशयः* ॥
जलावगाहनात्तेषां सद्यःशौचं विधीयते ॥

यद्युत्कृष्टजातिरपकृष्टजातेः शवस्यापकृष्टजातिर्वा उत्कृष्टजातेर्धनलोभाद्वहनादिकं करोति तदा प्रेतजात्युक्ताशौचम् ।

ब्राह्मणस्य तु शूद्रशवदाहे शूद्रतुल्यमशौचम् । अशौचोत्तरकाले उपवासत्रयञ्च पञ्चगव्यपानं प्रायश्चित्तम् ।

आदिपुराणे—

योऽसवर्णन्तु मूल्येन नीत्वा चैव दहेन्नरः ।
अशौचन्तु भवेत्तस्य प्रेतजातिसमं तदा ॥

तथा—

न ब्राह्मणो दहेच्छूद्रं मित्रं वाप्यन्यमेव वा ।
मोहाद्दग्ध्वा ततः स्नात्वा स्पृष्ट्वाग्निं प्राशयेद्घृतम् ॥
उपवासरतः पश्चात् त्रिरात्रेण विशुध्यति ॥

पश्चात् प्रेतजात्युक्ताशौचात् परमित्यर्थः ।

---

* मूलपुस्तके — पदे पदे यज्ञफलमानुपूर्व्याल्लभन्ति ते ।

मरीचिः—

> शूद्रशवानुगमने त्रिरात्रं ब्राह्मणे स्मृतम्।
> रोदने बान्धवैस्तस्य दाहे च तुल्यमेव च॥

शूद्रबान्धवैः सह रोदने, त्रिरात्रमशौचमित्यखिलसञ्चयनात् पूर्व्वं बोद्धव्यं वक्ष्यमाणवचनात्।

शवानुगमने ब्राह्मणस्याशौचमाह—

कूर्म्मपुराणे—

> प्रेतीभूतं द्विजं विप्रो योऽनुगच्छति कामतः।
> स्नात्वा सचेलः स्पृष्टाग्निं घृतं प्राश्य विशुध्यति॥
> एकाहात् क्षत्रिये शुद्धिर्वैश्ये च व्याहरेन तु।
> शूद्रे दिनत्रयं प्रोक्तं प्राणायामशतं पुनः॥*

यदि प्रमादादपि शूद्रशवानुगमनं स्यात्तदा सचेलस्नानादिना शुद्धिः।

याज्ञवल्क्यः—

> ब्राह्मणेनानुगन्तव्यो न तु शूद्रः कथञ्चन*।
> अनुगम्याम्भसि स्नात्वा स्पृष्टाग्निं घृतभुक् शुचिः॥

शेषार्द्धं प्रमादविषयम्। अम्भसीत्युद्धृतजलस्नाननिषेधार्थम्।

> स्पर्शं विनानुगमने शूद्रो नक्तेन शुध्यति।

इति वचनात्—

> शूद्राणां सजातीयशवानुगमने एकरात्रम्।

---

* न पुस्तके—न शूद्रो न द्विजः क्वचित्।

ह:—

मानुषास्थि स्निग्धं स्पृष्ट्वा त्रिरात्रमशौचं अस्निग्धे त्वेकरात्रम्

एतच्चापकृष्टजातीयास्थिस्पर्शविषयम् ।

तीयस्य उत्कृष्टजातीयस्य वा स्पर्शे मनुः—

नारं स्पृष्ट्वास्थि सस्नेहं स्नात्वा विप्रो विशुध्यति ।

आचम्यैव तु नि:स्नेहं गामालभ्यार्कमीक्ष्य वा ॥

यसञ्चयनाभ्यन्तरे सजातीयप्रेतबान्धवैः सह रोदने सचेल

ाच्छुद्धिः । अतः परमाचमनात् ।

अस्थिसञ्चयनाभ्यन्तरे शूद्रप्रेतबान्धवैः सह रोदने ब्राह्मण

तस्नानात् स्पृश्यत्वमशौचन्तु त्रिरात्रं अस्थिसञ्चयनादूर्द्धं सचे

ात्र ।

क्षत्रविट्शूद्राणान्तु ब्राह्मणप्रेतबान्धवैः सह रोदने अस्थि

यनाभ्यन्तरे सचेलस्नानं ततःपरं स्नानमात्रमिति ।

शूद्रप्रेतस्य तु रोदनरहितविलापमात्रे एकरात्रम् ।

दंपुराणे—

अनस्थिसञ्चिते कश्चित् रौति तद्बान्धवैर्द्विजः ।

तस्य स्नानाद्भवेच्छुद्धिस्ततस्त्वाचमनञ्चरेत् ॥

अनस्थिसञ्चये विप्रो रौति चेत् क्षत्रवैश्ययोः ।

ततः स्नातः सचेलस्तु द्वितीयेऽहनि शुध्यति ॥

अनस्थिसञ्चिते शूद्रे ब्राह्मणो रौति चेज्जडः ।

[illegible]

अस्थिसञ्चयनादूर्द्धमहोरात्राच्छुचिर्भवेत्।
सचैलस्नानमन्येषामक्षतेऽप्यस्थिसञ्चये।
क्षते च केवलं स्नानं चतुर्विट्शूद्रजन्मनाम्॥

पारस्करः—

शूद्रस्य बान्धवैः सार्द्धं कृत्वा तु परिदेवनम्।
वर्ज्जयेत्तदहोरात्रं दानं स्वाध्यायकर्म्म च॥

अथ क्रियाहीनादीनां नित्यमाशौचमाह—

दक्षः—

अस्नात्वा चाप्यहुत्वा च *भुक्त्वाऽदत्वा च यस्तु वै।
एवंविधस्य †विप्रस्य सूतकं समुदाहृतम्॥
व्याधितस्य कदर्य्यस्य ऋणग्रस्तस्य सर्व्वदा।
क्रियाहीनस्य मूर्खस्य स्त्रीजितस्य विशेषतः॥
व्यसनासक्तचित्तस्य पराधीनस्य नित्यशः।
श्रुताभ्यास‡विहीनस्य भस्मान्तं सूतकं भवेत्॥

कदर्य्यमाह—

आत्मानं धर्म्मकृत्यञ्च पुत्रदारांश्च पीड़यन्।
लोभाद् यः प्रचिनोत्यर्थं स कदर्य्य इति स्मृतः॥

ऋणग्रस्तस्य अपरिशोधितदेवपितृऋणस्य क्रियाहीनस्य नित्य-नैमित्तिकक्रियाननुष्ठायिनः स्त्रीजितस्य स्त्रीवचनादगुरुनिर्भर्त्सि-

---

* ग पुस्तके—चाजत्वा।
† ग पुस्तके—ह्मणस्य।
‡ ग पुस्तके—भ्रष्टाचार।

तस्य व्यसनासक्तस्य द्यूतवेश्यादिप्रसक्तस्य एषां सूतकं भस्मान्तं मरणपर्य्यन्तं भवेदित्यर्थः।

मनुः—

हीनवर्णा तु या नारी* प्रमादात् प्रसवं व्रजेत्।
प्रसवे मरणे तज्जमशौचं नोपशाम्यति॥

शूद्रागन्तुरिति शेषः।

पितृवेश्मनि या नारी रजःपश्यत्यसंस्कृता।
†प्रसवे मरणे तज्जमशौचं नोपशाम्यति॥

पितुरेव शेषः।

तथा—

अन्यपूर्व्वा गृहे यस्य भार्य्या स्यात्तस्य नित्यशः।
अशौचं सर्व्वकार्य्येषु गेहे भवति सर्व्वदा॥

गेह इत्यनेन समस्तगृहकर्म्मकरी पत्नी यस्येत्यर्थः।

---

* ग पुस्तके—हीनवर्णा यदा नारी।

† ग पुस्तके—तस्यां मृतायां नाशौचं कदाचिदपि।

## अथ सद्यःशौचादिः ।

यज्ञे कर्म्म कुर्व्वतां ऋत्विजां दीक्षितानाञ्च तत्कर्म्मणि नाशौचम् । नित्यान्नदानसत्रप्रवृत्तानामन्नदाने नाशौचं, चान्द्रायणादिव्रतानुष्ठानप्रवृत्तानां तदनुष्ठाने नाशौचं, प्रत्यहं गोहिरण्यादिदानशीलानां तद्दाने नाशौचं, कदाचिद्दानकारिणामपि दानप्रवृत्तानां तद्दाने नाशौचं, विवाहे प्रक्रान्ते वरणे कृते तत्क्रियार्थं नाशौचं यज्ञे दीक्षितान्नभक्षणप्रतिग्रहादौ नाशौचं, संग्रामे युध्यमानानां नाशौचं, परचक्रादिभिर्देशोपप्लवे अत्यन्तदुर्भिक्षे औपसर्गिकात्यन्तमरणपीड़ायाञ्च नाशौचम् ।

यथा याज्ञवल्क्यः—

ऋत्विजां दीक्षितानाञ्च यज्ञे कर्म्मणि कुर्व्वताम्* ।
सत्रि-व्रति-ब्रह्मचारि-दातृ-ब्रह्मविदां तथा ॥
दाने विवाहे यज्ञे च संग्रामे देशविप्लवे ।
आपद्यपि च कष्टायां सद्यःशौचं विधीयते ॥

दक्षः—

यज्ञेन† प्रवर्त्तमाने तु जायते म्रियतेऽथ वा ।
पूर्व्वसङ्कल्पितार्थेषु न दोषस्तत्र विद्यते ॥

---

* ग पुस्तके—यज्ञियं कर्म्म कुर्व्वताम् ।

† पूर्वपुस्तके—यज्ञकाले विवाहे च देवयज्ञे—

वर्त्तमाने विवाहे च देवयागे तथैव च।
क्रियमाणे तथाश्राद्धे नाशौचं नैव सूतकम्॥*

पूर्व्वसङ्कल्पितेषु पुष्करिण्यादिधर्म्मकार्य्यं कर्त्तुं पृथक्कृतेषु धनेषु तदर्थमुपयुज्यमानेषु नाशौचम्।

तथा यमः—

पूर्व्वसङ्कल्पितार्थे वा तत्रिनाशौचमिष्यते॥

विष्णुः—

नाशौचं देवप्रतिष्ठाविवाहयोः पूर्व्वसम्भृतयोः॥

पूर्व्वसम्भृतयोरारब्धयोरित्यर्थः।

विवाहयज्ञयोरन्यकुलभोजने क्रियमाणे यद्यशौचं स्यात् तदाऽशौचरहितकुलान्तरद्वारेण शेषान्नपरिवेषणं कारयेदेवं दातुर्भोक्तुश्च न कश्चिद्दोषः।

आदिपुराणे—

विवाहयज्ञयोर्मध्ये सूतके सति चान्तरा।
शेषमन्नं परैर्दद्यात् दातॄन् भोक्तॄंश्च न स्पृशेत्॥

दोषो न स्पृशेदित्यर्थः। सन्न्यासिनां सपिण्डजननमरणे नाशौचम्।

आचारः—

ब्रह्मचारिणि भूपे च यतौ शिल्पिनि दीक्षिते।
यज्ञे विवाहे सत्रे च सूतकं न कदाचन॥

छन्दोगपरिशिष्टम्—

न त्यजेत् सूतके कर्म्म ब्रह्मचारी स्वकं क्वचित्॥

* न तुलस्य मृतकस्य।

प्राजापत्यादिकृच्छ्रेषु समस्तेषु नैमित्तिककाम्येषु यागहोमादिषु सम्पूर्णार्थं ब्राह्मणा भोजयितव्या इति गृहीतसङ्कल्पस्यान्यकुलजानां भोजने न दोषः। श्राद्धार्थं वरणे कृते ऽशौचे सति तत्कर्मार्थं निमन्त्रितेषु च विप्रेषु न दोषः।

यथा आदिपुराणे—

निर्वृत्ते कृच्छ्रहोमादौ ब्राह्मणादिषु भोजने।
गृहीतनियमस्यापि नाशौचं कस्यचिद्भवेत्॥
निमन्त्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्मणि।
निमन्त्रणाद्धि विप्रस्य स्वाध्यायाद्विरतस्य च॥
देहे पितृषु तिष्ठत्सु नाशौचं क्रियते क्वचित्॥

क्वचिदपि दातरि भोक्तरि नाशौचमित्यर्थः। दातुः स्वाशौचाज्ञाने भोक्तुश्च ज्ञाने लोभाद्भोजनेऽशौचं दातृतुल्यमन्ते प्रायश्चित्तञ्च।

यथा मिताक्षराधृतषट्त्रिंशन्मुनिवचनम्—

उभाभ्यामपरिज्ञाने सूतकं तु न दोषकृत्॥
एकेनापि परिज्ञाते भोक्तुर्दोषमुपाहरेत्॥

दातुः सूतकं-दातृभोक्त्रोरेकस्यापि ज्ञाने भोक्तुरेव दोषं वहेत् न दातुरित्यर्थः।

तथा आदिपुराणे--

अपि दातृग्रहीत्रोश्च सूतके मृतकेऽथवा।
अविज्ञाते न दोषः स्यात् श्राद्धादिषु कथञ्चन॥
विज्ञाते भोक्तुरेव स्यात् प्रायश्चित्तादिकं क्रमात्।

श्राद्धादिषु भोजन इत्यर्थः। भोक्तुरेवेत्यपकारात् दातृभोक्ती-

उभयोरेव दातुरशौचे अविज्ञाते न दोषः उभयोरन्यतरस्य विज्ञाते तु भोक्तुरेव दोषो न तु दातुरित्यर्थः।

एवञ्च तुल्यन्यायात् द्रव्यान्तरप्रतिग्रहेऽपि दातुः स्वाशौचाज्ञाने ग्रहीतुर्ज्ञाने ग्रहीतुरेव दोषः। दातुर्ज्ञाने तु दानविधानाभावः स्थित एव।

एवञ्च—प्रतिग्रहीतुरशौचे उभयोरविज्ञाते न दोषः, दातुरेव विज्ञाने मोहाद्दाने दातुर्दोषः, ग्रहीतुरेव ज्ञाते लोभात् प्रतिग्रहे ग्रहीतुरेव दोष इत्यूह्यम्।

एतेन ज्ञायमानस्यैवाशौचस्य कर्मणां फलाजनकता न तु स्वरूपसत इति दर्शितम्।

उभयोरेव विज्ञात इति केषाञ्चिद्व्याख्यानमयुक्तं वचनान्तरप्राप्ताशौचान्नभक्षणदोषमात्रस्यैव वचनप्रवृत्तिकत्तरार्द्धवैयर्थ्यात् षट्त्रिंशन्मुनिवचनैकवाक्यताविरहाच्च।

स्नेहादिना भोजने तु तन्मध्येऽशौचे जाते ग्रासं त्यक्त्वा परजलाचमनेन शुद्धिः।

आदिपुराणे—

> भोजनार्थं तु संयुक्ते विप्रैर्दातु विपद्यते।
> यदा कश्चित्तदोच्छिष्टं ग्रासं त्यक्त्वा समाहितः॥
> आचम्य परकीयेण जलेन शुचयो द्विजाः॥

चन्द्रसूर्य्यग्रहणे स्नानदानश्राद्धादौ रोगाद्यभिभवे शान्तिकर्मणि च नाशौचम्।

वामनपुराणे—

नित्यस्य कर्म्मणो हानिः केवलं मृत्युजन्मनोः।
न तु नैमित्तिकोच्छेदः कर्त्तव्यो हि कथञ्चन॥

नैमित्तिकमागन्तुकनिमित्तोपनिपातविहितम्।

यत्तु—

सूतके मृतके चैव न दोषो राहुदर्शने।
स्नानमात्रं प्रकुर्व्वीत दानश्राद्धविवर्ज्जितम्॥

इति नामशून्यवचनं तदमूलमेव।

शिल्पिदासीदासानां स्वकर्म्मणि नाशौचम्।

आदिपुराणे—

शिल्पिनश्चित्रकाराद्याः कर्म्म यत् साधयन्ति ते।
तत्कर्म्म नान्यो जानाति तस्माच्छुद्धः स्वकर्म्मणि॥
दास्यो दासाश्च यत् किञ्चित् कुर्व्वन्त्यपि च लीलया।
तदन्यो न क्षमः कर्त्तुं तेन ते शुचयः स्मृताः॥

मनुः—

राज्ञो माहात्मिके स्थाने सद्यःशौचं विधीयते।
प्रजानां परिरक्षार्थमासनञ्चात्र कारणम्॥

माहात्मिके स्थाने व्यवहारदर्शनार्थं धर्म्माधिसनाधिरोहेऽशौचाभाव इत्यर्थः।

तथा पराशरः—

कारवः शिल्पिनो दासा वैद्यामात्यास्तथैव च॥।

राजानो राजभृत्याश्च सद्यःशौचाः प्रकीर्त्तिताः॥

वैद्यामात्यराजभृत्यानामपि सद्यस्तत्तत्कर्मकरणार्थं बोद्धव्यम् तथा कार्य्यवशाद् ब्राह्मणानामिच्छयापि अशौचाभाव माह पितामहः—

राज्ञाश्च सूतकं नास्ति व्रतिनां सत्रिणां तथा।

दीक्षितानाञ्च सर्व्वेषां यस्य चेच्छन्ति ब्राह्मणाः॥

मनुः—

उद्यतैराहवे शस्त्रैः क्षत्रधर्म्महतस्य तु।

सद्यः सन्तिष्ठते यज्ञस्तथा शौचमिति स्थितिः॥

क्षत्रधर्म्महतस्य अपराङ्मुखहतस्य यज्ञोऽग्निष्टोमादिः संतिष्ठते पुण्येन युज्यते इत्यर्थः।

बृहस्पतिः—

डिम्बाहवे विद्युता च राज्ञा गोविप्रपालने।

सद्यःशौचं हतस्याहुस्त्र्यहं चान्ये महर्षयः॥

सद्यःशौचं त्र्यहश्चेति व्यवस्थितविकल्पोऽयम्। डिम्बाहव स्वामिशून्यानां परस्परं शस्त्रप्रहारः तत्राभिमुखहतस्य सद्यः शौचं पराङ्मुखहतस्य त्रिरात्रं संग्रामेऽपि पराङ्मुखहतस्य त्रिरात्रं काश्यपवचने वक्ष्यते।

---

* पुस्तके—भाषिताः।

अत्र सद्यःशौचेनाशौचाभाव उच्यते मरणाभिसन्धाने-नाश्वघातिनामशौचाजनकत्वेन निर्णीतस्य विद्युन्मरणस्य साह-चर्य्यात्। तथा वध्येव मरणं भवत्वित्यभिसन्धाय सन्नीभूय स्थितस्य मरणे सद्यःशौचाभावो दाहाद्यभावश्च। प्रमादहतस्य तु त्रिरात्रम्।

यथा याज्ञवल्क्यः—

महीपतीनां नाशौचं हतानां विद्युता तथा॥

आदिपुराणे—

अशौचं स्मृत् त्र्यहं तेषां वज्रानलहते तथा॥

वधार्हापराधे राज्ञा हतस्य सद्यःशौचमशौचाभावः, अल्पापराध-हतस्य च त्रिरात्रम्। गोविप्ररक्षार्थं शस्त्रेण युध्यमानानामभि-मुखहतस्य सद्यःशौचमशौचाभावः। पराङ्मुखहतस्य त्रिरात्रं अत्रैव दण्डेन युध्यमानानामभिमुखहतानामेकरात्रम्।

पराशरः—

ब्राह्मणार्थे विपन्नानां दण्डिनां गोग्रहेषु च।

आहवेषु विपन्नानामेकरात्रमशौचकम्॥

अत्र दण्डिनामिति त्रिष्वपि सम्बध्यते। संग्रामेऽपि दण्डेन युध्य-मानानां मरणे एकरात्रमिति। प्राणत्यागेनापि परोपकाररूप-प्रायश्चं कर्त्तुमिच्छतां मरणे सद्यःशौचम्*।

* ख पुस्तके—एतद्यावत् नास्ति।

यमः—

डिम्बाग्निहतानाञ्च तथैव प्रायसन्निधीम् ।
नदीश्वापददंष्ट्रिभ्यः सद्यःशौचं विधीयते ॥

नद्यादिभ्यो बुद्धिपूर्व्वं मृतानामित्यर्थः । अत्राग्निहतसाहचर्य्यात् सद्यःशौचपदेनाशौचाभाव उच्यते ।

---

## अथ सद्यःशौचशब्दार्थौ विविच्येते ।

तत्र अशौचाभावः स्नानमात्रापनेयाशौचञ्चेति द्वयमेव मुनि-वचनेषु तथैव प्रयोगदर्शनात् । तत्र ऋत्विजां दीक्षितानाञ्चेत्यादि याज्ञवल्क्याद्यनेकमुनिवचनात् शौचभावार्थो दर्शितः, अत्र च उदकादिक्रियापि नास्तीति ।

स्नानमात्रापनेयाशौचार्थस्तु *यथा मनुः—

अतिक्रान्ते दशाहे तु त्रिरात्रमशुचिर्भवेत् ।
संवत्सरे व्यतीते तु स्पृष्ट्वैवापो विशुध्यति ॥

अस्मिन्नेवार्थे यमः—

अतीते सूतके स्वे स्वे त्रिरात्रं स्यादशौचकम् ।
संवत्सरे व्यतीते तु सद्यःशौचं विधीयते ॥

---

* क पुस्तके—यमः ।

इति विदेशस्थाशौचे दर्शितम्। स्नात्वा शुध्यन्ति गोत्रजा इति बृहस्पतिवचनञ्च।

अतएव दक्षेणाशौचस्य दशविधत्वमुक्तम्।

यथा—

सद्यःशौचं तथैकाहस्त्र्यहश्चतुरहस्तथा।
षड्दश द्वादशाहस्तु पक्षो मासस्तथैव च॥
मरणान्तं तथाचान्ये दश पक्षास्तु सूतके॥ इति।

स्नानमात्रापनेयाशौचे सद्यःशौचे तद्दिने स्नानमुदकदानं क्षौरं गृहवस्त्रशुद्ध्यादिकञ्च कृत्वा परदिने वृषोत्सर्गशय्यादानाद्येकोद्दिष्टश्राद्धानि कार्य्याणि न तु तद्दिने।

सूतके च समुत्पन्ने स्मरकर्म्मणि मैथुने।
धूमोद्गारे तथा वान्ते नित्यकर्म्माण्यपि त्यजेत्॥

इति कालिकापुराणवचनात् क्षौरानन्तरं कर्म्मानधिकारात्। श्वो भूते एकोद्दिष्टं कुर्य्यात् इति हारीतवचनात्।

ऊर्द्ध्वं दशम्या अपरेद्युस्तच्छ्राद्धम् इति बैजवापगृह्यवचनात्।

अशौचान्ताद्द्वितीयेऽह्नि शय्यां दद्याद्विलक्षणाम्॥

इत्यादिमत्स्यपुराणवचनाच्च अशौचान्तद्वितीयदिनस्यैव निमित्तत्वाच्च।

तथाऽशौचव्यपगमे सुस्नात इति विष्णुवचनेऽपि दिनान्तरेऽशौचव्यपगमस्य वर्त्तमानत्वेऽपि पूर्व्वोपन्यस्तहारीत-बैजवाप-मत्स्यपुराणवचनैकवाक्यतयाऽशौचान्तद्वितीयदिनस्यैव निमित्तत्वावगमाच्च।

तथाच—

मित्राणां तदपत्यानां श्रोत्रियाणां गुरोस्तथा।
भागिनेयसुतानाञ्च सर्व्वेषां चापरेऽहनि॥
श्राद्धं कार्य्यन्तु प्रथमे स्नात्वा ज्ञात्वा जलक्रियाम्॥

इत्यादिपुराणवचनं मित्रापत्यादीनामन्येषामप्यनुक्तानां सर्व्वेषाञ्च सद्यःशौचेऽप्यपरदिने श्राद्धं विदधाति।

व्याख्यातञ्चैतद्वचनं श्राद्धविवेके-अपरेऽहनि यस्य यावदशौचमुक्तं तस्मादपरदिने इत्यर्थः।

वृद्धाश्च पठन्ति—

सद्यःशौचदिने कुर्य्याद्* दशपिण्डान् प्रयत्नतः।
पुत्रादिराचरेच्छ्राद्धमेकोद्दिष्टं परेऽहनि॥ इति।

एतेन सद्यःशौचे तद्दिन एव श्राद्धमित्याधुनिकानां मतं हेयमेवेति विशेषतो दानकौमुद्यां विचारितमस्माभिरिति।

अथ प्रकृतमनुसरामः। बुद्धिपूर्व्वकं नदीप्रवेशादिभिरात्मघातिनामाशौचं नोदकादिक्रियाश्चाह छागलेयः—

शस्त्रविप्रहतानाञ्च शृङ्गिदंष्ट्रिसरीसृपैः।
आत्मनस्त्यागिनाञ्चैव श्राद्धमेषां न कारयेत्॥

विप्रहतानां ब्राह्मणशापविनष्टानामित्यर्थः।

* कु पुस्तके इद्यात्।

तथा कूर्म्मपुराणे—

ब्रह्मशापहतानाञ्च नाशौचं नोदकक्रिया ॥

अज्ञानाग्निजलवज्रादिभिरबुद्धिपूर्व्वकं दैवान्मरणे* त्रिरात्रमशौचं श्राद्धादिकञ्चास्ति—

आदिपुराणे—

व्यापादयेदथात्मानं स्वयं योऽग्न्युदकादिभिः ।
विहितं तस्य नाशौचं नाग्निर्नाप्युदकक्रिया ॥
अथ कश्चित् प्रमादेन म्रियतेऽग्न्युदकादिभिः ।
अशौचं तस्य कर्त्तव्यं कर्त्तव्या च जलक्रिया ॥

ब्रह्मपुराणे—

शृङ्गि-दंष्ट्रि-नखि-व्याल-विष-वह्नि-स्त्रिया जलैः ।
आदरात् परिहर्त्तव्यः कुर्व्वन् क्रीड़ां मृतस्तु यः ॥
नागानां विप्रियं कुर्व्वन् दग्धश्चाप्यथ विद्युता ।
निगृहीतः स्वयं राज्ञा चौर्य्यदोषेण कुत्रचित् ॥

स्त्रिया परस्त्रिया क्रीड़ां कुर्व्वन् परपुरुषेण घातितः श्राद्धादौ चाशौचे च परिहर्त्तव्य इत्यर्थः ।

शास्त्रानुमत्या बुद्धिपूर्व्वमृतानामपि त्र्यहाशौचम् श्राद्धादिकञ्चाह—

वृद्धगार्ग्यः—

वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः ।
आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनादिभिः ॥

---

* ख पुस्तके—त्रिरात्रमिति यत्कृते अबुद्धिपूर्व्वमपि मकरादिभिः क्रीड़ां कुर्व्वतां मृतानां नाशौचं नोदकक्रिया। इत्यधिकः पाठः। ०

तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसञ्चयः।
तृतीये तूदकं कृत्वा चतुर्थे श्राद्धमिष्यते॥

ज्वलनादिप्रवेशे यदि दैवाज्जीवनं भवेत्तदा पश्चान्नाविनि मरणेऽपि त्रिरात्रम्।

ब्रह्मादिपुराणे—

ईदृशं मरणं येषां जीवितश्चेत् कचिद्भवेत्।
अशौचं स्यात् त्र्यहं तेषां सद्यःस्नानमथापि वा॥

जीवता-मप्येषामकृत-प्रायश्चित्तानां सर्व्वलोकासंग्रहीतत्वमाह यम:—

जलाग्न्युद्बन्धनभ्रष्टाः प्रव्रज्यानशनच्युताः।
विष-प्रपतन-प्राय-शस्त्रघात-च्युताश्च ये॥
सर्व्वे ते प्रत्यवसिताः सर्व्वलोकबहिष्कृताः।
चान्द्रायणेन शुध्यन्ति तप्तकृच्छ्रद्वयेन वा॥

प्रव्रज्या सन्न्यासः तस्माद्भ्रष्टाः, अनशनं मरणपर्य्यन्तं सङ्कल्पिताहारत्यागः प्रायो महापथगमनम्।

काश्यपः—

अनशनमृतानामग्निहतानां अग्निजलप्रविष्टानां भृगुपातसंग्रामदेशान्तरमृतानां त्रिरात्रेण शुद्धिः।

शास्त्रानुमत्याऽनशनमृतानां अग्निजलाग्निभृगुपात[मृतानां प्रमादादेव] संग्रामे पराङ्मुखमृतानां देशान्तरमृतानमिशौचात्परं श्रवणे त्रिरात्रेणेत्यर्थः।

---

क पुस्तके —[ ] चिह्नितांशो नास्ति।

तथा—

प्रमादादपि निःशङ्क *स्त्वकस्माद्विधिचोदितः।
शृङ्गि-दंष्ट्रि-नखि-व्याल-विष-विद्युज्जलाग्निभिः॥
चण्डालैरथवा चौरैर्निहतो यत्र कुत्रचित्।
तस्याशौचादिकं कार्य्यं यस्मान्न पतितस्तु सः॥

इति ब्रह्मपुराणवचने शृङ्गि दंष्ट्रि नखि व्याल विष विद्यु-ज्जलाग्निभिः प्रमादात्मृतानामशौचस्य कर्त्तव्यत्वमात्रे विहिते—

सिंहव्याघ्रादिभिर्यस्तु हतो मृत्युमवाप्नुयात्।
त्र्यहाशौचं भवेत्तस्य सर्व्ववर्णेषु नित्यशः†॥

इति व्यासवचनात्—

अशौचं स्यात् त्र्यहं तेषां वज्रानलहते तथा।

इत्यादिपुराणवचनाच्च—

प्रमादेन सिंहव्याघ्रादिहतानां विद्युद्धतानाञ्च त्र्यहाशौचे निर्णीते जलाग्न्यादिभिः प्रमादमृतानामपि त्र्यहाशौचं साह-चर्य्येण ब्रह्मपुराणवचनस्य त्र्यहाशौचपरत्वादपमृत्युत्वेन तुल्यत्वाच्च। एतेन सङ्कोचे प्रमाणाभावात् जलादिषु प्रमादमृतानां सम्पूर्णा-शौचमिति हलधरलिखितमश्रद्धेयम्।

यत्तु—

जातिकालस्य पार्थक्यमपमृत्यौ न विद्यते।
दोषात्परमशौचन्तु कर्त्तव्यं तत्र निश्चितम्॥

---

* ख पुस्तके—त्वकाण्ड विधिचोदितः।
† ख पुस्तके—सर्व्ववर्णेष्वयं विधिः।

इति पठन्ति तदमूलं समूलत्वेऽपि—

मरणादेव कर्त्तव्यं संयोगो यस्य नाग्निना ।
दाहादूर्द्ध्वमशौचन्तु यस्य वैतानिको विधिः ॥

इति शङ्खवचनैकवाक्यतया साग्नेरपमृत्युविषयं वैतानिकमग्निहोत्रम् । सिंहव्याघ्रादिभिः क्षते क्षते तेनैव क्षतेन सप्तदिनाभ्यन्तरे मरणे त्रिरात्रं ततःपरं सम्पूर्णाशौचम् ।

यथा वृहन्मनुः—

क्षतेन म्रियते यस्तु तस्याशौचं भवेद्द्विधा ।
आसप्ताहात्त्रिरात्रन्तु दशरात्रमतःपरम् ।

अथ व्रात्यानामकृतप्रायश्चित्तानां पतितत्वान्नोदकक्रिया । षोडश-द्वाविंशतिचतुर्विंशतिवर्षपर्य्यन्तमकृतोपनयना ब्राह्मणक्षत्रियवैश्या व्रात्याः ।

यथा याज्ञवल्क्यः—

आषोडशाच्च द्वाविंशाच्चतुर्विंशाच्च वत्सरात् ।
ब्रह्मक्षत्रविशां काल औपनायनिकः परः ॥
अत ऊर्द्ध्वं पतन्त्येते यथाकालमसंस्कृताः* ।
सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः ॥

विष्णुः—

आत्मत्यागिनः पतिताश्च नाशौचोदकभागिनः† ॥

---

* ग पुस्तके—सर्व्वधर्म्मबहिष्कृताः ।

† क पुस्तके—नाशौचा नोदकभागिनः

याज्ञवल्क्यः—

न ब्रह्मचारिणः कुर्य्युरुदकं पतिता न च* ।
पाषण्डमाश्रिताः स्तेना न व्रात्या न विकर्म्मिणः ॥

आचार्य्यादिव्यतिरिक्तानामेव ब्रह्मचारिणे निषेधः।

यथा मनुः —

आचार्य्यं स्वमुपाध्यायं पितरं मातरं गुरुम् ।
निर्हृत्यापि व्रती प्रेतं न व्रतेन वियुज्यते ॥

विकर्म्मिणः आलस्यात् त्यक्तनित्यक्रिया इत्यर्थः।

मनुः—

वृथासङ्करजातानां प्रव्रज्यासु च तिष्ठताम् ।
आत्मनस्त्यागिनाञ्चैव निवर्त्तेतो†दकक्रिया ।
पाषण्डमाश्रितानाञ्च चरन्तीनाञ्च कामतः ।
गर्भभर्त्तृद्रुहाञ्चैव सुरापीनाञ्च योषिताम् ॥

अपकृष्टवर्णेनोत्कृष्टवर्णस्त्रीषु जाता वृथासङ्करजाताः।

जावालः—

दुर्भिक्षे राष्ट्रसम्पाते अस्त्र गो-ब्रह्म-घातिते ।
पतितेऽनग्नने प्रेते विदेशस्थे शिशौ न च ॥

सम्मुखयुद्धे अस्त्रेण घातिते गवा ब्राह्मणेन घातिते विदेशस्थे संवत्-सरात् परं श्रुते शिशावजातदन्ते च नाशौचमित्यर्थः।

---

* क पुस्तके—पतितश्च च।
† क पुस्तके—निवर्त्तेतो—।

आदिपुराणे—

परदारान् हरन्तश्च क्रोधात्* तत्पतिभिर्हताः ।
असमानैश्च सङ्घोर्वैश्चाण्डालाद्यैश्च विग्रहम् ॥
कृत्वा ते निहतास्तांस्तु चाण्डालादीन् समाश्रिताः ।
गराग्निविषदाश्चैव पाषण्डाः क्रूरबुद्धयः ॥
क्रोधात् प्रायं विषं वह्निं शस्त्रमुद्बन्धनं जलम् ।
गिरिवृक्षप्रपातं वा ये कुर्व्वन्ति नराधमाः ॥
कुशिल्पजीविनः स्तेनाः शूनालङ्कारकारिणः ॥
मुखे भगाश्च ये केचित् क्लीवप्राया नपुंसकाः ॥
ब्रह्मदण्डहता ये च ये च वै ब्राह्मणैर्हताः ।
महापातकिनो ये च पतितास्ते प्रकीर्त्तिताः ॥
पतितानां न दाहः स्यात् नान्त्येष्टिर्नास्थिसञ्चयः ।
नचाश्रुपातः पिण्डो वा कार्य्यं श्राद्धादिकं क्वचित् ॥
एतेषां पतितानाञ्च यः करोति विमोहितः ।
तप्तकृच्छ्रद्वयेनैव तस्य शुद्धिर्नचान्यथा ॥

†[स्थावरजङ्गमभेदेन गरविषयोरुक्तिः] क्रूरबुद्धयो नित्यं परापकारिणः, प्रायमनशनं, स्तेनाः चौर्य्यशीलाः, शूना वधस्थानं तदलङ्कारकारिणस्तदधिकृता इत्यर्थः एषां नाशौच‡मित्यर्थः ।

* क पुस्तके—द्वेषात् ।
† ख पुस्तके [ ] चिह्नितांशो नास्ति ।
‡ नोदकक्रियेति कुत्रचित्पाठः ।

*[गौतमः—

यस्य प्राणान्तिकं प्रायश्चित्तं स मृतः शुध्येत् तस्मिन्नुदकादीनि कर्म्माणि कुर्य्यात् ।

अशौचस्यैव त्रिरात्रम्—इह: शौचस्मृतेर्लुप्त इत्यादिवचनेन विहितात्मघाते त्रिरात्रदर्शनात् ।

पत्या सहमृतानां स्त्रीणामात्मघातित्वेऽपि अशौचादिकमाह]—

यमः—

यदा नारी विशेदग्निं स्वेच्छया स्वामिना सह ।
अशौचन्तु भवेत्तस्याः स्वामितुल्यं न संशयः ॥
पिण्डदानोदकं तस्याः सह भर्त्तेति निश्चयः ।
अशौचमुदकं तस्याः सह भर्त्रा स्मृतं यतः ॥
तिथ्यन्तरमृतायास्तु पृथक् श्राद्धं न विद्यते ॥

तथाच पठन्ति—

पत्युर्भिन्नतिथौ साध्वी पत्या सह मृता च या ।
तस्यामाब्दादिकं† श्राद्धं पत्युर्मृततिथौ भवेत् ॥

अत्र च यदा नारी विशेदग्निं स्वेच्छया पतिना सहेति यमवचनात् पुत्रादिभिः पित्रादिभ्योऽग्नौ दत्ते पश्चाच्चितामारुह्य तदग्निप्रवेशनं कार्य्यं न तु पत्या सह चितामारूढ़ाया एकस्यैवाग्निदानं जीवन्त्या अग्निदानेन पुत्रादीनां मातृवधस्त्रीवधप्रसङ्गादिति ।

---

* क पुस्तके [ ] चिह्नितांशो नास्ति ।
† क पुस्तके · तस्या मासादिकम् ।

रजस्वलादिभिस्तु सहमरणं न कार्य्यम्।

यथा बृहस्पतिः—

बालसम्वर्द्धनं त्यक्त्वा बालापत्या न गच्छति।
रजस्वला सूतिका च रक्षेद् गर्भञ्च गर्भिणी॥

तथा बृहन्नारदीयपुराणे—

बालापत्याश्च गर्भिण्यो ह्यदृष्टऋतवस्तथा।
रजस्वलाः सूतिकाश्च नारोहन्ति चितां शुभे॥

तथानुगमनमाह व्यासः—

देशान्तरमृते तस्मिन् साध्वी तत्पादुकाद्वयम्।
निधायोरसि संशुद्धा प्रविशेज्जातवेदसम्॥
ऋग्वेदवादात् साध्वी स्त्री न भवेदात्मघातिनी।
त्र्यहाशौचे निवृत्ते तु श्राद्धमाप्नोति शास्त्रवत्॥

साध्वी स्त्रीत्यनेनासाध्वीनामनुगमनं निषिद्धम्*।

अङ्गिराः—

दयितं चान्यदेशस्थं मृतं श्रुत्वा पतिव्रता।
समारोहति दीप्ताग्नौ तस्याः सिद्धिं निबोधत॥
यदि प्रविष्टो नरकं बद्धः पाशैः सुदारुणैः।
व्यालग्राही यथा व्यालं बलादुद्धरते बिलात्॥

---

* पुस्तके -नुगमननिषेधात्।

तद्वद्भर्त्तारमादाय दिवं याति पतिव्रता।
तत्र सा भर्तृपरमा स्तूयमानाऽप्सरोगणैः॥
क्रीडते पतिना सार्द्धं यावदिन्द्राश्चतुर्दश॥

ब्राह्मण्या तु सहमरणमेव कार्य्यं नानुगमनम्।

यथा गौतमः—

पृथक् चितिं समारुह्य न विप्रा गन्तुमर्हति॥

व्यासः—

मृतानुगमनं नास्ति ब्राह्मण्या ब्रह्मशासनात्।
इतरेषान्तु वर्णानां स्त्रीधर्म्मोऽयं व्यवस्थितः॥

भरद्वाजः—

या स्त्री ब्राह्मणजातीया मृतं पतिमनुव्रजेत्।
सात्मघातेन न स्वर्गमात्मानं वा पतिं नयेत्॥

फलमाह अङ्गिराः—

श्मशानं नीयमानन्तु भर्त्तारमनुयाति या।
पदे पदेऽश्वमेधेन यजते नात्र संशयः॥
तिस्रः कोट्योऽर्द्धकोटी च यानि लोमानि मानवे।
तावन्त्यब्दानि सा स्वर्गे भर्त्तारं याऽनुगच्छति॥
मातृकं पैतृकञ्चैव यत्र कन्या प्रदीयते।
पुनाति त्रिकुलं नारी भर्त्तारं याऽनुगच्छति॥
तत्र सा भर्तृपरमा परा परमलालसा।
क्रीडते पतिना सार्द्धं यावदिन्द्राश्चतुर्दश॥

ब्रह्मघ्नो वा कृतघ्नो वा मित्रघ्नो वापि यो नरः*।
तं वै पुनाति भर्त्तारमित्याङ्गिरसभाषितम् ॥

तत्रायं विधिः पुत्रादिभिरग्निदाने कृते ज्वलिते चिताग्नौ स्नात्वाचम्य प्राङ्मुखीभूय सङ्कल्पं कुर्य्यात्—

अद्येत्यादि कुलत्रयोद्धरणपूर्व्वक-भर्तृगताशेषपापक्षय-चतुर्दशेन्द्रकालावच्छिन्नपतिसहितस्वर्गलोकवास-कामनया भर्तृसम्बन्धिचिताग्नौ प्रवेशमहं करिष्ये। इति सङ्कल्प्य—अष्टौ लोकपालान् साक्षिणः कृत्वाऽग्निं त्रिःप्रदक्षिणीकृत्य प्रविशेत्।

यत्र च पत्युर्गङ्गामरणादिना वैकुण्ठप्राप्तिः तत्रेदृशं वाक्यम्—अद्येत्यादि गङ्गामरणादिना पतिप्राप्तलोकप्राप्तिकामनया भर्तृसम्बन्धिचिताग्नौ प्रवेक्ष्ये इति।

यथा श्रीभागवते—

सैषा नूनं व्रजत्यूर्द्ध्वमनु वेणं पतिं सती।
पश्यतामानतीत्यार्षिर्द्दुर्विभाव्येन कर्म्मणा।
सुवतीष्वमरस्त्रीषु पत्यु र्लोकं गता वधूः ॥
यं वै भाजविदां भूयो वैण्यः प्रापाच्युताश्रयः।

अथ प्रसङ्गादधिकारिणो निरूप्यन्ते ।

तत्र मरीचिः—

मृते पितरि पुत्रेण क्रियाः कार्य्या विधानतः ।
बहवः स्युर्य्यदा पुत्राः पितुरेकत्रवासिनः ॥
सर्व्वेषान्तु मतं ज्ञात्वा ज्येष्ठेनैव तु यत् कृतम् ।
द्रव्येण चाविभक्तेन सर्व्वैरेव कृतं भवेत् ॥

पुत्रेणेत्यविशेषात् सर्व्वेषामधिकारः । एकवचनन्त्वविवक्षितं सर्व्वैरेव कृतं भवेदिति वक्ष्यमाणत्वात् ।

प्रमीतस्य पितुः पुत्रैः श्राद्धं देयं प्रयत्नतः ।

इति बृहस्पतिवचनाच्च—

सर्व्वेषां पृथगनुष्ठानप्राप्तावाह बहवः स्युरिति । ज्येष्ठश्चात्र सर्व्वापेक्षया प्रथमोत्पन्नो ग्राह्यः तस्यैव पितृॠणपरिशोधकत्वेन सर्व्वोत्तमत्वात् ।

मनुः—

ज्येष्ठेन जातमात्रेण पुत्रीभवति मानवः ।
पितॄणामनृणश्चैव स तस्मात् सर्व्वमर्हति ॥

एवम्भूतज्येष्ठाभावेऽप्यपृथगेव श्राद्धं लघुहारीतः—

सपिण्डीकरणान्तानि यानि श्राद्धानि षोडश ।
पृथङ्नैव सुताः कुर्य्युः पृथग्द्रव्या अपि क्वचित् ॥

किन्त्वापेक्षिकज्येष्ठ एव कुर्य्यादिति प्राञ्चः।

कर्त्तुरनियम इति श्राद्धविवेकः।

एकत्रवासिन इत्यनेन प्राप्ते द्रव्येण चाविभक्तेन इति ग्रहणात् विभक्तधनानामपि पुनःकृतसंश्लेषणादविभक्तेन श्राद्धीयद्रव्येणा-पृथगेव श्राद्धं दर्शितम्।

ततश्च द्रव्यार्पणानुमतिभ्यां ज्येष्ठद्वारा श्राद्धनिष्पादनेन सर्व्वैरेव श्राद्धं कृतं भवेत् प्रत्यवायपरीहारादिफलसिद्धिः* स्यादित्यर्थः।

अथ पूरकपिण्डदानं पुनर्नावर्त्तनीयमिति हारलताकारः। वाचस्पतिमिश्र-विशारदादयस्तु—

पुत्राणां नियताधिकारित्वेनाकरणे प्रत्यवायात्—

असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान्।
प्रथमेऽहनि यो दद्यात् स दशाहं समापयेत्॥

इति वचनेनैव प्रथमपिण्डदाता दशाहं यावत् समापयेदेवेत्यव-गम्यते न त्वन्यो न दद्यादिति तस्यार्थः।

एवञ्च—

प्रथमेऽहनि यो दद्यात् प्रेतायान्नं समाहितः।
यत्नात्तवस्तु चान्येषु स एव प्रददात्यपि॥

इत्यादिपुराणवचने एवकारोऽभिन्नक्रमे सोऽपि दद्यादेवेत्यर्थः अन्यथाऽपिशब्दो व्यर्थः स्यात्।

---

* क पुस्तके—प्रत्यवायपरिहारः स्यात्।

अत्र वसिष्ठमहर्षिणाऽधिष्ठितेन भरतेन दत्ते पूरकपिण्डे श्रीरामेण पुनः पिण्डो दत्त इति रामायणे वाल्मीकिमहर्षिवर्णितं सङ्गच्छते।

यथा—

ऐङ्गुदं बदरीमिश्रं पिण्याकं दर्भसंस्तरे।
न्युप्य रामः स दुःखार्त्त इदं वचनमब्रवीत्॥
इदं भुङ्क्ष्व महाराज इङ्गुदीफलसंयुतम्।
यदन्नः पुरुषो राजंस्तदन्नाः पितृदेवताः॥ इति।

अतः पिण्डदानमारभ्य सर्व्वकर्म्म ज्येष्ठेनापि पुनः कार्य्यमिति समीचीनमित्याहुः।

एवञ्च ज्येष्ठस्यापाटवाद्यशक्तौ देशान्तरस्थितौ वा तदानीमधिकारिणा कनिष्ठेन स्वयमकरणे प्रत्यवायात् कृते श्राद्धे द्रव्यार्पणानुमतिविधानाभावेन प्रत्यवायपरीहारस्याजातत्वात् पाटवादौ भूते पुनर्ज्येष्ठेन कर्त्तव्यमेव।

इत्यन्ये—चिरकालीनापाटवसम्भावनायां द्रव्यार्पणानुमती स्वयं विधाय कनिष्ठद्वारापि कार्य्यम् ततः पश्चात्पाटवे ज्येष्ठेन पुनर्नावर्त्तनीयमित्याहुः।

एतच्च अपृथगनुष्ठानं सपिण्डीकरणपर्य्यन्तं तत्परन्तु विभक्तानामविभक्तानामपि पृथगेव सांवत्सरिकश्राद्धम्।

यथा व्यासः—

अर्व्वाक् संवत्सरात् ज्येष्ठः श्राद्धं कुर्य्यात्समेत्य च।
अर्द्धं सपिण्डीकरणात् सर्व्वे कुर्य्युः पृथक् पृथक्॥

यच्छ्राद्धं ज्येष्ठः समेत्य कुर्य्यात्तन्मृताहवत्संवत्सरश्राद्धम् सपिण्डी-

करणात्तरं सर्व्वे अविभक्ता* अपि पृथक् कुर्य्युः। अमावस्यादिकन्तु अविभक्तानामपृथगेव विभक्तानान्तु पृथगेव।

यथा बृहस्पतिः—

एकपाकेन वसतां पितृदेवद्विजार्च्चनम्।
एकं भवेद्विभक्तानां तदेव स्याद्गृहे गृहे॥

तथा च मनुः—

अविभक्ता विभक्ता वा कुर्य्युः श्राद्धमदैवतम्।
मघासु च ततोऽन्यत्र नाधिकारः पृथग्विना॥

अदैवतं सांवत्सरिकश्राद्धं मघाश्राद्धञ्च पृथगेव सर्व्वे कुर्य्युः। ततोऽन्यत्रामावस्यादौ पृथग्भूतं विभक्तं विना सर्व्वेषां नाधिकारः किन्त्वेकस्यैव विभक्तानान्तु पृथगेवेत्यर्थः।

एकोद्दिष्टन्तु कर्त्तव्यं पाकेनैव सदा स्वयम्।

इति लघुहारीतेन स्वयमेव इत्यनेनान्यद्वारा निषेधाच्च।

तथा—

नाब्दात् परतरः कालः श्राद्धेष्वन्यत्र वर्त्तते।
यत्र साक्षात्तु पितरो गृह्णन्त्यमृतमुत्तमम्॥

इति ब्रह्मपुराणे साक्षादमृतपदानुवादेन स्वयमनुष्ठानस्यैव युक्तत्वाच्च। श्राद्धचिन्तामणि-निर्णयामृतादीनामप्येवं मतम्। शिष्टाचारोऽप्येवम्प्रायः एव।

श्राद्धविवेके तु सपिण्डनोत्तरसकलश्राद्धानां विभक्तैः पृथग-

---

* क पुस्तके - विभक्ता इत्यधिकः पाठः।

नुष्ठाननियमः, अविभक्तानामनियमः किन्तु पृथगनुष्ठाने फलाति

शय इत्युक्तम्।

ऋष्यशृङ्गः—

पुत्रेषु विद्यमानेषु नान्यं वै कारयेत् स्वधाम्।

अत्राविशेषाद्बहुवचनाच्च द्वादशविधपुत्राणामेवाधिकारः।

तत्र याज्ञवल्क्यः—

औरसो धर्म्मपत्नीजस्तत्समः पुत्रिकासुतः।
क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा॥
गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः।
कानीनः कन्यकाजातो मातामहसुतो मतः॥
अक्षतायां क्षतायां वा जातः पौनर्भवः सुतः।
दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत्॥
क्रीतस्तु ताभ्यां विक्रीतः कृत्रिमः स्यात् स्वयङ्कृतः।
दत्तात्मा तु स्वयंदत्तो गर्भभिन्नः* सहोढजः॥
उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत्सुतः।
पिण्डदोऽंशहरश्चैषां पूर्व्वाभावे परः परः॥
सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः॥

धर्म्मपत्न्यां स्वेनोत्पादित औरसः।

विष्णुः-स्वक्षेत्रे स्वयमुत्पादितः प्रथम इति।

---

* इत्यत्र—गर्भविन्नः।

अत्र परिणीतक्षत्रियावैश्याशूद्राणामौरसत्वेऽपि नाधिकार:—

सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधि:।

इत्युपसंहारश्लोकदर्शनात्। अतएव आदिपुराणेऽधिकारि-प्रकरणे सपिण्डाद्यभावे अत्यन्तापत्त्युपलक्षेषामधिकार उक्त:।

यथा—

ब्राह्मणस्त्वन्यवर्णानां न करोति कदाचन।

कामाल्लोभाद्भयान्मोहात् कृत्वा तज्जातितां व्रजेत्॥

पुत्रा: कुर्व्वन्ति विप्राय क्षत्रविट्शूद्रयोनय:।

स तादृशेभ्य: पुत्रेभ्यो न करोति कथञ्चन॥

तत्सम इति—

अस्यां यो जायते पुत्र: स मे पुत्रो भवेत्।

इतिवाचाऽभिसन्धिना वा नियम्य या दत्ता सा पुत्रिका तत्सुत औरससम इत्यर्थ:। अत्र पुत्रिकाभावे तत्पुत्र इति बोद्धव्यम्।

बृहस्पति:—

आज्यं विना यथा तैलं सद्भि: प्रतिनिधीकृतम्।

तथैकादशपुत्राश्च पुत्रिकौरसयोर्विना॥

गुर्व्वाज्ञया यस्य क्षेत्रे जनित: स तस्य क्षेत्रज:। मातामहस्सुत इति वोढुरपि पुंसान्तरासुत्ते स एव पुत्र:।

ब्रह्मपुराणे—

अदत्तायान्तु यो जात: सवर्णेन पितुर्गृहे।

स कानीन: सुतस्तस्य यस्य सा दीयते पुन:॥

अक्षतायां क्षतयोन्यां वा पुनरूढ़ायां जातः पौनर्भवो जनकपुत्रः। ताभ्यां मातापितृभ्यां पुत्रार्थं विक्रीतः। यथा मनुः—

क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात्।

इत्यादीति मनुः—

मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात्।

आत्मानं संस्पर्शयेद्यस्मै स्वयंदत्तः स उच्यते॥

गर्भिण्या सहोढ़ा या तद्गर्भजातः सहोढ़जः। एषां सजातीयानामेव पुत्राणां साक्षादधिकार एव क्रमः। द्रव्यानुमतिद्वारा तु सर्व्वेषां युगपदधिकारोऽस्त्येव बृहस्पतिवचने कात्यायनवचने च पुत्रत्वाविशेषेण प्रतिपादनात् बहुवचनाच्च।

यत्तु—

औरसः क्षेत्रजश्चैव पुत्रिकापुत्र एव च।

इत्यादिनारदवचनं तद्गणनमात्रपरं न तु क्रमपरम्। एषामभावे पौत्र-प्रपौत्रयोः क्रमेणाधिकारः "पुत्रः पौत्रः-प्रपौत्रो वा" इति वक्ष्यमाणविष्णुपुराणवचनात् धनहारित्वाच्च।

तदभावे पत्न्यधिकारमाह शङ्खः—

पितुः पुत्रेण कर्त्तव्या पिण्डदानोदकक्रिया।

तदभावे च पत्नी स्यात्तदभावे सहोदरः॥

पत्न्योः सद्भावे अपुत्राया एव अधिकारः।

यथा व्यासः—

अपुत्रा स्त्री यथा पुत्रः पुत्रवत्यपि भर्त्तरि।

दद्यात्पिण्डं जलञ्चैव जलमात्रन्तु पुत्रिणी॥

तदभावे सहोदर इत्यत्र दुहित्रभावेऽपीति बोद्धव्यम् पत्नी दुहितरश्चेति याज्ञवल्क्येन पत्न्यनन्तरं धनाधिकारप्रतिपादनात्तस्य चोपकारकत्वव्याप्यत्वात् पिण्डदानादिकञ्चोपकारः।

मनुः—

यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा।
तस्यामात्मनि तिष्ठन्त्यां कथमन्यो हरेद्धनम्॥

भरद्वाजः—

दुहिता पुत्रवत्कुर्य्यान्मातापित्रोस्तु संस्कृता।

अत्र वाग्दत्तायाः सगोत्रत्वात्तदभावे दत्ताऽधिकारिणीति।

कश्चित् दुहित्रनन्तरं दौहित्राधिकारः पार्व्वणपिण्डदातृत्वेन आदृतो बलवत्त्वादित्याह। तन्न—

पुत्राभावे सपिण्डास्तु तदभावे सहोदकाः।
कुर्य्युरेतं विधिं सम्यक् पुत्रस्यापि सुतासुताः॥

इति ब्रह्मपुराणे पुत्रस्याप्यात्मजस्य सुतायाः सुता दौहित्रा एतं दाहादिकं विधिं कुर्य्युरिति समानोदकाभाव एव दौहित्राधिकारप्रतिपादनात् गोत्ररिक्थानुगः पिण्ड इति मनुवचनात् संग्रहे गोत्रस्यैव पिण्डदानप्रयोजकत्वावगमाच्च।

*श्राद्धचिन्तामणौ च सकुल्याभाव एव दौहित्राधिकारःपार्व्वणपिण्डदानस्य पत्नीदुहित्रवदकिञ्चित्करत्वेन सकुल्यतया सम्बन्धोत्वर्णादित्युक्तम्।

---

* ग पुस्तके—श्राद्धचिन्तामणिमतं नास्ति।

श्राद्धविवेकेऽपि—

मातामहानां दौहित्राः कुर्व्वन्त्यहनि चापरे।

तेऽपि तेषां प्रकुर्व्वन्ति द्वितीयेऽहनि सर्व्वदा॥

इत्यादिपुराणवचनेन मातामहाधिकारतुल्यतया प्रतिपादनात् सकुल्याभावे दौहित्राधिकारो व्यक्तीकृत इति। नानुजस्य तथाग्रज इति छन्दोगपरिशिष्टवचनं कनिष्ठभ्रातृसद्भावविषयम्।

आदिपुराणे—

भ्रातुर्भ्राता स्वयञ्चाग्नौ तद्भार्य्या चेत्र विद्यते।

तस्य भ्रातृसुतश्चाग्नौ यस्य नास्ति सहोदरः॥

अत्र सहोदराभावे तत्सुताधिकारकथनात्तदभाव एव सपत्नभ्रातृतत्पुत्रयोः क्रमेणाधिकारस्तयोरपि भ्रातृभ्रातृपुत्रशब्दार्थत्वात्। भ्रातृपुत्राभावे पिता-पुत्रो भ्राता पिता वापीति प्रचेतोवचनात्। तुल्यन्यायान्माताऽपि। सर्व्वाः पितृपत्न्यो मातर इति स्मरणाद्विमातापि। न पुत्रस्य पिता कुर्य्यात् इति परिशिष्टवचनं पत्न्यादिसद्भावविषयम्। ततः पितृतुल्यन्यायात् पितामहः। ततः स्नुषा 'श्वश्र्वादेस्तु स्नुषा चैव' इति शङ्खवचनात्। तदभावे सम्बन्धसन्निकर्षमपेक्ष्य सपिण्डास्तदभावे समानोदकास्तदभावे दौहित्रा इति प्रागुक्तं तदभावे मातृसपिण्डाः।

यथा गौतमः—

पुत्राभावे सपिण्डाः समानोदकाश्च मातृसपिण्डा वा शिष्या वा तदभावे ऋत्विगाचार्य्यौ।

अत्र मातृसपिण्डेष्वपि सम्बन्धसन्निकर्षोऽपेक्षणीयः प्रथमो

मातामहः ततो मातुलः ततोऽन्ये मातृसपिण्डास्तदभावे मातृसमानोदका बन्धुमाद्याः। [*ततो जामातृश्वशुरयोः परस्परम्।
आदिपुराणे—

जामातुः श्वशुराः कुर्य्युस्तेषां तेऽपि च संयताः। ]
मित्राणां तदपत्यानां श्रोत्रियाणां गुरोस्तथा।
भागिनेयसुतानाञ्च सर्व्वेषामपरेऽहनि॥

अपरेऽहनि इति यस्य यावदशौचन्तस्य द्वितीयदिने श्राद्धं कार्य्यमित्यर्थः। स्त्रियास्तु पुत्र-पौत्र-प्रपौत्राभावे कन्या—

दुहिता पुत्रवत् कुर्य्यान्मातापित्रोस्तु संस्कृता।

इति भरद्वाजवचनात् धनग्रहणाधिकाराच्च। तदभावे सपत्नीपुत्रस्तस्यापि पुत्रत्वस्मरणात्।

यथा यमः—

बह्वीनामेकपत्नीनामेका चेत् पुत्रिणी भवेत्।
सर्व्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुः॥

अत्र तेन पुत्रेणेत्यनेनैतदर्थमेव तस्य पुत्रत्वं पुत्रवतीरित्यनेन तु सपिण्डनार्थं तस्याः पुत्रिणीत्वमातिदिश्यते। तदभावे पतिस्तदभावे स्नुषा।

शङ्खः—

भार्य्यापिण्डं पतिः कुर्य्यात् भर्त्रे भार्य्या तथैव च।
श्वश्र्वादेश्च स्नुषा चैव तदभावे द्विजोत्तमः॥

* ख पुस्तके—[ ] चिह्नितांशः पतितः।

आदित्यहणात् श्वशुरस्य च।

न भार्यायां पतिर्दद्या*दिति कात्यायनवचनं दुहितृ-सपत्नी-पुत्रसद्भावविषयम्। स्नुषाभावे पुंवत्सपिण्डसमानोदकादयः। सर्व्वाभावे द्विजोत्तमः कृपया कुर्यात्। एतच्च सजातीयविषयम्।

आदिपुराणे—

ब्राह्मणस्त्वन्यवर्णानां न करोति कदाचन।
कामाल्लोभाद्भयान्मोहात् कृत्वा तज्जातितामियात्† ॥
पुत्राः कुर्व्वन्ति विप्राय क्षत्रविट्शूद्रयोर्नयः।
स तादृशेभ्यः पुत्रेभ्यो न करोति कदाचन ॥
स्वमातृा कुरुते तेषां तेऽपि तस्यार्थं कुर्व्वते ॥

विष्णुपुराणे—

पुत्रः पौत्रः प्रपौत्रो वा तद्वद्वा भ्रातृसन्ततिः।
सपिण्डसन्ततिर्वापि क्रियार्हो नृप जायते ॥
एषामभावे सर्व्वेषां समानोदकसन्ततिः।
मातृपक्षस्य पिण्डेन सम्बद्धा ये जलेन वा ॥
कुलद्वयेऽपि चोत्सन्ने स्त्रीभिः कार्य्या क्रिया नृप।
संघातान्तर्गतैर्वापि कार्य्या प्रेतस्य वा क्रिया ॥
उत्सन्नबन्धुरिक्थाद्वा कारयेदवनीपतिः।
पूर्व्वाः क्रिया मध्यमाश्च तथा चैवोत्तराः क्रियाः ॥

---

* ख पुस्तके—कुर्य्यात्।
† ग पुस्तके—व्रजेत्।

त्रिप्रकाराः क्रिया ह्येतास्तासां भेदान् शृणुष्व मे।
आदाहवाद्यांबुधादिसप्तर्षान्ताश्च याः क्रियाः॥
ताः पूर्व्वा मध्यमा मासि* मास्येकोद्दिष्टसंज्ञिताः।
प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु।
क्रियन्ते याः क्रियाः पित्र्याः प्रोच्यन्ते ता नृपोत्तराः॥
पितृमातृसपिण्डैस्तु समानसलिलैस्तथा।
संघातान्तर्गतैर्व्वापि राज्ञा वा धनहारिणा॥
पूर्व्वाः क्रियास्तु कर्त्तव्याः पुत्राद्यैरेव चोत्तराः।
दौहित्रैर्व्वा नरश्रेष्ठ कार्य्यास्तत्तनयैस्तथा॥
मृताहनि तु कर्त्तव्याः स्त्रीणामप्युत्तराः क्रियाः।
प्रतिसंवत्सरं राजन्नेकोद्दिष्टविधानतः॥

अत्र प्रपौत्रो वेति वाशब्दः क्रमेणाधिकारबोधनार्थः। दुहितृ-पत्नी-भ्रातॄणामभावे भ्रातृसन्ततिरिति प्रागुक्तम्। एवं सपिण्डाभावे सपिण्डसन्ततिः समानोदक इत्यर्थः। एवं समानोदकानामभावे समानोदकसन्ततिः सगोत्र इत्यर्थः। तदभावे मातृपक्षस्य पिण्डेन जलेन च सम्बद्धा मातामहसपिण्डाः समानोदकाश्च क्रमेणेत्यर्थः।

तदभावेऽसवर्णा परिणीता स्त्री तदभावे शिष्यर्त्विगाचार्य्या गोतमोक्ताः तदभावे वाणिज्यतीर्थादिकरणे मिलित्वा गतानां संघातानामन्तर्गतः कश्चित्तदभावे यज्ञोक्तोऽसम्बन्धो द्विजोत्तमः। तदभावे उक्तधनधर्म्माधिनेनान्यद्वारा नृपतिः कारयेदित्यर्थः।

* पुत्रादौ चापि।

क्रियाभेदेनाधिकारमाह—पूर्व्वाः क्रिया इति दाहादवधे-रशौचान्तदिनविहितजलादिसर्व्वाधन्ता याः क्रियास्ताः पूर्व्वाः। मासि मासीति एकादशाहादिसपिण्डीकरणान्तप्रेतक्रियोपलक्षण-मेतदुपलक्षीकरोति प्रेते पितृत्वमापन्ने इति सपिण्डनोत्तराः पार्व्वणसांवत्सरिकादिक्रिया उत्तराः।

पितृमातृसपिण्डादयः पूर्व्वोक्ताः पूर्व्वां क्रियामवश्यं कुर्य्युः। मध्यमायामनियमः—उत्तरायान्तु नाधिकारः पुत्राद्यैरेव इत्येव-कारेण व्यावर्त्तनात्। [*सांवत्सरिकस्य तु न व्युदासः तस्य श्लोकसंव्यतया वक्ष्यमाणत्वात्।

सपिण्डीकरणं तासां पुत्राभावे न विद्यते।
प्रतिसंवत्सरं कार्य्यमेकोद्दिष्टं नरैः स्त्रियाः।
मृताहनि यथान्यायं नृणां यद्वदिहोदितम्॥

इति मार्कण्डेयपुराणे अपुत्रपुंवदपुत्रस्त्रीणां सांवत्सरिकविधानाच्च।] पुत्राद्यैः पुत्रः-पौत्रः-प्रपौत्रो वेति वचनार्थोक्तैः भ्रातृसन्ततिपर्य्यन्तै-र्दौहित्रैश्च क्रमप्राप्तैर्नियमेनोत्तराः कार्य्या एषां त्रिप्रकारक्रियास्वेव नियताधिकार इत्यर्थः। तत्र भ्रातृ भ्रातृपुत्राभ्यां प्रतिसंवत्सर-विहितैकोद्दिष्टमेव कार्य्यं न तु पार्व्वणं पित्रादिवत्पुत्रस्यायामेव पार्व्वणभोक्तृत्वनियमात्।

पत्नी-दुहितृ-पुत्राणामप्युत्तरायामधिकारमाह मृताहनीति-

* क पुस्तके—[ ] चिह्नितांशो नास्ति।

स्त्रीणामिति कर्त्तरि षष्ठी स्त्रीभिः सांवत्सरिकश्राद्धक्रियैव कर्त्तव्या न तु पार्व्वणवृद्धिश्राद्धादि।

सपिण्डनस्य तु मध्यमायामन्तर्भावाच्च तत्र स्त्रीणामधिकार-प्रतिषेधः सपिण्डत्वेन तासामधिकारस्य वक्ष्यमाणत्वाच्च। एतत्-सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपीति याज्ञवल्क्येऽत्र सपिण्ड-नैकोद्दिष्टयोर्विधानानियमाच्च।

एवञ्च क्रमेणैवाधिकारनियमात् पुत्रसद्भावे कृतपितृकपौत्रस्य दुहितुर्दौहित्रस्य च नियताधिकाराभावादैच्छिकमेव सांवत्सरिका-नुष्ठानमिति ध्येयम्।

गौडवृद्धास्तु-"दुहिता पुत्रवत् कुर्य्यात्"इति वचनात् पुत्रवत् सांवत्सरिके दुहितुर्नियताधिकार इति वदन्ति।

लघुहारीतः—

एकोद्दिष्टन्तु कर्त्तव्यं पाकेनैव सदा स्वयम्।

सदा स्वयमेव कार्य्यं न तु

अमावस्यादिनियतम् प्रोषिते ब्रह्मचारिणो।

पत्नी तु कारयेत्तित्यमथवाप्यृत्विगादिना॥

इति वचनात् अमावस्यादिवत् ऋत्विगादिद्वारा कारयितव्यम्। अत्र कदाचित् स्वयमशक्तौ गोत्रजद्वारैव कर्त्तव्यं न ऋत्विगादि-द्वारेति।

यथा प्रेतक्रियां प्रक्रम्य ब्रह्मपुराणे—

न कदाचित् सगोत्राय श्राद्धं कार्य्यमगोत्रजैः।

अगोत्रजैः सगोत्रायेत्यसम्बन्धादगोत्रजैर्द्वारभूतैः सगोत्राय श्राद्धं

न कार्य्यं किन्तु गोत्रजद्वारा कार्य्यं विशेषणस्वरसादिति श्राद्ध-विवेकः।

अत्राधुनिकाः—

न ब्रह्मचारिणः कुर्य्युरुदकं पतिता न च।

इति याज्ञवल्क्यनिषेधात् ब्रह्मचारिणा मातापितृश्राद्धं गोत्रजद्वारा कर्त्तव्यमित्येवंपरत्वोपपत्तौ स्वयमेवेत्यस्य सङ्कोचे प्रमाणाभाव इत्याहुः। तदयुक्तम्।

आचार्य्यं स्वमुपाध्यायं पितरं मातरं गुरुम्।
निर्हृत्यापि व्रती प्रेतं न व्रतेन वियुज्यते॥

इति मनुना स्नातकब्रह्मचारिणां* पितृमातृक्रियाकर्त्तव्यत्वोपदेशात्। नैष्ठिकब्रह्मचारिणान्तु (गुरोस्तत्)पितृमातृक्रियानुष्ठान-विधानाभावात् कुतो गोत्रजद्वारा कर्त्तव्यम्।

यथा ब्रह्मपुराणे—

यतेः किञ्चिन्न कर्त्तव्यं न चान्येषां करोति सः।
असमाप्तव्रतस्यापि कर्त्तव्यं ब्रह्मचारिणः॥
श्राद्धन्तु मातापितृभिर्न तु तेषां करोति सः।
नित्यं गुरुकुलस्थस्य गुरोस्तु ब्रह्मचारिणः॥
निरन्वये सपिण्डे तु मृते सति दयान्वितः।
तदशौचं पुराचीर्णा कुर्य्यात्तत्पितृजत्क्रियाम्॥

नित्यं गुरुकुलस्थस्य नैष्ठिकस्येत्यर्थः। किञ्च पतितप्रव्रजितवत्

* क पुस्तके—व्रतचारिणाम्।

ब्रह्मचारिणां कर्म्माधिकारनिषेधादनधिकारिणान्तु प्रतिनिधे-
रग्राह्मीयत्वादन्यथा पतितादीनामपि प्रतिनिधीकरणप्रसङ्गात्
तदनधिकारे च तत्सपिण्डादीनां स्वतएवाधिकारप्राप्तेर्ब्रह्मचारिणां
गोत्रजद्वारानुष्ठानमाकाशकुसुममेवेति*।

अभियुक्तास्तु—

अमावस्यादेरुत्तरकालकर्त्तव्यत्वविधानाभावान्नोपप्रसक्तौ अन्य-
द्वारा कर्त्तव्यत्वस्यौचित्यादेकोद्दिष्टस्य तु क्षयाहादश्यामुत्तर-
काले स्वयमनुष्ठानविधानादन्यथा तद्विधिबाधात् सदा स्वयमिति
विधानबलाच्च स्वानुष्ठाननियमे सत्यपि चिरकालापाटवविदेश-
गमनादिसम्भावनया वत्सरमध्येऽपि क्षयाहादश्यां स्वयं करणा-
धत्तिसम्भावनायां गोत्रजद्वारा ब्रह्मपुराणवचनेन विधीयते इति
श्राद्धविवेकस्याभिप्रायं वर्णयन्ति।

तदयं संक्षेपः।

औरसः पुत्रिकापुत्रः क्षेत्रजो गूढज*स्तथा।
कानीनश्च पुनर्भूजो दत्तः क्रीतः स्वयंकृतः॥
स्वयंदत्तः सहोढोऽपविद्धो द्वादशधा सुताः।
पिण्डदोंऽशहरश्चैषां पूर्व्वाभावे परः परः।
सजातीयेष्वयं प्रोक्तस्तनयेषु विधिः पुनः॥
पौत्रः प्रपौत्रः पत्नी स्यादपुत्रस्याथ पुत्रिणी।
अदत्ता दुहिता दत्ताऽनुजो ज्येष्ठस्तयोः सुताः॥

* पुस्तके—गूढजः।

वैमात्रेयोऽथ तत्पुत्रः पितरौ च विमातरः ।
पितामहः स्नुषा चैव सपिण्डाः सन्निकर्षतः ॥
*सकुल्याश्चाथ दौहित्रो मातामहोऽथ मातुलः ।
मातामहसपिण्डाश्च तत्समानोदकास्ततः ॥
भागिनेयोऽथ जामाता श्वशुरः शिष्यकर्त्विजौ ।
आचार्य्यश्चाप्युपाध्यायः सतीर्थश्च सखा ततः ॥
संहतान्तर्गतः कश्चित् कृपावांश्च द्विजोत्तमः ।
सर्व्वाभावे तु नृपतिः कारयेत् स्वकुटुम्बवत् ॥
अन्त्यक्रियाणां संप्रोक्ताः क्रमादेतेऽधिकारिणः ।
स्त्रीणां पुत्रोऽथ पौत्रश्च प्रपौत्रो दुहिता ततः ॥
सपत्नीतनयः स्वामी स्नुषा पुंवत् परे स्मृताः ।

* क पुस्तके—सकुल्यगोत्रौ ।

## अथ सपिण्डनाधिकारिणः।

मार्कण्डेयपुराणे—

सपिण्डीकरणन्तासां पुत्राभावे न विद्यते।

प्रतिसंवत्सरं कार्य्यमेकोद्दिष्टं नरैः स्त्रियाः॥

मृताहनि यथान्यायं नृणां यद्वदिहोदितम्।

अत्र पुत्रपदेन सपत्नीपुत्रोऽपि गृह्यते।

बह्वीनामेकपत्नीनामेका चेत् पुत्रिणी भवेत्।

सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुः॥

इति मनुना तस्याः पुत्रिणीत्वातिदेशात्।

अत्र पुत्राभावे इत्यनेन बालदेशान्तरितपुत्राया अन्येनाप्यधिकारिणा सपिण्डनं कार्य्यमिति केचित्। तन्न

पुत्रेणैव तु कर्त्तव्यं सपिण्डीकरणं स्त्रियाः

इति लघुहारीतवचने एवकारेणान्यकर्त्तृत्वव्यावर्त्तनात्।

तथा च पैठीनसिः—

अपुत्रायां मृतायान्तु पतिः कुर्य्यात् सपिण्डताम्।

अत्राप्यपुत्रायाः पतिमात्रकर्त्तव्यत्वोपदेशाच्च॥

दृद्धाश्च पठन्ति—

पतिपुत्रौ विना नान्यैः स्त्रियाः कार्य्या सपिण्डता।

ननु, सपिण्डनाभावे पितृलोकप्राप्त्यभावात् कथं प्रत्याब्दिकं स्यादित्यत आह नृणां पुंसां सपिण्डनाधिकारिशून्यानां यद्वत्सपिण्डनं

विनाप्येकोद्दिष्टं विहितं तथात्रापि पञ्चदशभिरेव श्राद्धैः पितृत्व-प्राप्तिरित्यर्थः।

लघुहारीतः—

पुत्त्रेणैव तु कर्त्तव्यं सपिण्डीकरणं स्त्रियाः।
पुरुषस्य पुनस्तस्य भ्रातृपुत्त्रादयोऽपि ये॥

भ्रातृपुत्त्रादयस्तु—

भ्राता वा भ्रातृपुत्त्रो वा सपिण्डः शिष्य एव वा।

इति तेनैव लघुहारीतेन प्रागुक्ताः।

अत्र चाविशेषात् सपिण्डपदेन स्त्रीपुंसोर्ग्रहणाद्दत्तदुहितृ-पत्नी स्नुषादीनां सपिण्डनाधिकारः प्रतिपादितः।

तेन पितृसमानोदक दत्तदुहितृ दौहित्रादिभिः पञ्चदशैव श्राद्धानि कार्य्याणि न सपिण्डनमिति।

अत्र केचित् दौहित्रस्योत्तरक्रियायामधिकारात् सपिण्डनेऽप्यधिकारमाहुः। तन्न—

लघुहारीतेन भ्रातृपुत्त्राणामेव नियमविधानादन्येषां पर्य्युदस्तत्वात्। न च सपिण्डनाधीनोत्तरक्रिया सपिण्डनं विनापि स्त्रीणामुत्तरक्रियादर्शनात् किन्तु पितृलोकप्राप्त्यधीना सा च पञ्च-दशश्राद्धैरेव स्त्रीवत् पुंसोऽपि जातेति प्रागुक्तमेवेति।

तेन सपिण्डनानधिकारिकर्त्तव्यानां पञ्चदशश्राद्धानां प्रेतत्व-परिहारपूर्व्वकपितृत्वप्राप्तिः फलं सपिण्डीकरणाधिकारिकर्त्त-व्यानां षोड़शश्राद्धानां प्रेतत्वपरिहारः फलं सपिण्डीकरणस्य तु पितृत्वप्राप्तिरपि।

यथाह यमः—

यस्यैतानि न दीयन्ते प्रेतश्राद्धानि षोडश ।

पिशाचत्वं ध्रुवं तस्य दत्तैः श्राद्धशतैरपि ॥

विष्णुपुराणे—

प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु ।

सपिण्डनानन्तरं हारीतः—

ततः प्रभृति वै प्रेतः पितृसामान्यमाप्नुयात् ।

विन्दते पितृलोकञ्च ततः श्राद्धं प्रवर्त्तते ॥

तदयं संक्षेपः ।

स्त्रीणां पुत्रः सपत्नीजः पतिः कुर्य्यात् सपिण्डताम् ।

सर्व्वे सपिण्डाः पुत्राद्याः स्त्रियः पुंसां न चेतरे ॥

अथाशौचान्तद्वितीयदिनविहितशुद्धौ विवेक्तव्यायां प्रसङ्गात्तत्पूर्व्वकृत्यानि निर्हरणादीनि विविच्यन्ते।

प्रसङ्गात् प्रेतकृत्यानि तन्वतो मम मङ्गलम्।
तन्यात् सानन्दगोविन्दपादाब्जजन्यजयध्वनिः॥

तत्रासन्नमरणं त्रैवर्णिकं नववस्त्रयज्ञोपवीतादिभिर्भूषितं बहिर्गोमयोपलिप्तायां भूमौ दक्षिणाग्रान् कुशानास्तीर्य्य दक्षिणाशिरसं स्थापयेत्। शूद्रन्तु गृह एव स्त्रीशूद्रौ तु विना यज्ञोपवीतं भूषयेत्तुलसीमालाधारणं शालग्रामशिलासन्निधानञ्च कार्य्यम्।

आदिपुराणे—

म्रियमाणो बहिर्नेयः स्थाप्यः शूद्रो गृहेऽथवा।
मृण्मयानि च भाण्डानि सर्व्वाणि तु समुत्सृजेत्॥

स्पर्शनार्थं समुत्सृजेत् पृथक्कृत्वा स्थापयेदित्यर्थः। अथवेति तीर्थसद्भावे शूद्रस्तीर्थंनेय इति व्यवस्थितविकल्पः।

तथा—

दुर्ब्बलं स्नपयित्वा तु शुद्धचेलाभिसंवृतम्।
दक्षिणाशिरसं भूमौ बर्हिष्मत्यां निवेशयेत्॥

गङ्गादितीर्थेषु तु चातुर्वर्णिकस्यैव उदकमध्ये शरीरार्द्धं कृत्वा भूमिस्पर्शोऽवश्यमेव कारयितव्यः।

यथा विष्णुपुराणे भारतवर्षमधिकृत्य—

इतः सम्प्राप्यते स्वर्गो मुक्तिमस्मात् प्रयान्ति च।
तिर्य्यक्त्वं नारकत्वञ्च यान्त्यतः मनुजा मुने॥

तु पितृत्वप्रीतं दृष्ट्वा सुवर्णादिकं पापक्षयार्थं दापयेत्।

वराहपुराणे—

दापयेत् श्रेष्ठभावेन भूमिं देधा द्विजातिषु।
सुवर्णं वा हिरण्यं वा यथोत्पन्नन्तु माधवि॥
तत्र लोकहितार्थाय गोप्रदानं विधीयते।
तथैव दीपदानेन क्षिप्रं मुच्येत किल्बिषात्॥

भूमीति पृथिवीसम्बोधनं द्वेधा द्विप्रकारकं सुवर्णं काञ्चनं हिरण्यं रजतञ्च यथाशक्ति समुच्चयेन दद्यात्।

अग्निपुराणे—

आसन्नमृत्युना देया सवत्सा गौस्तु पूर्व्ववत्।
यमद्वारे महाघोरे तप्ता वैतरणी स्मृता॥

तत्र प्राङ्मुख आचान्त उदङ्मुखं ब्राह्मणमुपवेश्य काञ्चनमग्निं तत्सम्प्रदानञ्च गन्धपुष्पादिनाभ्यर्च्य इदं काञ्चनं तुभ्यं ददामीति द्विजकरे जलदानं ददस्वेति तेनोक्ते वारिणा काञ्चनमभ्युक्ष्य वामहस्तेन धृत्वा कुशतिलजलान्यादाय—

ॐ अद्येत्यादि क्षिप्रपापप्रमोचनकाम इदं काञ्चनमर्च्चितममुकगोत्राय अमुकशर्म्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे इति द्विजकरे सकुशजलं दद्यात्।

प्रतिग्रहीता गृहीत्वा स्वस्तीति वदेत्। अद्येत्यादि कृतैतत्काञ्चनदानप्रतिष्ठार्थं दक्षिणामिदं रजतं पितृदैवतं अमुकगोत्रायामुकशर्म्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे इति दक्षिणां दद्यात्। प्रतिग्रहीता स्वस्तीत्युक्त्वा दक्षिणां स्पृष्ट्वा गायत्रीं कामस्तुतिञ्च पठित्वा काञ्चनमिदमग्निदैवतमिति वदेत्।

कामस्तुतिस्तु-यजुर्वेदिनां ॐ कोऽदात् कस्मा अदात् कामोऽदात् कामायादात् कामो दाता कामः प्रतिग्रहीता कामैतत्ते तव कामस्तता भुञ्जामहं।

सामगानान्तु—ॐ क इदं कस्मा अदात् कामः कामायादात् कामो दाता कामः प्रतिग्रहीता कामः समुद्रमाविशत् कामेन त्वां प्रतिगृह्णामि कामैतत्ते इति।

एवं पितृदैवतं रजतमपि दद्यात्। रजतस्य तु काञ्चनदक्षिणा।

ततः कृष्णगवीमानीय कृष्णगवीं रुद्रं ब्राह्मणञ्च गन्धादिभिः सम्पूज्य पूर्व्ववत् द्विजकरे जलदानादिकं कृत्वा गामभ्युक्ष्य—

ॐ कृष्णे वर्षति शीते वा मारुते वाति वा भृशम्।
दातारं त्रायते यस्मात्तस्माद्वैतरणी स्मृता॥
यमद्वारे महाघोरे कष्टा* वैतरणी नदी।
ताञ्च तर्त्तुं ददाम्येतां कृष्णां वैतरणीं स्मृताम्॥

इति पठित्वा ॐ अद्येत्यादि यमद्वारावस्थितवैतरणीसंज्ञकनदीसुखसन्तरणकाम इमां कृष्णगवीं सवत्सामर्च्चितां वैतरणीसंज्ञिकां रुद्रदैवताममुकगोत्रायामुकशर्म्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे इति सकुशतिलजलपुच्छं करे दद्यात्। ग्रहीता पुच्छं गृहीत्वा स्वस्तीति वदेत्। काञ्चनदक्षिणां गृहीत्वा गायत्रीं कामस्तुतिञ्च पठित्वा गौरियं रुद्रदैवतेति वदेत्। एवं विप्रकिल्बिषमोचनकामनया विष्णुदैवतं दीपं दद्यात्।

---

* ख पुस्तके - तप्ता।

ततो वराहपुराणोक्तमन्त्रेण संसारमोक्षणफलाय वासुदेवमुद्दिश्य मधुपर्कं दद्यात्।

वराहपुराणे—

प्रयाणकाले च ततो मन्त्रेण विधिपूर्वकम्।
मन्त्रेणैव दातव्यं सर्वं संसारमोक्षणम्॥
मधुपर्कं ततो गृह्य इमं मन्त्रमुदीरयेत्।

ॐ सङ्गच्छ मागच्छ मद्देव देहि मधुपर्कं संसारमोक्षणम्। शरीरं शवमागन्तुरहं नित्यहन्मि शरीरशोधनं गृह्य लोकनाथ प्रोक्तमिमं मधुपर्कम्। इति एष मधुपर्कः श्रीवासुदेवाय नम इति दद्यात्।

आज्यं दधिमधूमिश्रं मधुपर्कं विदुर्बुधाः।

वाराहे—

पुरुषो मृत्युकाले तु दत्त्वा संसारमोक्षणम्।
एवं विनिःसृतैः प्राणैः संसारं न स गच्छति॥

ततश्च ओमित्येकाक्षरं ब्रह्मेत्यादिना भादिनामश्रावणमुखैः कर्णं कार्य्यम्।

तथाच श्रीभागवते—

अन्तलाभः परं पुंसामन्ते नारायणस्मृतिः। इति॥

ततो गतप्राणं घृतेनाभ्यञ्जयेत्—

छन्दोगपरिशिष्टम्—

घृतेनाभ्यक्तमाप्लाव्य सवस्त्रं सूपवीतिनम्।
चन्दनोक्षितसर्व्वाङ्गं सुमनोभिर्विभूषयेत्॥

वराहपुराणे—

घृततैलसमायुक्तं कृत्वा देहविशोधनम्।
दक्षिणाशिरसं कृत्वा सचेलन्तु शवन्तदा॥
तीर्थस्यावाहनं कृत्वा स्नपनं तत्र कारयेत्।
गयादीनि च तीर्थानि ये च पुण्याः शिलोच्चयाः॥
कुरुक्षेत्रञ्च गङ्गाञ्च यमुनाञ्च सरिद्वराम्।
कौशिकीं चन्द्रभागाञ्च सर्व्वपापप्रणाशिनीम्॥
*भद्रावकाशां सरयूं गण्डकीं पनसां तथा।
वैणवञ्च वराहञ्च तीर्थं पिण्डारकं तथा॥
पृथिव्यां यानि तीर्थानि चतुरः सागरांस्तथा।

इति मन्त्रेणावाह्य स्नपयित्वा दक्षिणाशिरसं वस्त्रपुष्पचन्दनादिभिरलङ्कृतं मुख-नासाद्वय-कर्णद्वय-नेत्रद्वयेषु सप्तसु स्वर्णखण्डानि तदभावे कांस्ययुक्तं† विद्रुमं वा मुखे दत्वा वस्त्राच्छादितमुखं ब्राह्मणं पूर्व्वद्वारेण शूद्रन्तु दक्षिणद्वारेण सजातीया निर्हरेयुः।

तथादिपुराणे—

प्रेतः स्नातो वस्त्र-माल्य-गन्ध-पुष्पाद्यलङ्कृतः।
श्मशानभूमिं नेतव्यो ब्राह्मणैरनहंकृतैः॥
मुखे निधाय वा कांस्यं सुवर्णं मणिविद्रुमम्।
चतुर्विधेन वाद्येन कुर्य्युः कोलाहलं महत्॥

---

* क पुस्तके—तत्रावकाशाम्।
† ख पुस्तके कांस्यं सप्तम्।

छन्दोगपरिशिष्टे—

हिरण्यशकलान्यस्य क्षिप्त्वा छिद्रेषु सप्तसु।
मुख्येष्वथ पिधायैनं निर्हरेयुः सुतादयः॥

मुख्येषु मुखसम्बन्धिषु छिद्रेष्वित्यर्थः।

मनुः—

दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत्।
पश्चिमोत्तरपूर्व्वैस्तु यथायोगं द्विजन्मनः॥

विष्णुः—

मृतं द्विजं न शूद्रेण निर्हारयेन्न च शूद्रं द्विजेन।
इति द्विजान्यसद्भावे शूद्रेणापि निर्हरणमापत्कल्पः॥
न विप्रं स्वेषु तिष्ठत्सु मृतं शूद्रेण निर्हरेत्।
इति मनुवचने स्वेषु तिष्ठत्स्वित्युपादानात्।

यमः—

यस्यानयति शूद्रोऽग्निं तृणकाष्ठहवींषि च।
मर्त्यते ह्येव धर्म्मोऽस्ति स पापेन लिप्यते॥

इतमग्निश्च शूद्रेण कदापि नानेतव्यः, असमर्थौ काष्ठमात्रमानेतव्यं चितायान्तु कदापि न दातव्यम्।

देवलः—

चण्डालाग्नेरमेध्याग्नेः सूतिकाग्नेश्च कर्हिचित्।
पतिताग्नेश्चिताग्नेश्च न शिष्टैर्ग्रहणं स्मृतम्॥

हारीतः—

न ग्रामाभिमुखं प्रेतं निर्हरेयुर्यदि वर्त्मनि ग्रामः स्यात्तदा तन्मध्ये न गन्तव्यम्।

इति बहिर्वर्त्मना गन्तव्यमित्यर्थः।

छन्दोगपरिशिष्टम्—

ग्रामपार्श्वेऽवमादाय प्रेतमग्निपुरःसरम्।

एकोऽनुगच्छेत्तस्यार्द्धमर्द्धपथ्यु*त्सृजेद्भुवि॥

तूष्णीं त्यजेदित्यर्थः।

भूमौ शनैर्निधातव्य इति पुराणवचनात् भूमौ शवः शनैरेव स्थापनीयः।[१]

आदिपुराणे—

नदीमध्ये सनाथस्तु दग्धव्यश्च न चान्यथा।

यस्मिन् देशे जलं नास्ति तुषारं वा न विद्यते॥

तत्र तोयकथा कार्य्या वक्तव्यं वा हिमं हिमम्॥

ततो नदीतीरे जलसमीपे वा तदभावे तोयकथां कृत्वा चितां निर्म्माय स्नातः पुत्रादिः समशुचिभूमावुपविष्टो दक्षिणामुखो वामं जानु भूमौ कृत्वा वक्ष्यमाणपिण्डदानेतिकर्त्तव्यतया मण्डलीकरण-रेखावनेजनवर्ज्जया ग्रमन्त्रकमेव ग्रामपात्रादवशिष्टमन्नार्द्धं दद्यात्।

यथा गोमयोपलिप्तायां भूमौ तूष्णीं मण्डलिकां विधाय तत्र कुशेन दक्षिणाग्रां रेखां कृत्वा रेखामभ्युक्ष्य ॐ अमुकगोत्र

* ख पुस्तके—अर्द्धमनुव्रजेत्।

प्रेतामुकशर्म्मन्नेतत्ते जलमवनेनिक्ष्व इति सतिलजलं दत्वा— यजुर्वेदी कुशानास्तीर्य्य तिलान् विकिरेत्।

सामगस्तु-रेखामभ्युक्ष्य तदुपरि कुशानास्तीर्य्य तिलान् विकीर्य्य ॐ अमुकगोत्र प्रेतामुकशर्म्मन्नेतत्ते जलमवनेनिक्ष्व इति सतिलजलं दद्यात्। ततोऽन्नं गृहीत्वा ॐ अमुकगोत्र प्रेतामुकशर्म्मन्नेतत्ते-ऽन्नमुपतिष्ठतामिति तथा कुशोपरि दद्यात्। ततः पात्रक्षालन पुनरवनेजनं दद्यात्तूष्णीं यथाशक्ति गन्धादिदानमिति।

छन्दोगपरिशिष्टम्—

अश्मादहनमध्याय भूमौ नो दक्षिणामुखः।
सव्यं जान्वाच्य शनकैः सतिलं पिण्डदानवत्॥

उत्सृजेदिति पूर्व्वेणान्वयः। तथा तत्रैव।

अथ पुत्रादिराप्लुत्य कुर्य्याद्दारुचयं महत्।
भूप्रदेशे शुचौ युक्ते पश्चाच्चित्यादिलक्षणम्॥

आदहनं *[श्मशानं] आश्व पातयित्वा आप्लुत्य स्नात्वा अग्निदाता महान्तं दारुसमूहं कुर्य्यात्। ततः प्राचीनावीती पातितवाम-जानुर्यथायोग्यभूमौ दारुसंभृतेः पश्चात् करिष्यमाणाया दारु-चितेर्दाहस्थापनस्थादिभूतं लक्षणमग्निस्थापनार्थं पञ्चधा भूसंस्कारं कुर्य्यात्।

तत्र यजुर्वेदिनां प्रथममेव कारशोधनं ततो गोमयेनोपलेपनं तत्र हस्तप्रमाणे स्थण्डिले कुशमूलेन प्रागग्रं प्रादेशप्रमाणं

---

* ख पुस्तके [ ] चिह्नितांशो नास्ति। ख पुस्तके—चितास्थिखचितः।

समाङ्गुलान्तरितं प्रजापतीन्द्रसोमदैवतं रेखात्रयं कृत्वा क्रमेण रेखामूलकारं गृहीत्वा ऐशान्यां प्रक्षिप्य रेखात्रयस्याभ्युक्षणम्।

सामगानान्तु प्रथममेव कर्म्मोधनं ततो गोमयेनोपलिप्य तत्र हस्तप्रमाणे स्थण्डिले मूलेन प्रागग्रां द्वादशाङ्गुलप्रमाणां रेखां पृथ्वीदेवताकां पीतवर्णामुल्लिख्य तन्मूललग्नामुत्तराग्रामेकविंशत्यङ्गुलप्रमाणामग्निदेवतां लोहितवर्णां रेखां कृत्वा एतत्संलग्नप्रथमरेखातः समाङ्गुलान्तरिताः प्रागग्राः प्रादेशप्रमाणास्तिस्रो रेखाः प्रजापतीन्द्रसोमदेवता नीलकृष्णशुक्लवर्णाः कृत्वा क्रमेण रेखामूलकारं गृहीत्वा ॐ निरस्तः परावसुरिति ऐशान्यां दिशि क्षिप्त्वा रेखाभ्युक्षणमिति।

एतच्चोपनीतमात्रस्य निरग्नेरपि यथा पारस्करः—

यद्युपेतो भूजोषणादि समानं यदाहिताग्नेरुदकान्तस्य यावत् गमनादिति।

भूजोषणं भूसंस्कारः तदारभ्य स्नानाग्निदानादि जलसमीपगमनपर्य्यन्तं यदाहिताग्नेः क्रियते तत्सर्व्वमुपनीतमात्रस्यापीत्यर्थः।

ततो गयादीनि च तीर्थानि इत्यादिमन्त्रेण तीर्थमावाह्य पूर्व्वस्नापितं शवं शुचिवस्त्रद्वययज्ञोपवीतधरं गन्धमाल्याद्यलङ्कृतं दारुचयरचितचितायामास्तीर्णकुशायां यजुर्वेदिनमुत्तरशिरसं छन्दोगिनं दक्षिणशिरसं पुरुषमधोमुखं स्त्रियमुत्तानदेहामारोपयेत्।

आदिपुराणे—

सगोत्रजैर्गृहीत्वा तु चितामारोप्यते शवः* ।

अधोमुखो दक्षिणादिक्चरणस्तु पुमानितिं† ॥

उत्तानदेहा नारी तु सपिण्डैरेव बन्धुभिः ।

दक्षिणादिक्चरण इत्यनेनोत्तरशिरस्त्वमुक्तम् । छन्दोगस्य तु दक्षिणाशिरस्कं तथेति साग्निदाहे उक्ता पश्चात्—

एष एवाग्निहोताग्नेः प्रेतस्य विधिरिष्यते ।

इत्यादिना छन्दोगपरिशिष्टकृता निरग्नेरप्युपसंहारात् दक्षिणाशिरस्त्वमेव ।

ततश्च देवाश्चाग्निमुखाः सर्व्वे एनं दहन्त्विति मनसा ध्यात्वा पातितवामजानुः प्राचीनावीती दक्षिणामुखो हुताशनं गृहीत्वा—

ॐ-कृत्वा तु दुष्करं कर्म्म जानता वाप्यजानता ।

मृत्युकालवशं प्राप्य नरं पञ्चत्वमागतम् ॥

धर्म्माधर्म्मसमायुक्तं लोभमोहसमावृतम् ।

दहेयं सर्व्वगात्राणि दिव्यान् लोकान् स गच्छतु ॥

एवमुक्त्वा ततः शीघ्रं कृत्वा चैव प्रदक्षिणम् ।

ज्वलमानं तथा वह्निं शिरःस्थाने प्रदापयेत् ।

चतुर्व्वर्णेषु संस्थानमेवं भवति पुत्रक ॥

अयञ्च वराहपुराणीयमन्त्रः स्त्रीदाहेऽप्यविशेषात् एव पठनीयः ।

---

* क पुस्तके—शिरः ।

† क पुस्तके - पुमानपि ।

नरशब्दस्य मनुष्यजातिमात्रे प्रयोगादन्वयोपपत्तेः। ततस्तु काष्ठादि घृतं प्रक्षिप्य दग्ध्वा किञ्चिच्छेषमवशेषयेत्।

आदिपुराणे—

> अन्यत्र भवेद्दुःखी यदि नरस्तु* दह्यते।
> निःशेषस्तु न दग्धव्यः किञ्चिच्छेषं त्यजेत्ततः॥

प्रचेताः—

> नग्नं देहं दहेन्नैव किञ्चिद्देयं परित्यजेत्।

श्मशानवासिचण्डालाद्यर्थं देयं वस्त्रखण्डादिकं किञ्चित्-परित्यजेदित्यर्थः। ततः प्रादेशप्रमाणामेकां समिधमादाय चिताग्निं प्रदक्षिणीकृत्याग्नौ प्रक्षिप्य क्रव्यादाय नमस्तुभ्यमित्यनेन मन्त्रेण ज्वलदुल्मूकोपरि कुठारेण प्रहारं कुर्य्यात्।

एवं सप्तवारान् सप्त समिधः क्षिप्त्वा सप्तप्रहारान् कृत्वा अवमनवेक्षमाणः स्नानार्थं नदीं गच्छेदिति नारायणोपाध्यायः।

यथादिपुराणे—

> गच्छेत्प्रदक्षिणाः सप्त समिद्भिः सप्तभिः सह।
> देयाः प्रहाराः सप्तैव कुठारेणोल्मूकोपरि†॥
> क्रव्यादाय नमस्तुभ्यमिति अप्यं समाहितैः।
> नावेक्षितव्यः क्रव्यादो गन्तव्या च ततो नदी॥

प्रदक्षिणाः सप्त गतोगच्छेदित्यर्थः। क्रव्यादश्चिताख्योऽग्निस्त-मपश्यद्भिर्नदी गन्तव्येत्यर्थः।

---

* ख पुस्तके यदि भक्षति। † ग पुस्तके कुठारेण मुखोपरि।

अग्नौ समित्प्रक्षेपमाह प्रचेताः—

दग्ध्वा शवं ततस्त्वेवं प्रादेशाः काष्ठिकास्तथा।
सप्त प्रदक्षिणाः कृत्वा एकैकन्तु विनिःक्षिपेत्* ॥

प्रदक्षिणा गतोरिति शेषः क्षिपेत्प्रज्वलितचिताग्नावित्यर्थः।

रजस्वलायाः सूतिकायाःसंस्कारविशेषमाह पराशरः—

पञ्चभिः स्नपयित्वा तु गव्यैः प्रेतां रजस्वलाम्।
वस्त्रान्तरावृतां कृत्वा दाहयेद्विधिपूर्व्वकम् ॥

तथा—

सूतिकायां मृतायान्तु कथं कुर्व्वन्ति याज्ञिकाः।
कुम्भे सलिलमादाय पञ्चगव्यं तथैव च ॥
पुण्यर्चैवाभिमन्त्र्यापः ऋचा शुद्धिं लभेत्ततः।
तेनैव स्नपयित्वा तु दाहं कुर्य्याद्यथाविधि ॥

पुण्यया ऋचा आपोहिष्ठाऽघमर्षणादिमन्त्रेण, सगर्भा चेन्म्रियते तदा कदाचित् गर्भस्य जीवनाशशङ्कया मृतस्य तु गर्भस्याग्निसंस्कारानर्हत्वाच्च उदरं विदार्य्य गर्भं पृथक्कृत्य नारी यथाविधि संस्कार्य्या मृतगर्भस्य तु खननादिप्रतिपत्तिः।

एतन्मूलकमेव वचनं पठन्ति—

अथ चेद्गर्भसंयुक्ता नारी दैवाद्विपद्यते।
अन्तःशल्यं पृथक्कृत्य संस्कर्त्तव्या यथाविधि ॥

---

* क, ग पुस्तकद्वये—एकैकाग्नौ इन्धनं क्षिपेत्।

स्त्रीणां प्रहगमनपरिपाटी सद्यःशौचप्रकरणे पूर्व्वंलिखिताऽस्ति। शरीरालाभेऽस्थीन्यादाय घृतेनाभ्यज्य ऊर्णातन्तुनाच्छाद्य पूर्व्ववत् दहेत्।

यथाह छन्दोगपरिशिष्टम्—

विदेशमरणेऽस्थीनि आहृत्याभ्यज्य सर्पिषा।
दाहयेदूर्णयाच्छाद्य पात्रन्यासादि पूर्व्ववत्॥

स्रुगादिपात्रन्यासस्तु साग्निविषयः। [अशौचाभ्यन्तरे तदशौचमेव। अशौचात् परन्तु दाहनिमित्तं त्रिरात्राशौचम्।] अस्थ्नामप्यलाभे शरपत्रैः पुत्तलकं कृत्वा षष्ठ्यधिकपलाशपत्रशतत्रयं यथास्थानं नियोज्य यवपिष्टेन विलिप्य "असौ स्वर्गाय लोकाय स्वाहेत्युक्त्वा" तथैव दहेत् जलधाराञ्च दद्यात्।

ब्रह्मपरिशिष्टे—

अशीत्यर्द्धञ्च शिरसि ग्रीवायां दश योजयेत्।
उरसि त्रिंशतं दद्याद्विंशतिं जठरे तथा॥
बाहुभ्याञ्च शतं दद्याद्दद्यादङ्गुलिभिर्दश।
द्वादशार्द्धं वृषणयोरष्टार्द्धं शिश्न एव च॥
ऊरुभ्याञ्च शतं दद्यात्त्रिंशतं जानुजङ्घयोः।
पादाङ्गुलिषु च दश एतत् प्रेतस्य लक्षणम्॥
ऊर्णासूत्रेण संवेष्ट्य यवपिष्टेन लेपयेत्।
संस्कृत्य विधिनाग्निभिर्जलधारां ततो हरेत्॥

---

[ ] क पुस्तके चिह्नितांशः पतितः।

आदिपुराणे—

तदभावे पलाशोत्थैः पत्रैः कार्य्यः पुमानपि।
शतैस्त्रिभिस्तथा षष्ट्या शरपत्रैर्विधानतः॥
वेष्टितव्यस्तथा यत्नात् कृष्णसारस्य चर्म्मणा।
ऊर्णासूत्रेण बद्धा तु प्रलेप्तव्यस्तथा यवैः॥
सुपिष्टैर्जलसंमिश्रैः प्रदग्धव्यस्तथाग्निना।
असौ स्वर्गाय लोकाय स्वाहेत्युक्ता सबान्धवैः॥
एवं पर्णनरं दग्ध्वा त्रिरात्रमशुचिर्भवेत्।

तस्य कालमाह जावालः—

आत्रिपक्षाद्दहेन्नैव नरपर्णं कथञ्चन।
त्रिपक्षे तु गते दह्यो दर्शे प्राप्ते ह्यनग्निकः॥

अत्रानग्निरिति विशेषणात् साग्नेस्त्रिपक्षापेक्षा नास्ति किन्तु अनन्तरदर्शात् पूर्व्वमेव।

तथा विष्णुः—

तथा त्रिपक्षे गते तु पर्णनरं दहेच्चानग्निः।

वायुपुराणे—

नरपर्णं दहेन्नैव प्राक् त्रिपक्षात् कथञ्चन।
पितृहा मातृहा स स्यात्र च दर्शे दहेद्यदि॥

सुमन्तुः—

अस्थ्नामलाभे दर्शे तु ततः पर्णनरं दहेत्।

मृताहाज्ञाने श्राद्धमाह प्रचेताः—

अविज्ञाते मृतेऽमावस्यायां श्रवणदिवसे वा॥

मृतशब्दोऽत्र मृताहपरः, अज्ञातमरणस्यौर्द्ध्वदेहिकाभावात् मास-ज्ञाने तिथ्यज्ञाने तु तन्मासीयामावस्या कृष्णैकादशी वा ग्राह्या । उभयोरज्ञाने श्रवणदिवस इति व्यवस्था ।

ततस्त्वमावस्यायां पर्णनरं दग्ध्वा अशौचोत्तरमेकोद्दिष्टं कृत्वा श्रवणदिवसादारभ्य प्रतिमासिकं संवत्सरपर्य्यन्तं यथाक्रमं समाप्य श्रवणदिवस एव सपिण्डीकरणं प्रत्याब्दिकञ्च करणीयम् । संवत्सरविशेषज्ञाने मासज्ञाने च तिथिमात्राज्ञाने पर्णनरं दग्ध्वा अशौचात्परं एकोद्दिष्टं कृत्वा पतितमासिकं पतितवार्षिकञ्च कृष्णैकादश्यां कृत्वा प्रकृतमासिकं प्रकृतवार्षिकं वा तन्मासीया-मावस्यायां कार्य्यम् । श्रवणदिवसाज्ञाने बाल्ये वा पित्रोर्मरणे व्यवस्थामाह—

पद्मपुराणे—

न जानाति दिनं यस्तु न मासं वसुधाधिप* ।
तेन कार्य्यममावस्यां श्राद्धं संवत्सरं खलु ।
मार्गशीर्षे तथा मासे वैशाखे ज्यैष्ठ एव वा ॥

एवञ्च पर्णनरदाहे कृते †[ अमावस्यायां सांवत्सरिकमेकोद्दिष्ट-मेव कार्य्यं न तु पार्व्वणं अमावस्याश्रयत्वाभावात् ।

अमावस्यां क्षयो यस्येत्यादि प्रचेतोवचनेन क्षयाह एव पार्व्वण-विधानात् ।

---

* ग पुस्तके—श्राद्धं चापि नराधिप ।

† ख पुस्तके — [ ] [illegible]

पर्वनरदाहे कृते ] यदि तदस्थीनि लभ्यन्ते तदा तेषां पुन-र्दाहमात्रं त्रिरात्राशौचञ्च न तु पुनः पिण्डादिदानम्।

तथा आदिपुराणे—

एवं कृते मृतभ्रान्त्या यद्यागच्छेत् पुनः क्वचित्।
कुर्य्यात्तदायुषोमिष्टिं पुनराधाय पावकम्॥

अनतीतद्विवर्षं प्रेतं गन्धमाल्यादिभिरलङ्कृत्य—

अपदूहर्नयमानो गामश्वं पुरुषं पशून्।
वैवस्वतो न तृप्यति सुरया इव दुर्मतिः॥

इति यमगाथां गायन्तो॰ बान्धवा ग्रामाद्बहिः शुचिदेशे निखनेयु-र्न कदाचित् अग्निदाहोदकदानादिः।

याज्ञवल्क्यः—

ऊनद्विवर्षं निखनेन्न कुर्य्यादुदकन्ततः।

आदिपुराणे—

वस्त्राद्यैर्भूषितं कृत्वा निक्षिपेत्तन्तु काष्ठवत्।
खनित्वा शनकैर्भूमौ सद्यःशौचं विधीयते॥

## अथोदकदानादिः ।

सर्व्व एव शवस्पृशः सपिण्डाद्या दाहस्थानमनवेक्षमाणा यत्र नद्यादौ स्रोतो नास्ति तत्राहरह इत्यादि यमगाथां गायन्तो यथा— ह्रस्वपुरःसरं गत्वा जलं प्रविश्य सर्व्वाण्येव वासांसि प्रक्षाल्य पुनस्तदेव वस्त्रं परिधाय प्राचीनावीतिन एकवस्त्रा दक्षिणामुखाः स्यालकमन्यं वा सम्बन्धिनं प्रेतायोदकं करिष्याम इति पृच्छेयुः। कुरुध्वं मा चैवं पुनरित्यशतवर्षे प्रेते कुरुध्वमेवेतरस्मिन्निति तेनोक्ते वामहस्तानामिकया अप आलोड्य ॐ अपनः शोशुचदघमिति मन्त्रेण सकृत् स्नानं कुर्य्युः, अङ्गञ्च न घर्षेयुः*, भुग्नकुशैः पितृतीर्थेन सतिलजलाञ्जलिमेकं सर्व्वे दद्युः। स्त्रीशूद्राणां मन्त्रपाठो नास्ति।

छन्दोगपरिशिष्टम्—

अथानवेक्षमेत्यापः सर्व्व एव शवस्पृशः।
स्नात्वा सचेलमाचम्य दद्युरस्योदकं जले॥

चिताग्न्यवेक्षणरहितं यथा स्यात्तथा अप एत्य गत्वा सर्व्व एव शवस्पृशः सपिण्डाद्या जल एव दद्युर्न स्थल इत्यर्थः।

शवस्पृशां मध्ये नित्याधिकारिणं काम्याधिकारिणश्चाह—

याज्ञवल्क्यः—

सप्तमाद्दशमाद्वापि ज्ञातयोऽभ्युपयन्त्यपः।
अपनः शोशुचदघमनेन पितृदिङ्मुखाः॥

---

* क पुस्तके—घर्षयेयुः।

एवं मातामहाचार्य्यप्रेतानामाशौदकक्रियाम्।
कामोदकं सखि-प्रत्ता-स्वस्रीय-श्वशुरर्त्विजाम्॥
सकृत् प्रसिञ्चन्त्युदकं नामगोत्रेण वाग्यताः।

दशमाहेति यस्य त्रयः पुरुषाः पतिताः प्रव्रजिता वा मर्क्कमेव जीवन्तो वा भवन्ति तस्य दशमपुरुषपर्य्यन्तं पिण्डलेपसम्बन्धात् सापिण्ड्यं ज्ञातव्यं ततः सपिण्डानां सपिण्डा मातामहाचार्य्ययोस्तु दौहित्रशिष्यावश्यमुदकं कुर्य्यातामन्येषान्तु ग्रवसप्तमां कामादिच्छावशादुदकदानं नावश्यकम्। प्रत्ता प्रदत्ता कन्या स्वस्रीयो भागिनेयः।

आश्वलायनः—

सव्यावृतां व्रजन्त्यनवेक्षमाणा यत्रोदकमवहं भवति तत्प्राप्य सकृदुन्मज्ज्य एकं जलाञ्जलिं नामगोत्राभ्यामुत्सृजेत्।

सव्यावृता वामावर्त्तेन चिताग्निमनवेक्षमाणा यत्र अवहं स्रोतो नास्तीत्यर्थः।

शङ्खलिखितौ—

प्रेतस्य बान्धवा यथावृद्धमुदकमवतीर्य्य नोद्धर्षयेरन् सकृदपः प्रसिञ्चेरन्।

आदिपुराणे—

आदौ वस्त्रञ्च प्रक्षाल्य तेनैवाच्छादितैस्ततः।
कर्त्तव्यं तैः सचेलन्तु स्नानं सर्व्वमलापहम्॥

पारस्करः—

संप्रयुक्तं मैथुनं याचेरन् उदकं करिष्याम इति कुरुध्वं मा चैवं

पुनरित्थंशतवर्षे प्रेते कुरुध्वमेवेतरस्मिन्निति सर्वे ज्ञातय आसप्तमात् पुरुषात् दशमाद्वा समानग्रामवासे यावत् सम्बन्धमनुस्मरेयुरेकवस्त्राः प्राचीनावीतिनः सव्यस्यानामिकया अप आलोड्य अपनः शोशुचदघमिति दक्षिणामुखा निमज्जन्ति प्रेतायोदकं प्रसिञ्चन्ति अञ्जलिना असावेतत्ते इति।

मैथुनं मिथुनसम्बन्धि श्यालकादिकम् संप्रयुक्तं सम्यक् प्रत्युत्तरदानकुशलं दशमाद्वेति पतितप्रव्रजितजीवत्पित्रादिविषयविषयम्। अयमस्मत्कुले जात इति यावत्सम्बन्धमनुस्मरेयुः तावत् समानोदकास्तेऽपि समानग्रामवासे हि स्मर्त्तुंयोग्यत्वादवश्यं कुर्य्युरेतेन शवस्पृशां सपिण्डानां समानोदकानां दौहित्रभिन्नयोश्च नित्याधिकारः। अन्येषाञ्च काम्य इति। अञ्जलिमित्येकवचनादेकाञ्जलिदानमावश्यकं सकृदपः प्रसिञ्चेरन्निति शङ्खलिखितवचनाच्च एकं जलाञ्जलिमित्याश्वलायनवचनाच्च।

यत्तु—

दक्षिणाभिमुखैर्विप्रैर्देयं तस्याञ्जलित्रयम्।

इत्यादिपुराणवचनं तत्फलातिशयार्थम्। असावेतत्ते इति सम्बोधनान्तनिर्देशादमुकगोत्र प्रेतामुकशर्म्मन्नेतत्ते तिलोदकमुपतिष्ठतामिति यजुर्वेदिनां प्रयोगः।

प्रगृह्य च रघुश्रेष्ठो जलपूरितमञ्जलिम्।
दिशं याम्यामभिमुखो रुदन् वचनमब्रवीत्॥
एतत्ते नृपशार्दूल विमलं तोयमुत्तमम्।
परलोकेषु पानीयं मद्दत्तमुपतिष्ठताम्॥ इति रामायणे—

प्रेतान्तनामगोत्राभ्यामुत्सृजेदुपतिष्ठताम्।

इति ब्रह्मपुराणे च उपतिष्ठतामित्यस्य दर्शनात् एतत्ते तिलोदकं तृप्यस्वेति कस्यचित् प्रयोगोऽप्रमाण एव। नारायणोपाध्याये-नापि तृप्यस्वेत्यप्रमाणकमित्युक्ता एतत्ते तिलोदकमिति मात्र-मुक्तम्। सामगानान्तु अमुकगोत्रं प्रेतममुकशर्म्माणं तर्पयामीति वाक्यम्।

यथा छन्दोगपरिशिष्टम्—

गोत्रनामानुवादादि तर्पयामीति चोत्तरम्।

दक्षिणाग्रान् कुशान् कृत्वा सतिलांस्तु सकृत् पृथक्॥

तर्पयामीत्यनेन गोत्रादिपदानां द्वितीयान्तत्वमायातम्। अनु-पश्चादुच्यते इत्यनुवादः प्रेतशब्दो जीवत्यपि पूर्व्वप्रवृत्तयोर्गोत्रनाम्नोः पश्चात् प्रवृत्तत्वात् गोत्रनामप्रेतशब्दा एतावन्मात्रमादिभूतं तर्पयामीति मात्रमुत्तरभूतं नान्यत् किञ्चित् वाच्यम्। अतएव एतत्तिलाञ्जलिनेति मध्ये कस्यचित् प्रयोगोऽशुद्ध एव।

पैठीनसिः—

मृतं मनसा ध्यायन्दक्षिणामुखस्त्रीनुदकाञ्जलीन् निनयेत्। शावप्रभृति एकादशाहे विरमेत्।

अत्रैकादशाहपदमशौचान्तद्वितीयदिनोपलक्षणं ततश्च तस्याप-स्यैवाधिकरणत्वावगमात्ततः परमपि तर्पणं कार्य्यम्।

तीर्थयात्रां विवाहञ्च स्वाध्यायञ्चान्यतर्पणम्।

संवत्सरं न कुर्व्वीत महागुरुनिपातने॥

इति वचने अन्यपददानसंरसाच।

सुमन्त्रस्तैर्नृपसुतैः सार्द्धमाश्वास्य राघवम्।
अवातारयदालम्ब्य नदीं मन्दाकिनीं ततः॥
ते सुतीर्थां नदीं कृच्छ्रादुपगम्य यशस्विनः।
शीततोयां सभी देशे प्रविश्य विमलाम्ततः।
असिञ्चन्नुदकं सर्व्वे तस्मै चैतद्भवत्विति॥

इति रामायणे कृतोदकयोर्भरतशत्रुघ्नयोर्वत्सराभ्यन्तरे पुनस्तर्पण-दर्शनाच्च।

एवं तृतीयसप्तमनवमाहेषु प्रेतोदकार्थं मिलित्वा सर्व्वे ज्ञातयस्तर्पणं कुर्य्युः।

यथा गोतमः—एवं तृतीयसप्तमनवमेष्वपीति।

स्नानाशक्तस्य शुचिमाह यमः—

आतुरे स्नानसंप्राप्ते दशकृत्वस्त्वनातुरः।
स्नात्वा स्नात्वा स्पृशेत् चिप्रं यतः* शुध्येत आतुरः॥

ततः पुनः स्नात्वाऽन्यद्वासः परिधाय स्नानवस्त्रं सकृदापीड्याचम्य शाद्वलशुचिदेशस्थितायां शोकापनोदकं कश्चित् प्रामाणिकः कुर्य्यात्।

याज्ञवल्क्यः—

कृतोदकान् समुत्तीर्णान् मृदुशाद्वलसंस्थितान्।
स्नातानपनुदेयु†स्तानितिहासैः पुरातनैः॥

अत्र तर्पणस्य स्नानोत्तरभवित्वेनैव प्राप्तेः पुनः स्नातानिति पदोपादानात् पुनः स्नानं कार्य्यम्।

* ग पुस्तके—स्पृशेत्तन्तु ततः।
† ग पुस्तके अपनयेयुः।

तथा महाभारते—

ते निनीयोऽदकं* सर्व्वे विलिप्य च भुवं पुनः।

आप्लुता हरिपादाब्जरजःपूतसरिज्जले॥

अत्र गङ्गायां पुनराप्लुता इत्यभिधानात्।

आश्वलायनः—

उत्तीर्य्यान्यानि वासांसि परिधाय सकृदापीडेति।

याज्ञवल्क्यः—

मानुष्ये कदलीस्तम्भनिःसारे सारमार्गणम्।

करोति यः स सम्मूढ़ो जलबुद्बुदसन्निभे॥

पञ्चधा सम्भृतः कायो यदि पञ्चत्वमागतः।

कर्म्मभिः स्वशरीरोत्थैस्तत्र का परिवेदना॥

गन्त्री वसुमती नाशमुदधिर्दैवतानि च।

फेनप्रख्यः कथं नाशं मर्त्यलोको न यास्यति॥

श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः।

अतो न रोदितव्यं तु क्रिया कार्य्या तु शक्तितः॥

इत्याद्यवश्यं श्रोतव्यं मुनिभिर्नियमेन विधानात्।

* क पुस्तके—विनीव।

† ख पुस्तके—यतः।

## अथ पिण्डदानविधिः ।

प्रचेताः—

तोयार्थन्तु ततो गच्छेद्गृहीत्वा पुरुषं पुरः ।
गृहीतलगुडं यत्नात् सर्व्वदुष्टनिवारणम् ॥

पुरुषान्तराभावे आदिपुराणे—

मृन्मयं भाण्डमादाय नवं स्नातः सुसंयतः ।
लगुडं सर्व्वदोषघ्नं गृहीत्वा तोयमानयेत् ॥

मत्स्यपुराणे—

प्रेतीभूतस्य सततं भुवि पिण्डं जलं तथा ।
सकुशं सतिलं दद्याद्बहिर्जलसमीपतः ॥

शुनःपुच्छः—

तिलमिश्रन्तु दर्भेषु पिण्डं दक्षिणतो हरेत् ।
द्वारमध्ये प्रदातव्यं देवतायतनेषु वा ॥
शालिभिः शक्तुभिर्वापि शाकैर्वाप्यथ निर्वपेत् ।
प्रथमेऽहनि यद्द्रव्यं तदेव स्याद्दशाहिकम् ॥

दक्षिणतो दक्षिणाग्रेषु दर्भेष्वित्यर्थः ।

यत्तु—प्रेतपिण्डं बहिर्दद्याद्दर्भमन्त्रविवर्ज्जितम् ।

इति मरीचिवचने दर्भवर्जनं तत्—

अकृतचूडा ये बाला ये च गर्भाद्विनिःसृताः ।
मृता ये चाग्निसंस्कारास्तेषां भूमौ प्रदीयते ॥

इति हारीतवचनैकवाक्यतावशात् पञ्चमाब्दाभ्यन्तरमृतस्य मोहा-हृधस्य विहितकालेऽप्यकृतचूडस्य विहितकालेऽप्यकृतोपनयनस्य च ज्ञेयम्।

मन्त्रवर्जनन्तु सामान्यप्रकरणात् सर्व्वस्यैव पिण्डप्रक्रियोपयोगियावन्मन्त्राणां पाठनिषेधकम्। मन्त्रवर्ज्जनाच्च मण्डलिकारेखाकरणादिपिण्डप्रक्रियाः सर्व्वा एव कार्य्या इत्यायातम्। गुणनिवृत्त्या मुख्यनिवृत्तेरन्याय्यत्वात् प्रेतपिण्डमिति वचनाच्च तीर्थादिश्राद्धे न तत्पाठोऽस्त्येवेति।

आदिपुराणे—

ततश्चोत्तरपूर्व्वस्यामग्निं प्रज्वालयेद्द्विजः।
तण्डुलप्रसृतौ तत्र द्विः प्रक्षाल्य पचेत् स्वयम्॥
सपवित्रैस्तिलैर्मिश्रां केशकीटविवर्ज्जिताम्।
द्वारोपान्ते ततः क्षिप्त्वा शुभ्रां वा गौरमृत्तिकाम्॥
तत्पृष्ठे प्रस्तरेद्दर्भान् याम्याग्रान् दैवसम्भवान्।
ततोऽवनेजनं दद्यात् संस्मरन् गोत्रनामनी॥
तिलसर्पिर्मधुक्षीरैर्मिश्रितं तत्समेव हि।
दद्यात् प्रेताय पिण्डन्तु दक्षिणाभिमुखस्थितः॥
अर्घ्यैः पुष्पैस्तथा धूपैर्दीपैस्तोयैश्च शीतलैः।
ऊर्णातन्तुमयैः शुभ्रैर्वासोभिः पिण्डमर्चयेत्॥

उत्तरपूर्व्वस्यां पिण्डस्थानादित्यर्थः। गोत्रनामनी इति वचनात् गोत्रनामपदप्रयोगमात्रं कार्य्यं न तु सम्बन्धापकपित्रादिपद-

प्रयोगः, दद्यात् प्रेताय प्रेतमुद्दिश्य इत्यनेन च प्रेतपदेन देवतात्वावगमात् सम्बन्धार्पकपदस्थाने प्रेतपदविधानाच्च।

तथाच श्राद्धविवेके—

एतत् प्रेतश्राद्धमिति गोभिलवचनात् प्रेतपदवत्त्वेन देवतात्वात् पितृपदस्थाने प्रेतपदविधानात् उत्सर्गवाक्ये मन्त्रे च पितृपदनिवृत्तिरिति न्यायमूलमिदम्—

पितृशब्दं न युञ्जीत पितृहा चोपजायते।

इत्याश्वलायनवचनम्। अतः सांवत्सरिकश्राद्धे पितृपदनिवृत्तिर्नास्तीति व्याख्यातम्।

पारस्करः—अवनेजन-पिण्डदान-प्रत्यवनेजनेषु. नामग्राहमिति।

अत्रावनेजनद्वयपिण्डदानेष्वेव नामग्रहणनियमादन्येषु जलाञ्जलि-माल्यद्रुम-धूप-दीपोर्णातन्तुदानादिषु नामग्रहणं न कार्य्यं, किन्तु एष ते जलाञ्जलिरित्यादिप्रयोगमात्रं एतेनामुकगोत्र प्रेतामुकदेवशर्म्मन्नेतत्ते जलमवनेनिक्ष्व इति प्रयोगः। पिण्डदानन्तु षष्ठ्यन्तेनैव न तु सम्बोधनान्तेन।

यथा कल्पतरुः—

न स्वधाञ्च प्रयुञ्जीत प्रेतपिण्डे दशाह्निके।

भाषेतैतच्च वै पिण्डं यद्वदत्तस्य पूरकम्॥

दशाह्निकपदादेकादशाहादिश्राद्धेषु, स्वधाशब्दप्रयोगोऽस्तीति-दर्शितम्।

यच्च ---

प्रेतश्राद्धेषु सर्व्वेषु न स्वधा नाभिरम्यताम्।

इति आश्वलायनग्टह्यं तत् स्वधावाचननिषेधकम्। अन्यथा सांवत्सरिकश्राद्धे एकोद्दिष्टधर्म्मातिदेशात् स्वधापदंप्रयोगो दुरुपपादनीयः कथं वा स्वधावाचननिषेधस्तत्राच चेति।

तर्हि पिण्डदाने वाक्यरचना कीदृशीत्याह—भाषितेति वचनबलात् पिण्डशब्दो नपुंसकलिङ्ग एव प्रयोज्यः, चकारोऽवधारणे एतदेव भाषितेत्यर्थः*। तेन —

शिरस्त्वाद्येन पिण्डेन प्रेतस्य पूर्य्यते तदा।
द्वितीयेन तु कर्णाक्षिनासिकास्तु समासतः॥
गलांसभुजवक्षांसि तृतीयेन यथाक्रमात्।
चतुर्थेन च पिण्डेन नाभिलिङ्गगुदानि च॥
जानुजङ्घे तथा पादौ पञ्चमेन तु सर्व्वदा।
सर्व्वचर्म्माणि षष्ठेन सप्तमेन तु नाड़यः॥
दन्तलोमाद्यष्टमेन वीर्य्यन्तु नवमेन च।
दशमेन तु पूर्णत्वं तृप्तता क्षुद्विपर्य्ययः॥

इति वचनात् केषाञ्चित् अमुकगोत्र प्रेतामुकशर्म्मन्नेतच्छिरःपूरकं पिण्डं ते मया दीयते तवोपतिष्ठतामित्यादि प्रयोगो हेय एव।

एतस्य वचनस्य तु तत्स्वरूपमात्रप्रतिपादकत्वेन कर्त्तुरुत्साहजननमात्रप्रयोजनतया तत्तदभिलापे प्रमाणाभावाच्च। तत्तच्चिन्तनेनापि वचनप्रयोजनसिद्धेश्च ते मया दीयते तवोपतिष्ठतामित्यस्य प्रमाणासिद्धत्वाच्च। तेन एतच्छिरःपूरकं पिण्डमित्यादि मनसि

सपिण्ड्य अमुकगोत्रस्य प्रेतस्यामुकशर्म्मण एतत्प्रथमं पूरकं पिण्ड-मित्यादिमात्रप्रयोगः शिवः।

अनिबद्धेन शिरःपूरणादिचिन्तनमपि न लिखितम्। अर्घा-दिभिरूर्णातन्तुमयवस्त्रान्तैः पिण्डार्च्चनं तूष्णीमेव कार्य्यं न तु नामगोत्रादिप्रयोगः।

तूष्णीं प्रत्येकं पुष्पञ्च धूपं दीपं तथैव च।

इति शुनःपुच्छवचनात्।

तथादिपुराणे—

एकस्तोयाञ्जलिस्त्वेके* पात्रमेकञ्च दीयते।
द्वितीये द्वौ तृतीये त्रीन् चतुर्थे चतुरस्तथा॥
पञ्चमे पञ्च षष्ठे षट् सप्तमे सप्त एव च।
अष्टमेऽष्टौ च नवमे नवैव दशमे दश।
येन स्युः पञ्चपञ्चाशत् तोयस्याञ्जलयः क्रमात्॥
तोयपात्राणि तावन्ति संयुतानि तिलादिभिः।

आममृच्छकलादिनेति छन्दोगपरिशिष्टवचनादाममृण्मयपात्रे तत्र पिण्डसमीपभूमौ गोमयेनोपलिप्तायां तोयाञ्जलिं माल्यञ्च दद्यात्।

प्रचेताः—अपद्वारे पिण्डं निर्वपेयुर्भूमौ माल्यं पानीयञ्चोप लिप्तायां दद्युरिति।

आदिपुराणे—

प्रयाति यावदाकाशं पिण्डाद्बाष्पमयी शिखा।
तावत्तत्सम्मुखः तिष्ठेत् सर्व्वं तोये ततः क्षिपेत्॥

* न पुस्तके एवं।

*[दिवसे दिवसे पिण्डो देय एवं क्रमेण तु।
द्विजस्य दशमः पिण्डो देय एवं क्रमेण तु॥
वैश्यानां पञ्चदशमे देयस्तु दशमस्तथा।
शूद्रस्य दशमःपिण्डो पूर्णे मासेऽह्नि दीयते॥
सद्यःशौचेऽपि दातव्या सर्व्वेऽपि युगपत्तथा॥]

त्र्यहाशौचे पारस्करः—

प्रथमे दिवसे देयास्त्रयः पिण्डाः समाहितैः।
द्वितीये चतुरो दद्यादस्थिसञ्चयनं तथा॥
त्रींस्तु दद्यात्तृतीयेऽह्नि वस्त्रादि क्षालयेत्तथा।
एकोद्दिष्टन्तु कर्त्तव्यं श्राद्धकर्म्म ततः परम्॥

वस्त्रक्षालनं क्षौरादिसकलदशाहकृत्योपलक्षकं ततःपरं चतुर्थाहे एकोद्दिष्टं कार्य्यम्। एवं सद्यःशौचेऽपि तद्दिने पृथक् पृथक् पात्रेन दशपिण्डान् दत्त्वा क्षौरादिदशाहकृत्यञ्च समाप्य.परदिवस एव एकोद्दिष्टवृषोत्सर्गादिकं न तु तद्दिने इति प्रागेवोक्तम्।

---

* क पुस्तके [ ] चिह्नितांशः पतितः।

# अथ पिण्डदानप्रयोगः।

अग्निदाता नवं मृण्मयभाण्डं गृहीत्वा लगुड़हस्तं पुरुषमग्रे कृत्वा तदभावे स्वयमेव लगुड़ं गृहीत्वा जलमानीय बहिर्जलसमीपे देवतायतने द्वारसमीपे वा दक्षिणाप्रवणे भूभागे कुशतिलमिश्रया केशकीटतुषाङ्गारादिरहितया गौरमृत्तिकया तीर्थतीरमृदा वा हस्तपरिमितां चतुरङ्गुलोन्नतां दक्षिणप्रवणां पिण्डिकां निर्माय गोमयेनोपलिप्य पिण्डस्थानादैशान्यां दिशि तण्डुलप्रसृतिद्वयं प्रक्षाल्य मण्डत्यागं विना यथा सुसिद्धं भवति तथा स्वयं पचेत्।

ततः प्राचीनावीती दक्षिणामुखः पातितवामजानुर्मन्त्ररहितमेव पिण्डं दद्यात् पिण्डिकोपरि तूष्णीं मण्डलिकां कुशेन दक्षिणाग्रां रेखाञ्च कृत्वाऽभ्युक्ष्य—

यजुर्वेदी—ॐ अमुकगोत्र प्रेतामुकशर्म्मन्नेतत्ते जलमवनेनिक्ष्व इत्यवनेजनं सतिलजलं कुशत्रयेण पितृतीर्थेन रेखोपरि दत्त्वा तदुपरि दक्षिणाग्रान् कुशानास्तीर्य्य तिलान् विकिरेत्।

सामगस्तु—रेखोपरि दक्षिणाग्रकुशानास्तीर्य्य तिलैरवकीर्य्य ॐ अमुकगोत्र प्रेतामुकशर्म्मन्नेतत्ते जलमवनेनिक्ष्व इति सतिलजलं दद्यात्।

ततो मधु-घृत-दुग्ध-तिलमिश्रं तमेव पिण्डं गृहीत्वा एतच्छिरःपूरकं पिण्डमिति मनसि सञ्चिन्त्य ॐ अमुकगोत्रस्य प्रेतस्यामुकशर्म्मण एतत् 'प्रथमं पूरकं पिण्डमित्यादि वाक्यम्।

एवं द्वितीयादिदिनेषु द्वितीयं पूरकं पिण्डमिति वाच्यं तत्र च एतत् कर्णनासाचिपूरकमिति चिन्तनम्। एवं तृतीये गलांसभुजवक्षः-पूरकम्। चतुर्थे नाभिलिङ्गगुदपूरकम्। पञ्चमे जानुजङ्घापाद-पूरकम्। षष्ठे सर्व्वचर्म्मपूरकम्। सप्तमे सर्व्वनाड़ीपूरकम्। अष्टमे दन्तलोमादिपूरकम्। नवमे वीर्य्यपूरकम्। दशमे तृप्तता-क्षुद्विपर्य्ययसिद्धये इति चिन्तनीयम्।

ततः—ॐ अमुकगोत्र प्रेतामुकशर्म्मन्नेतत्ते जलं प्रत्यवने-निक्ष्वेति पात्रक्षालनजलं पिण्डे दद्यात्। ततः तूष्णीमेव गन्धपुष्प धूप दीपोर्णातन्तुमयवस्त्रताम्बूलैः पिण्डमर्च्चयेत्। ततः पिण्डसमीपभूमावामसृण्मयपात्रे एष ते जलाञ्जलिरिति तिल-गन्धपुष्पसहितं जलाञ्जलिं दद्यात्। एवञ्च प्रत्यहमेकैकवृद्ध्या सतिलजलाञ्जलयो मृण्मयामपात्रेषु पृथक् पृथक् देयाः। ततो जलाञ्जलिसमीपे गोमयेनोपलिप्तभूमौ इदन्ते माल्यमिति माल्यं दद्यात्। तथाचारात् काकबलिदानम्।

पिण्डशेषमन्नं पात्रे कृत्वा अमुकगोत्रस्य प्रेतस्यामुकशर्म्मणो विशेषतृप्तये, यमद्वारावस्थितवायसाय एष बलिर्नम इत्युक्त्वा कृताञ्जलिः—

काक त्वं यमदूतोऽसि गृहाण बलिमुत्तमम्।
यमलोकगतं प्रेतं त्वमाप्यायितुमर्हसि॥
काकाय काकपुत्राय वायसाय महात्मने।
तुभ्यं बलिं प्रयच्छामि प्रेतस्य तृप्तिहेतवे॥

इति पठेत् पाकाशक्तौ यवादिभिरपि पिण्डा देयाः। किन्तु

प्रथमेऽहनि यद्द्रव्यं तेनैव सर्व्वेषु दिनेषु नानाद्रव्येणेति। एवं नवदिवसेषु नव पिण्डान् दत्त्वा दशमः पिण्डोऽशौचान्तदिने सर्व्वैरेव वर्णैर्देयः। एवं सङ्करशौचेनाशौचस्य शुद्धौ ह्रासे वाऽप्यवशिष्टपिण्डा अशौचान्तदिने देयाः-यावदशौचं पिण्डान् दद्युरिति विष्णुवचनात्। विदेशस्थेन तु श्रवणदिवसे पतितपिण्डान् दत्त्वा ततः परमवशिष्टाः क्रमेण देयाः।

अत्र च प्रथमपिण्डदाता पश्चादागतश्च पुत्रादिरधिकारी उभावेव पिण्डान् दद्यातामिति पूर्व्वमेवाधिकारिप्रकरणे बहु विस्तृतम्। अशक्तौ सत्यावपि दशाहिकपिण्डदानं कार्य्यं—

राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु।
स्नानदानादिकं कुर्य्युर्निशि काम्यव्रतेषु च॥

इति देवलेनात्ययसम्बन्धिपिण्डदानोदकदानादेर्विहितत्वात्। तथा रक्तादिपातेऽप्यशौचान्तरपातेऽपि पिण्डदानोदकदानं कार्य्यं प्रतिनियतकालीनत्वात्।

अशुच्यशुचिना दत्तमाममृच्छकलादिना।
अनिर्गतदशाहास्तु प्रेता रक्षांसि भुञ्जते॥

इति छन्दोगपरिशिष्टवचनाच्च। अत्रानिर्गतदशाहा इति विशेषणात् दशाहे निर्गते तु नैवमिति दर्शितम्।

अत्र च केचिदेवञ्च रजस्वलयापि तुल्यन्यायात् पिण्डा देया इत्याहुः। तन्न रजस्वलायाः सर्व्वदैव रक्तस्रवणसम्भावनया मूत्रपुरीषोत्सर्गवत् गलदवस्थायामत्यन्ताशुचित्वेन लौकिककर्म्मण्यप्यनधिकारात्। रक्तपाते तु—

वसाशुक्रमसृङ्मज्जा मूत्रविट्कर्णविण्नखाः ।
श्लेष्माश्रु दूषिका स्वेदो* द्वादशैते नृणां मलाः ॥
आददीत मृदोऽपश्च षट्सु पूर्व्वेषु शुद्धये ।

इति बौधायनवचनादितरे रक्ते कृच्छ्रभक्षणानन्तरे लौकिक-कर्म्मणि शुद्धिसत्त्वात् न तादृशमशुचम् ।

किञ्च श्रीभागवते वृत्रवधोपाख्याने रजस्वलाया महेन्द्रकृत-ब्रह्मवधभागित्वकथने तत्कालावच्छिन्नपातकित्वातिदेशात् सर्व्व-कर्म्मानर्हत्वं ततश्च पतितपिण्डाः पञ्चमेऽहनि शुद्धौ सत्यामेकत्रैव देयाः ।

अथ कतिपयपिण्डान्दत्त्वा कश्चिन्मृतस्तदाऽन्येनाधिकारिणा शेषपिण्डादिकं देयम् । अशक्तौ तु पिण्डदाने एकादशाहे शक्तौ तस्मिन्नेव दिने पतितपिण्डान्दत्त्वा पुनः स्नात्वा स्वकालप्राप्त-मेकोद्दिष्टं तत्राप्यशक्तौ यस्मिन् कस्मिंश्चिद्दिने पतितपिण्डान्दत्त्वा तथैकादश्यां श्राद्धं कार्य्यं प्रेतपिण्डदानस्य श्राद्धलक्षणायोगात् ।

रात्रौ मृते सूर्य्योदये दिवा मृते नक्षत्रोदये कार्य्यानुरोधा-द्ब्राह्मणानुमत्या यथेच्छं कनिष्ठपुरःसरा ज्येष्ठपश्चिमा यथाक्रमं गृहद्वारमागत्य सर्व्व एव शवस्पृशो निम्बपत्रत्रयं दन्तैश्छित्त्वा पादप्रक्षालनपूर्व्वकमाचम्य दूर्व्वादलं स्पृष्ट्वा ॐ शमी पापं शमय-त्विति शमीशाखां स्पृशेयुः । ॐ अग्निर्नः शर्म्म यच्छत्वित्यग्निं तत उदकं गोमयञ्च स्पृष्ट्वा वृषभच्छागयोर्मध्ये स्थित्वा ॐ द्योगिति मन्त्रेण वृषभमजञ्च दक्षिणहस्तेन स्पृशेयुः ।

* क पुस्तके—स्वेदाः ।

घृतेन गौरसर्षपैश्च मूर्द्धानं गात्राणि चालभेरन् । अश्मेव स्थिरो भूयासमित्यश्मनि पदन्यासं कृत्वा दारपानयो गृहं प्रविशेयुः । एतच्चान्यकुलजैरपि शवस्पर्शिभिः कार्य्यम् । ततः प्रथमदिने सायं-समये जलं क्षीरञ्च मृण्मयपात्रद्वये कृत्वा ॐ अमुकगोत्र प्रेतामुक-शर्म्मन्नेतत्ते स्नानार्थमुदकमित्युत्सृज्य प्रेतात्र स्नाहीति वदेत् । एवं प्रेतैतत्ते पानार्थं क्षीरमुत्सृज्य पिब चेदं क्षीरमिति वदेत् ।

ततः कृताञ्जलिः—

श्मशानानलदग्धोऽसि परित्यक्तोऽसि बान्धवैः ।
इदं नीरमिदं क्षीरमत्र स्नाहि इदं पिब ॥
आकाशस्थो निरालम्बो वायुभूतो निराश्रयः ।
अत्र स्नात्वा इदं पीत्वा स्नात्वा पीत्वा सुखो भव ॥

इति पठित्वा शिक्यादावेकरात्रमन्तरीक्षे स्थापयेत् । प्रातर्जले क्षिपेत् दशरात्रदाने फलातिशयः ।

अथ पारस्करः—प्रेतसंस्पर्शिनो ग्रामं न प्रविशेयुरानक्षत्र-दर्शनात् रात्रौ चेदादित्यस्य ।

हारीतः—

ब्राह्मणानुमतावा यथेच्छं ज्येष्ठपुरःसराः कनिष्ठपश्चिमाः निःसृत्य कनिष्ठपुरःसरा ज्येष्ठपश्चिमाः प्रविशेयुः ।

याज्ञवल्क्यः—

आचम्याथाग्निमुदकं गोमयं गौरसर्षपान् ।
प्रविशेयुः समालभ्य कृत्वाश्मनि पदं शनैः ॥
प्रवेशनादिकं कर्म्म प्रेतसंस्पर्शिनामपि ।

असम्बन्धिनान्तु प्रेतस्पर्शिनां वारत्रयं स्नानं त्रिरग्निस्पर्शनञ्चाह परिशिष्टम्—

स्नानाग्निस्पर्शनाभ्यासैः शुद्धेयुरितरे कृतैः।

शङ्खलिखितौ—

दूर्व्वाप्रवालान् गोमयमग्निमजं वृषभञ्चालभ्य प्रविशन्तः शस्त्रपानयो घृतगौरसर्षपैर्मूर्द्धानमङ्गानि चालभेरन्।

अग्न्यादिस्पर्शने मन्त्रमाह वैजवापः—

शमीमालभन्तें शमी पापं शमयत्विति। अश्मानमालभन्ते अश्मेव स्थिरोभूयासमिति। अग्निर्नः शर्म्म यच्छत्वित्यगिम। स्योगित्यन्तरा गामजमुपस्पृशेरन्।

पारस्करः—

मृण्मये तां रात्रिं क्षीरोदके विहायसि निदध्युरिति प्रेतात्र स्नाहीति पिब चेदं क्षीरमिति।

याज्ञवल्क्यः—

जलमेकाहमाकाशे स्थाप्यं क्षीरञ्च मृण्मये।

शिक्यादौ कृत्वाकाश एकरात्रं क्षीरजलदानमावश्यकम्।

यत्तु—

तस्मान्निधेयमाकाशे दशरात्रं पयस्तथा।

इति मत्स्यपुराणे दशरात्रं जलक्षीरदानं तत् प्रेतोपकारातिशयार्थम्।

## अथाशौचिकर्त्तव्यता।

आश्वलायनः—

नैतस्यां रात्रावन्नं पचेयुस्त्रिरात्रमक्षारलवणाशिनाः स्युर्द्वादश रात्रं महागुरुषु।

एतस्यां रात्रौ मरणदिने न पचेयुरुपवासं सपिण्डाः कुर्युरित्यर्थः। महागुरुनिपाते तु त्र्यहमुपवासः, अशक्तौ तु एकाहमावश्यकः परदिनद्वये शुचिकुलान्तराद्याचितलब्धं क्रीतं वा दुग्धफलशक्तुलाजादिकं भोज्यं वक्ष्यमाणवशिष्ठवचनात्। सपिण्डास्तु अस्थिसञ्चयनपर्य्यन्तमक्षारलवनाशिना हविष्यभुज इत्यर्थः। महागुरुनिपाते तु द्वादशरात्रमशौचान्तद्वतीयदिनपर्य्यन्त-मावश्यकमित्यर्थः। वाशब्दोऽवधारणे।

हविष्यान्नमाह शातातपः—

हैमन्तिकं सितास्विन्नं धान्यं मुद्गास्तिला यवाः।
कलायकङ्गुनीवारं वास्तूकं हिलमोचिका॥
कलायकालशाकञ्च मूलकं केमुरेतरत्।
सिन्धुसाम्भरि(वि) सामुद्रं लवणं दधिसर्पिषी॥
पयोऽनुद्धृतसारञ्च पनसाम्रहरीतकी।
पिप्पली जीरकञ्चैव नागरङ्गकतिन्तीडी॥
कदली लवली धात्री फलान्यगुडमैक्षवम्।
अतैलपक्वमित्येतद्धविष्यं* प्रचक्षते॥

---

* न पुनरङ्के हविष्यार्थं विदुर्बुधाः।

अगस्त्यसंहितायां—

> क्षितैकविधहैमन्तं मुन्यन्नं घृतसंयुतम्* ।
> अमुद्रावहतं पथ्यमनुत्तोल्यहतं तथा ॥
> दधिक्षीरघृतं गव्यमैक्षवं गुड़वर्ज्जितम् ।
> तिलाश्चैवासिता मुद्गाः कन्दं वैमुकवर्ज्जितम् ॥
> †नारिकेलफलश्चैव कदली लवली तथा ।
> आर्द्रमामलकञ्चैव पनसाम्रहरीतकी ।
> अक्षारलवणञ्चैव हविष्यं मन्यते बुधः ॥

मुन्यन्नं नीवारः, गव्यमित्यनेन महिषाजदध्यादिनिषेधः। आर्द्र-मार्द्रकम् ।

कात्यायनः—

> हविष्येषु यवा मुख्यास्तदनु व्रीहयो मताः ।
> माषकोद्रवगौरादीन् सर्व्वालाभेऽपि वर्ज्जयेत् ॥

व्रीहिः शरत्पक्वधान्यं गौरः सितसर्षपः। आदिशब्दान्मसूर-चनकादीनां ग्रहणम्। *[सर्व्वालाभेऽपीत्यनेन औषधीनां प्रतिनिधित्वं दर्शितम्]।

वशिष्ठः—अस्तरे शयानमनश्नन्त एवासीरन् क्रीतोत्पन्नेन वा वर्त्तेरन् ।

---

* क पुस्तके—क्षीरसंयुतम् ।
† ख पुस्तके—नारिकेलादिश्लोकः पतितः ।
* ख पुस्तके - [ ] चिह्नितांशः पतितः ।

त्र्यहानशनं महागुरुनिपातविषयमशक्तौ तु क्रीतोत्पन्नाशनं स्रस्तरे कटादौ न तु पीठादौ द्वादशाहमुपविशेरन्नित्यर्थः ।

मनुः—

अक्षारलवणान्नाः स्युर्निमज्जेयुश्च ते त्र्यहम् ।

मांसाशनञ्च नाश्नीयुः शयीरंश्च पृथक् क्षितौ ॥

त्र्यहं तृतीयसप्तमनवमेषु मिलित्वा प्रेतोपकारार्थं स्नानं कुर्य्युः सर्व्व एव सपिण्डा यावदशौचं मांसं न भक्षयेयुः क्षितावित्यनेन पीठखट्वादिषु शयननिषेधः ।

बृहस्पतिः—

अधःशय्यासिना दीना मलिना भोगवर्ज्जिताः ।

अक्षारलवणान्नाः स्युर्लब्धक्रीताशनास्तथा ॥

अङ्गिराः—

ब्रह्मचर्य्यं क्षितौ वासो वर्ज्यं मांसाशनञ्च तैः ।

ब्रह्मचर्य्यं यावदशौचं मैथुनं वर्ज्जयेदित्यर्थः । मांसाशनमपि यावदशौचं वर्ज्जनीयम् ।

विष्णुपुराणे—

शय्यासनोपभोगश्च सपिण्डानामपीष्यते ।

अस्थिसञ्चयनादूर्द्ध्वं संयोगो न तु योषितः ॥

सक्तद्दिवा च भोक्तव्यं न मांसं मनुजर्षभ ।

तथा—

महागुरुनिपाते तु द्वादशाहं शयनाद्युपभोगो न कार्य्यः । मैथुनन्तु संवत्सरपर्य्यन्तं न कार्य्यं दिवेत्यनेन रात्रौ भोजननिषेधः ।

हारीतः—पात्रेषु मृन्मयेषु पर्णपुटेषु वाश्नीरन्।
तैजसादिभाजने कदापि न भोक्तव्यमित्यर्थः। पुटेष्वित्यभिधानात् कदलीपत्रेष्वपि भोजनं निषिद्धमिति हारलता।

आदिपुराणे—

अशौचमध्ये यत्नेन भोजयेत्तु स्वगोत्रजान्।

एतच्च प्रेतोपकारार्थं ज्ञातिभोजनमङ्गास्पृश्यत्वात् परं* बोद्धव्यम्।

मार्कण्डेयपुराणे—

तैलाभ्यङ्गो बान्धवानामङ्गसम्बाहनञ्च यत्।
तेन चाप्याय्यते जन्तुर्यच्चाश्नन्ति स्वबान्धवाः।

एतदपि चतुर्थाहात् प्रभृति प्रेतोपकारकम्।

महाभारते—

तिलान् ददत पानीयं दीपं ददत जाग्रत।
ज्ञातिभिः सह मोदध्वमेतत् प्रेतेषु दुर्लभम्॥

तिलदानं रात्रौ दीपं जागरणञ्च प्रेतोपकारातिशयार्थम्।

यच्च—

चतुर्थे पञ्चमे चैव नवमैकादशे तथा।
यदत्र दीयते जन्तोस्तन्नवश्राद्धमुच्यते॥

इति वचनाच्चतुर्थपञ्चमनवमाहेषु श्राद्धत्रयं तत्काम्यं बहृच-गृह्योक्तत्वेन बहृचानामेव पार्वणविधिना कर्त्तव्यं नान्येषामिति।

---

* क पुस्तके—परमितपदम् नास्ति।

## अथास्थिसञ्चयनम्।

आदिपुराणे—

> चतुर्थे ब्राह्मणानान्तु पञ्चमेऽहनि भूभुजाम्।
> षष्ठेऽह्नि वैश्यजातीनां शूद्राणां दशमात्परे॥
> त्र्यहाशौचे द्वितीयेऽह्नि कर्त्तव्यस्त्वस्थिसञ्चयः।
> सद्यःशौचे तत्क्षणन्तु कर्त्तव्य इति निश्चयः॥

अह्नाशौचे निवृत्ते सर्व्वैरेवास्थिसञ्चयनं कार्य्यमित्यर्थः।

यत्तु—

> प्रथमेऽह्नि तृतीये वा सप्तमे नवमेऽपि वा।
> अस्थिसञ्चयनं कार्य्यं निजैस्तद्गोत्रजैर्मृते॥

इति सम्बर्त्तवचनं तच्चतुर्थाहपर्य्यन्तं रक्षणाशक्तौ प्रथमद्वितीयाह-विधायकं चतुर्थाहे च दैवादकरणे सप्तमनवमाहविधायकञ्च।

कात्यायनः—

> सञ्चयनं चतुर्थ्यां अयुग्मान् ब्राह्मणान् भोजयित्वा।

अयुग्मान् ब्राह्मणान् भोजयित्वेत्यनेनैकोद्दिष्टश्राद्धमस्थिसञ्चयनाङ्ग-मिति दर्शितम्। एतच्च यजुर्व्वेदिनामेव।

अत्र केचित्—साम्नीनामेव श्राद्धमिति वदन्ति। तदप्रमाणकं कात्यायनेन सामान्येनोक्तत्वाग्निरग्नेरपि तदुक्तास्थिसञ्चयनस्यानु-ष्ठेयत्वे तदङ्गश्राद्धस्य निवारयितुमशक्यत्वात् अन्यथा निरग्ने-रस्थिसञ्चयनमेव न स्यादिति। हारलताकारस्वरसोऽप्येष एव।

सामगानां गोभिलेन परिशिष्टकृता चानुक्तत्वाच्छ्राद्धं नास्त्येव किन्तु—अपरेद्युस्तृतीये वा अस्थिसञ्चयनं भवेत्।

इति परिशिष्टवचनात् द्वितीयदिन एवास्थिसञ्चयनं अपरेद्यु-रिति अशौचविषयमिति हारलताकार-नारायणोपाध्यायौ।

विशारदस्तु—प्रथमेऽह्नि तृतीये वेति सम्वर्त्तवचनमिव परिशिष्टवचनमशक्तविषयं* व्याख्याय सर्व्वेषामेवाशौचनिवृत्तौ चतुर्थाह एवास्थिसञ्चयनमाह।

आदिपुराणे—

श्मशानदेवतायाश्च चतुर्थे दिवसे ततः।
सुपक्वैर्भक्ष्यभोज्यैश्च पायसैः पानकैस्तथा॥
फलै र्मूलैर्वनोत्थैश्च पूज्याः क्रव्याददेवताः।
निवेदयति कर्त्तव्यं तैः सर्व्वमनहङ्कृतैः॥
नमः क्रव्यादमुख्येभ्यो देवेभ्य इति सर्व्वदा।
†[ केचिदर्घ्यं प्रदातव्यं केचित् पुष्पञ्च शोभनम्॥
धूपो दीपस्तथा माल्यं केचिद्गन्धस्वरान्वितैः।
क्षताक्षतानि सर्व्वाणि केचिद्देयानि सर्व्वतः॥
येऽस्मिन् श्मशाने देवाः स्यु र्भगवन्तः सनातनाः।
तेऽस्मत्सकाशाद्गृह्णन्तु बलिमष्टाङ्गमक्षयम्॥
प्रेतस्यास्य शुभान् लोकान् प्रयच्छन्त्वपि शाश्वतान्।
अस्माकमायुरारोग्यं सुखञ्च ददतां वरम्॥

* ख पुस्तके परिशिष्टवचनं नास्ति।
† ख पुस्तके [ ] चिह्नितांशो नास्ति।

एवं ज्ञात्वा बलीन् सर्व्वान् चौरेणाभ्यर्च्य कामतः। ]
विसर्ज्जनञ्च देवानां कर्त्तव्यञ्च समाहितैः॥
ततो.यज्ञियवृक्षाणां शाखामादाय कामतः।
अपसव्यं क्रमाद्दर्ब्भं कृत्वा कश्चित् सगोत्रजः॥
प्रेतस्यास्थीनि गृह्णाति प्रधानाङ्गोद्भवानि च।
पञ्चगव्येन संसिच्य क्षौमवस्त्रेण वेष्टयेत्॥
प्रक्षाल्य मृन्मये भाण्डे नवे साच्छादने,शुभे।
अरण्ये वृक्षमूले वा शुचौ संस्थापयन्त्यपि॥
तत्स्थानात्वंनकैर्नीत्वा कदाचित् जाह्नवीजले।
कश्चित् क्षिपति सत्पुत्रो दौहित्रो वा सहोदरः॥

अयञ्च श्मशानदेवतायागः प्रेतोपकाराय निजायुरारोग्यादिसिद्धये च काम्यो न त्वावश्यकः। अस्थिसञ्चयनप्रयोजनमाह तत्स्थानात् शनकैर्नीत्वेति तत्कालं गङ्गागमनाशक्तौ यथावसरं गङ्गायामस्थि-प्रक्षेप एव प्रयोजनमित्यर्थः।

अत्र केचित्—गङ्गातीरेऽस्थिसञ्चयनं न कार्य्यं किन्तु तदह-रेव गङ्गायां प्रक्षेप्तव्यं सञ्चयनस्य गङ्गाप्रक्षेपत्वादित्याहुः। तदयुक्तं सर्व्वैरेव मुनिभिर्नियमेन कालविशेषविधानात् तत्तदनुष्ठान-विशेषविधाननियमाच्च। किन्तु यथोक्तकाले यथाविध्यस्थिसञ्चयनं कृत्वा मृन्मयपुटे धृत्वा तत्क्षणमेव वक्ष्यमाणविधिना गङ्गायां प्रक्षेप्तव्यं न तु निधाय स्थापितव्यमिति।

वृद्धवादिपुराणीयास्थिसञ्चयनं सर्व्वशाखिसाधारणं पुराणोक्तत्वा-च्छन्दोगपरिशिष्टकात्यायनग्रन्थानुक्तत्वाच्च।

यथा छन्दोगपरिशिष्टम्—

स्नानान्तं पूर्ववत् कृत्वा गव्येन पयसा ततः ।
सिञ्चेदस्थीनि सर्वाणि प्राचीनावीतभावयन् ॥
शमीपलाशशाखाभ्यां उद्धृत्योद्धृत्य भस्मनः ।
आज्ये नाभ्यज्य गव्येन सेचयेद्गन्धवारिणा ॥
मृत्पात्रसंपुटे कृत्वा वस्त्रेण परिवेष्ट्य च ।
श्वभ्रं खित्वा शुचौ भूमौ निखनेद्दक्षिणामुखः ॥
पूरयित्वाऽवटं पङ्कपिण्डशैवालसंयुतम् ।
दत्त्वोपरि समं शेषं कुर्य्यात् पुष्पाद्यकर्म्मणा ।
एष एवाग्निहीनाग्नेः प्रेतस्य विधिरिष्यते ॥

वस्त्रेण वेष्टयित्वा मृत्पात्रपुटे कृत्वेत्यन्वयः ।

## तदयं प्रयोगः ।

सामगानां तृतीयेदिने पिण्डं दत्त्वा श्राद्धं विनास्थिसञ्चयनम् । यजुर्वेदिनां चतुर्थदिने पिण्डं दत्त्वा शूद्राणाञ्चैकादशाहेऽस्थि-सञ्चयननिमित्तमेकोद्दिष्टं श्राद्धं कृत्वास्थिसञ्चयनम् । तत्राचाराद्दश व्यञ्जनानि पक्त्वा पत्रपुटे निधाय श्राद्धं कृत्वा व्यञ्जनानि किञ्चि-दन्नं पिण्डञ्च पाकस्थाल्यां निधाय दग्ध्वा "सामगास्तु तृतीयपिण्डा-दिकं पाकस्थाल्यां निधाय दग्ध्वा तन्नाम्ना तदङ्गारेण वा स्थाल्यां शवनाम लिखित्वा वामहस्तधृतां स्थालीं विमुखो भूत्वा दानेन भित्त्वा सर्व्वं जले क्षिपन्तीति गौडीयाः" ।

ततः पुनः स्नात्वा ज्ञातिबन्धुमिलितः पुत्रः सुधौतवस्त्रो नानाविधफलमूलभक्ष्यभोज्यपायसादिभिः पृथक् पृथक् पात्राणि पूरयित्वा गन्धपुष्पादिकञ्च गृहीत्वा श्मशानं गत्वा गोमयेन विलिप्य चतुष्कोणमण्डलं कृत्वा केनचिन्निवेदयेत्युक्ते सर्व्वैरेव मिलित्वा नमः क्रव्यादमुख्येभ्यो देवेभ्य इति मन्त्रेण केनचिदर्घ्यः केनचित् पुष्पं केनचिद्धूपः केनचिद्दीपः केनचिन्माल्यं केनचिद्गन्धः केनचित् फलमूलादीनि केनचिद्भक्ष्यभोज्यपायसादीनि च सत्वरं दत्त्वा कृताञ्जलिः—

येऽस्मिन् श्मशाने देवाः स्युर्भगवन्तः सनातनाः ।
तेऽस्मत्सकाशाद्गृह्णन्तु बलिमष्टाङ्गमक्षयम् ॥
प्रेतस्यास्य शुभान् लोकान् प्रयच्छन्त्वपि शाश्वतान् ।
अस्माकमायुरारोग्यं सुखञ्च ददतां परम् ॥

इति पठित्वा तान् सर्व्वान् बलीन् क्षीरिवाभ्युक्ष प्रव्यादमुख्या देवाः स्वस्थानं गच्छन्त्विति देवतां विसृज्य तत्सर्व्वं जले क्षिपेत। एतच्च कार्य्यं मत्वावश्यकमिति प्रागुक्तम्।

ततः कृतापसव्यो दक्षिणामुखो प्राग्यतचिताख्यास्थीनि क्षीरेणाभ्युक्ष्य* शमीपलाशशाखाभ्यामुद्धृत्य पञ्चगव्येनाभिषिच्य गन्धोदकेन सिक्त्वा वस्त्रेण वेष्टयित्वा नवमृन्मयभाण्डे निधाय मृन्मयपात्रान्तरेणाच्छाद्यारण्यवृक्षमूले वा शुचिभूमौ निधाय उपरि शमीकण्टकशैवालपङ्कादीनि दत्त्वा स्नानं कृत्वा चिता-भस्मादि च जले क्षिपेत्। गङ्गातीरे तु सर्व्वमेवं विधाय तत्-क्षणमेव तदस्थि वक्ष्यमाणविधिना गङ्गायां प्रक्षिपेत्। अन्यदेशे तु कालान्तरे तदस्थि गङ्गायां क्षिपेत्।

विष्णुः-चतुर्थदिवसेऽस्थिसञ्चयनं तेषाञ्च गङ्गाम्भसि प्रक्षेपः। आदिपुराणे—

तत्स्थानाच्छनकैर्नीत्वा कदाचिज्जाह्नवीजले।
कश्चित् क्षिपति सत्पुत्रो दौहित्रो वा सहोदरः॥
मातुः कुलं पितृकुलं वर्ज्जयित्वा गुरोस्तथा।
अस्थीन्यन्यकुलोत्थानि नीत्वा चान्द्रायणञ्चरेत्॥

एतच्च स्नेहेन वेतनग्रहणेन वा कृते प्रायश्चित्तम्। अदृष्टबुद्ध्या तु न दोषः।

तत्रायं विधिः। गङ्गायां स्नात्वास्थीनि पञ्चगव्येनाभिषिच्य

---

* ग पुस्तके अभ्युक्ष्य।

हिरण्यमध्वाज्यतिलैः संयोज्य मृत्पिण्डपुटे निधाय दक्षिणां दिशं पश्यन् ॐ नमोऽस्तु धर्म्मायेति पठन् गङ्गां प्रविश्य स मे प्रीतो भवत्विति प्रक्षिप्य पुनः स्नात्वोत्थाय सूर्य्यं दृष्ट्वा विप्रेभ्यो यथाशक्ति दक्षिणान्दद्यात्।

उत्थाय भास्वन्तमवेक्ष्य सूर्य्यम् स दक्षिणां विप्रमुखाय दद्यात्।
एवं कृते प्रेतपुरस्थितस्य स्वर्गे गतिः* स्यात्तु महेन्द्रतुल्या॥

सूर्य्यमवेक्ष्येत्यनेन रात्रौ निषिध्यते। फलमाह—एवं कृत इति। दशाहाभ्यन्तरे तु प्रक्षेपे फलमाह यमः—

दशाहाभ्यन्तरे यस्य गङ्गातोयेऽस्थि मज्जति।
गङ्गायां मरणे यादृक् तादृक् फलमवाप्नुयात्॥
गङ्गातोये तु यस्यास्थि प्लवते शुभकर्म्मणः।
न तस्य पुनरावृत्तिर्ब्रह्मलोकात् कथञ्चन॥

---

* न पुस्तके स्थितिः।

# अथ दशाहकृत्यम्।

अशौचान्तदिने गृहद्वारादिकं संशोध्य गोमयेनोपलिप्य वस्त्रादिकञ्च प्रक्षाल्य मृण्मयपाकपात्राणि त्यक्त्वा स्नात्वा दशमं पिण्डं दत्त्वा ग्रामाद्बहिर्गत्वा प्रेतस्पृष्टवासांसि भृत्यनापितादिभ्यो दत्त्वाऽमत्री तेषां तुष्टिमुत्पाद्य पुनः स्नानं कार्यं ततो ज्ञातिभिः सह केशश्मश्रुनखलोमां मध्ये यत्सर्वदा वाप्यते तन्मात्रं त्यजेत्।

ततः पिष्टैस्तिलैर्गात्राणि निघृष्य तिलतैलेन शिरोऽभ्यज्य श्वेतसर्षपकल्केन शिरश्चोघृष्य ज्ञातिभिः सह पुनः स्नात्वा वाग्यत आचम्य नवं शुक्लवस्त्रयुगं परिधायामत्री रजकधौतमस्फुटितं प्रक्षालितं शुक्लवस्त्रयुगं परिधाय निम्बपत्र-श्वेतसर्षप-दूर्वा-प्रवालानि गोरोचना-गो-सुवर्ण-दधि-घृत-मधु-शङ्ख-दर्पणादीनि च स्पृष्ट्वा ब्राह्मणो जलं शूद्रस्तु वेणुदण्डं स्पृष्ट्वा परममङ्गलश्रीगोविन्दादिनाम कीर्त्तयित्वा च गृहं प्रविशेत् ज्ञातींश्च भोजयेत्।

यथादिपुराणे—

यस्य यस्य तु वर्णस्य यद्यत् स्यात् पश्चिमं त्वहः।
स तत्र वस्त्रशुद्धिञ्च गृहशुद्धिं करोति च॥
समाप्य दशमं पिण्डं यथाशास्त्रमुदाहृतम्।
ग्रामाद्बहिस्ततो गत्वा प्रेतस्पृष्टे च वाससी॥
अन्त्यानामाश्रितानाञ्च त्यक्त्वाद्यं तत्र चाप्यपि।
गौरसर्षपकल्केन तिलतैलेन संयुतः॥

शिरःस्नानं पुनः कृत्वा तोयेनाचम्य वाग्यतः।
वासोयुगं नवं शुद्धं निर्व्रणं धृतमेव वा॥
गृहीत्वा गां सुवर्णञ्च मङ्गलानि शुभानि च।
स्पृष्ट्वा संकीर्त्तयित्वा च ततः शुद्धो भवेन्नरः॥

प्रेतस्पृष्ट इति येन वस्त्रेण तर्पणपिण्डादिकं कृतमिति हारलता। कृतश्मश्रुकर्म्मणि इति हारीतवचने बहुवचनात् सपिण्डानामपि वपनम्। अत्र सर्व्वत्रैव मरणाशौचान्तकृत्यप्रकरणोपात्तत्वाज्जननाशौचान्ते वपनं नास्तीति केचित्। अनियम इति केचित्।

श्मश्र्वादीनां मध्ये यत्त्याज्यं त्यागार्हं सर्व्वदा यत्त्यज्यते इत्यर्थः। तेन वक्षःकक्षादिलोम्नां रक्षितानाञ्च केशादीनां त्यागो न कार्य्यः। महागुरुनिपाते तु रक्षितानामपि त्यागः।

यथा विष्णुः—

प्रयागे तीर्थगमने पितृमातृवियोगतः।
केशानां वपनं कुर्य्यात् सर्व्वेषान्तु शिखां विना॥
विना तीर्थं विना यज्ञं पित्रोश्च मरणं विना।
केशश्मश्रुपरित्यागात् ब्रह्महत्याफलं लभेत्॥

*[एतच्च दोषकथनं रक्षितकेशश्मश्रुपरित्यागविषयम्।]

अत्र तीर्थपदं गयादीतरतीर्थविषयम्।

मुण्डनञ्चोपवासश्च सर्व्वतीर्थेष्वयं विधिः।
वर्ज्जयित्वा गयां गङ्गां विशालां विरजां तथा॥

* क पुस्तके [ ] चिह्नितांशः पतितः।

इति स्कन्दपुराणवचनात्।

अत्र गङ्गापदं प्रयागेतरपरम्।

प्रयागे वपनं कुर्य्याद्गयायां पिण्डपातनम्।

इति वचनात्॥

यच्च—

केशानां यावती संख्या छिन्नानां जाह्नवीजले।

तावद्वर्षसहस्राणि स्वर्गलोके महीयते॥

इति वचनं तन्निमित्तान्तरच्छिन्नानां केशानां प्रतिपत्ति—परमिति।

यच्च—

गङ्गां प्राप्य सरिच्छ्रेष्ठां कल्पान्तपापराशयः।

केशानाश्रित्य तिष्ठन्ति तस्मात्तान् परिवर्जयेत्॥

इति नामशून्यवचनं तदमूलं समूलत्वेऽपि स्कन्दपुराणवचन-विरोधात् गङ्गापदं प्रयागपरमिति।

गौरसर्षपकल्केनेति-तिलतैलेन शिरोऽभ्यज्य श्वेतसर्षपकल्केन मोच्चाजयेदित्यर्थः।

यथा, हारीतः—

तिलकल्केन गात्राणि निष्कृष्य श्वेतसर्षपैः शिरःस्नाता इति।

वेति नूतनवस्त्राभावे निर्मलं पक्षमं श्वेतमिति व्यवस्थित-विकल्पः। मङ्गलानि दूर्व्वा-बिल्वपत्र-गोरोचना-शङ्ख-दर्पण-घृत-मधु-दध्यादीनि स्पृष्ट्वा कीर्त्तयित्वा च जगन्मङ्गलानि श्रीगोविन्द-नामानीत्यर्थः।

मनुः—

विप्रः शुध्येदपः स्पृष्ट्वा क्षत्रियो वाहनायुधम्।

वैश्यः प्रतोदं रश्मिं वा यष्टिं शूद्रः कृतक्रियः॥

कृतक्रियः समाप्तदशमाहकृत्य इत्यर्थः। शूद्रेण तु यजुर्वेदविधिना सर्व्वं कर्म्म कार्य्यम्।

यथा कूर्म्मपुराणे—

आर्षक्रमेण सर्वे च शूद्रा वाजसनेयिनः।

तस्माच्छूद्रः स्वयं* कर्म्म यजुर्वेदेन कारयेत्॥

---

* ग पुस्तके—स्वकम्।

## अथैकादशाहकृत्यम् ।

अशौचकालीनमृण्मयभाण्डानि परित्यज्य गृहादिकं शोधयेत् ।

देवलः—

अघाहःसु व्यतीतेषु सुस्नाताः कृतमङ्गलाः ।

आद्यश्राद्धप्रमुखन्ते ब्राह्मणान् स्वस्ति वाच्य च ॥

सुस्नाता इति यथाविधिकृतसशिरस्कस्नाना इत्यर्थः । अत्र च एकादशाहे विरमेदिति पैठीनसिवचनात्तर्पणं न कार्य्यम् ।

एतच्च स्नानं सूर्य्योदयात्परं कर्त्तव्यम् ।

उदयादुदयं भानोः सावनाहः प्रकीर्त्तितम् ।*

सूतकादिपरिच्छेदो दिनमासाब्दपास्तथा ।

मध्यमग्रहभुक्तिश्च सावनेनैव गृह्यते ॥

इति सूर्य्यसिद्धान्तवचनात् ।

अत्र केचित् †सूर्य्योदयात् पूर्व्वमेव प्रातःसन्ध्यायाः कालत्वात्तत्राशौचाक्रान्तत्वेनाधिकाराभावात् सूर्य्योदयात् परमेव शुद्धिविधानात् तद्दिने प्रातःसन्ध्यालोप एवेत्याहुः ।

---

* ग पुस्तके सावनं परिकीर्त्तितम् ।

सावनानि स्युरेतेषां यज्ञकालविधिस्तु तैः ॥

क पुस्तके अधिक पाठः ।

† ग पुस्तके—

अनागतान्तु यः पूर्व्वां सादित्याञ्चैव पश्चिमाम् ।

नोपासीत द्विजः सन्ध्यां स सर्व्वोऽब्राह्मणः स्मृतः ॥ इतिवचनात् ।

इत्यधिकः पाठः ।

तत्र—

आसायमाहुतेः प्रातराहुतिर्नात्येति आप्रातराहुतेः सायमाहुतिरिति गोभिलवचनात् होमन्यायेन तुल्याकाङ्क्षितत्वात्तुल्यकालविधानाच्च अतीतामप्युपासीतेति वचनाच्च मुख्यकालालाभे सायंकालपर्य्यन्तमानुकल्पिककालविधानात्।

सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्व्वकर्म्मसु॥

इति दक्षवचने सन्ध्यायाः शुचित्वसम्पादकत्वाच्च सन्ध्यायाः कर्म्माङ्गत्वेन च तदभावात्तद्दिवसकर्त्तव्यकर्म्मणां वैगुण्यप्रसङ्गाच्च पितृदयितादिसर्व्वसंग्रहसम्मतत्वाच्च स्नानात्परं प्रातःसन्ध्या कर्त्तव्या इति।

कृतमङ्गला इति गोसुवर्णाग्निदधिदूर्व्वाघृतादिस्पर्श-श्रीगोविन्दनामग्रहणं कार्य्यमित्यर्थः। ब्राह्मणान् स्वस्ति वाच्य ब्राह्मणद्वारा शान्त्युदकसम्पादनेन स्वस्त्ययनं कृत्वेत्यर्थः।

श्वो भूते शान्तिं कृत्वा एकोद्दिष्टं प्रदायेति हारीतवचनात् ब्राह्मणालाभे स्वयमेव शान्तिं कुर्य्यात्। तत्र शान्त्युदकग्रहणमङ्गलद्रव्यस्पर्शनं मरणाशौचे मरणाशौचमुपक्रम्य विधानात्। आशुच्याद्दिप्रमुच्यन्ते इत्यनेन सशिरस्कस्नान-गोसुवर्णाग्निघृतादि मङ्गलद्रव्यस्पर्श-श्रीगोविन्दनामग्रहणम्। शान्त्युदकैर्विना अशौचनिवृत्तिर्नास्ति इति हारलताकारादयः। शान्तिस्तु अशाखोक्तैव कार्य्या।

सर्व्वत्र वामदेव्यस्य गानमित्यथवा त्रिधा।

इति छन्दोगपरिशिष्टवचनात् सामगैर्वामदेव्यगानेन शान्तिः कार्य्या। गानाशक्तौ तु त्रिधा पाठेनेति।

वामदेव्यऋचस्तु-कयानश्चित्र इति कस्त्वासत्यो मदानामिति अभीषुणः सखीनामिति स्वस्ति न इन्द्रो वृद्धश्रवा इति चतस्रः। आद्यावन्ते च गायत्र्या शान्तिकरणम्।

यत्तु—

शन्नो देवीति सूक्तेन प्रथमं द्वाभ्यां द्वितीयं शन्नोदेवीरन्यत्र शन्न इन्द्राग्नी तदनु मित्रावरुणा इति तृतीयं शन्नोवातेति-पृथिवी शान्तिरिति चतुर्थं उभयत्र सर्व्वत्र शान्तिं सावित्रीं कुर्य्यादिति पैठीनसुक्तं चतुर्धा शान्तिकरणं तत् बह्वृचगृह्योक्तत्वेन ऋग्वेदिनामेवेति। यजुर्वेदिनान्तु ऋचं वाचं प्रपद्ये इत्यादि द्यौः शान्तिरित्यन्तैः समस्तमभिमन्त्रैराद्यावन्ते च गायत्र्या शान्ति-करणं ॐकारेण व्याहृतिभिर्गायत्र्याद्यावन्ते चेति कात्यायन-वचनात्।

तदयं प्रयोगः—

दान्तः कश्चिद्ब्राह्मणः स्वयं कुशैः शिरसि जलविन्दुप्रक्षेपरूपां शान्तिं कुर्य्यात्। प्रथमं प्रणवव्याहृतिसावित्रीभिः। ततश्च—

ॐ ऋचं वाचं प्रपद्ये मनो यजुः प्रपद्ये सामप्राणं प्रपद्ये चक्षुः-श्रोत्रं प्रपद्ये वागोजः सहौजो मयि प्राणापानौ॥ १॥

ॐ यन्मे छिद्रं चक्षुषो हृदयस्य मनसो वातितृणं* बृहस्पतिर्मे तद्दधातु शन्नो भवतु भुवनस्य यस्पतिः॥ २॥

भूर्भुवः स्वः तत्सवितुरित्यादि॥ ३॥

* पुस्तके तृणं। मूले-न्नम्

कयानश्चित्र आभुवदूती सदावृधः सखा कया शचिष्ठया वृता ॥ ४ ॥

कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः ।
दृढाचिदारुजे वसु* ॥ ५ ॥

अभीषुणः सखीनामविता जरितॄणां शतम्भवा स्युतिभिः ॥६॥

कयात्वन्न ऊत्याभिः प्रस्कान्दसे† वृषन् कया स्तोतृभ्य आभर ॥७॥

इन्द्रो विश्वस्य राजति शन्नो अस्तु द्विपदे शंचतुष्पदे ॥८॥

शन्नो मित्रः शं वरुणः शन्नो भवत्वर्य्यमा शन्न इन्द्रो बृहस्पतिः शन्नो विष्णुरुरुक्रमः ॥९॥

शन्नो वातः पवतां शन्नस्तपतु सूर्य्यः । शन्नः कनिक्रदद्देवः पर्ज्जन्यो अभिवर्षतु ॥१०॥

अहानि शम्भवन्तु नः शं रात्रिः प्रतिधीयताम् । शन्न इन्द्राग्नी भवतामवोभिः शन्न इन्द्रावरुणा रातहव्या । शन्न इन्द्रापूषणा वाजसातौ शमिन्द्रासोमा सुविताय‡ शं योः ॥११॥

शन्नो देवीरभीष्टये आपो भवन्तु पीतये शंयोरभिस्रवन्तु नः ॥१२॥

स्योना पृथिवि नो भवानृक्षरा निवेशनी यच्छानः शर्म्म सप्रथाः ॥१३॥

---

* ख पुस्तके वसुरितिपाठः ।

† मूलपुस्तके प्रमन्दसे इतिपाठः ।

‡ आदर्शे सविताव ।

आपो हि ष्ठा मयोभुव स्ता न ऊर्जे दधातन महेरणाय चक्षसे ॥१४॥

यो वः शिवतमो रस स्तस्य भाजयतेह नः उशतीरिव मातरः ॥१५॥

तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ। आपो जनयथाच नः ॥१६॥

द्यौः शान्तिरन्तरीक्षं शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिर्वनस्पतयः शान्तिः [ विश्वेदेवाः शान्ति ब्रह्म शान्तिः ] शान्तिरेव शान्तिः ॥१७॥

पुनरपि प्रणव-व्याहृति-सावित्रीभिरिति यजुर्वेदिनाम्। सामगानान्तु प्रथमं प्रणवव्याहृतिसावित्रीभिः-ततः-ॐ कयानश्चित्र आभूवदूति सदावृधः सखा कया सचिष्ठया वृता। ॐकस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः। दृढ़ाचिदारुजे वसु ॥ अभीषुणः सखीनामविता जरितॄणां शतम्भवा स्यूतये॥ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्तार्क्ष्योऽरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ पुनरपि प्रणवव्याहृतिसावित्रीभिरिति। एवं शान्तिं कृत्वा अशौचकालजनितपापक्षयार्थं काञ्चनादिकं किञ्चिद्दद्यात्।

यथा कूर्म्मपुराणे—

दशाहान्तु परं सम्यक् विप्रोऽधीयीत धर्म्मवित्।
दानञ्च विधिना देयमशुभात्तारकं हि तत्॥

क पुस्तके [ ] चिह्नितांशः पतितः।

दानविवेचनन्तु दानकौमुद्यां कृतमस्माभिः। इह तु प्रयोगमात्रं किञ्चिल्लिख्यते।

—काञ्चनादिकं तद्देवतां सम्प्रदानञ्चाभ्यर्च्य इदं काञ्चनं तुभ्यमहं ददानीति द्विजकरे जलदानं ददस्वेति तेनोक्ते वारिणा काञ्चनं प्रोक्ष्य वामहस्तेन धृत्वा ॐ अद्येत्यादि अमुकगोत्रोऽमुकशर्म्मा अशौचकालजनितपापक्षयकाम इदं काञ्चनमर्च्चितमग्निदैवत-ममुकशर्म्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे इति द्विजकरे दद्यात् ग्रहीता स्वस्तीति वदेत्। ब्राह्मणोहेमपक्षे यथासम्भवगोत्रनाम्ने ब्राह्मणायाहं सम्प्रददे इति।

अद्येत्यादि कृतैतत् काञ्चनदानप्रतिष्ठार्थं दक्षिणामिदं रजतं पितृदैवतं अमुकगोत्रायामुकशर्म्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे इति दक्षिणां दद्यात्। ग्रहीता स्वस्तीत्युक्त्वा दक्षिणां गृहीत्वा गायत्रीं कामस्तुतिञ्च पठित्वा काञ्चनमिदमग्निदैवतमिति वदेत्।

सुवर्णे दीयमाने तु रजतं दक्षिणा स्मृता।

इत्यग्निपुराणवचनात् रजतमेवात्र दक्षिणा।

ततश्च—

प्रेतमुद्दिश्य यो दद्याद्धेमगर्भांस्तिलान् नृप।
यावन्तस्ते तिलाः स्वर्गे तावत्कालं स मोदते॥

इति ब्रह्मपरिशिष्टोक्तवचनात् काञ्चनगर्भतिलानुत्सृजन्ति। हेमगर्भ-तिलान् विष्णुं सम्प्रदानञ्चाभ्यर्च्य इमांस्तिलान् तुभ्यमहं ददानीति द्विजकरे जलदानं ददस्वेति तेनोक्ते वारिणा तिलानभ्युक्ष्य—

ॐ विष्णुदेहोद्भवाः पुण्यास्तिलाः पापप्रणाशनाः।

प्रेतस्वर्गं प्रयच्छन्तु संसारार्णवतारकाः॥

इति पठित्वा वामहस्तेन धृत्वा कुशतिलजलान्यादाय ॐ अद्ये-त्यादि अमुकगोत्रस्यामुकशर्म्मणो मरणाशौचान्तद्वितीयेऽहनि अमुकगोत्रस्यामुकशर्म्मण एतत्तिलसमसंख्यकालस्वर्गवासकाम-स्तिलानिमान् विष्णुदैवतान् हेमगर्भान् गन्धाद्यर्चितान् ॐ अमुकगोत्रायामुकशर्म्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे इति द्विज-करे सकुशजलं दद्यात्। ग्रहीता गृहीत्वा स्वस्तीति वदेत्।

ब्राह्मणोद्देश्यपक्षे तु यथासम्भवगोत्रनाम्ने ब्राह्मणाय सम्प्रददे इति। अद्येत्यादि कृतैतत्तिलदानप्रतिष्ठार्थं दक्षिणामिदं काञ्चन-मग्निदैवतममुकगोत्रायामुकशर्म्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे इति दक्षिणान्दद्यात्। ग्रहीता स्वस्तीत्युक्त्वा गायत्रीं कामस्तुतिञ्च पठित्वा एते तिला विष्णुदैवता इति वदेत्। एवमन्येष्वपि दानेषु बोद्धव्यम्।

वैतरणीधेनुदानन्तु आसन्नमृत्युकर्त्तव्यमेव तदानीमशक्तौ पुत्रा-दयोऽप्येकादशाहे कुर्व्वन्तीत्याचारः। तत्तु पूर्व्वमेव लिखितमस्ति। तत्राचम्य यथाशक्ति दानानि दद्यात्। यथा—

भूमिर्दीपान्नपानीयं वस्त्रं ताम्बूलमासनम्।

गन्धः पुष्पं फलं छत्रं पादुका स्वर्णरौप्यकम्॥

शय्या धेनुस्तथान्यानि दद्याद्दानानि शक्तितः* ॥

* न पुस्तके तथैतानि ... .. प्रोक्तम।

अत्र केचित् ? आद्यानन्तरम्—

ततश्चोद्दिश्य पितरं ब्राह्मणेभ्यो धनं ददौ।

महार्हाणि च रत्नानि गाश्च वाहनमेव च।

इति रामायणदर्शनादेकोद्दिष्टश्राद्धात् परं कुर्व्वन्ति। तत्र श्राद्धस्य मध्याह्नविधानात् दानस्य पूर्व्वाह्णकर्त्तव्यत्वात् रामायणवचनस्य सम्प्रदानसमर्पणतयैव चरितार्थत्वात् सकलशिष्टाचारदर्शनाच्च श्राद्धात् पूर्व्वमेव दानमिति। दानविधिस्तु दानकौमुद्यां विवेचितोऽस्ति *। अत्रोद्देशमात्रं क्रियते।

भूमेर्देवता विष्णुः स्वर्गलोकमहितत्वं फलमन्यत्सर्व्वं पूर्व्ववत्। दीपस्य देवता विष्णुरक्षय्यगतिः फलम्। अन्नस्य देवता प्रजापतिरक्षयसुखप्राप्तिः फलम्। जलस्य देवता वरुणः स्वर्गलोकमहितत्वं फलम्। वस्त्रस्य देवता बृहस्पतिः स्वर्गलोकमहितत्वं फलम्। ताम्बूलस्य देवता वत्सराजो मेधावित्व सुभोगित्व-प्राज्ञत्वप्राप्तिः फलम्। आसनस्य देवता उत्तानाङ्गिरः फलन्तु राजत्व-सुखित्वभवनम्। पादुकाया उत्तानाङ्गिरो देवता प्राज्ञत्वसुखित्वभवनं फलम्। स्वर्णस्याग्निर्देवता कुलसहितविष्णुभवनप्रयाणं फलम्। गन्धस्य देवता गन्धर्व्वो ब्रह्मपदप्रयाणं फलम्। पुष्पस्य वनस्पतिर्देवता फलमत्यन्तसुखित्वभवनम्। रजतस्य पितरो देवता कनकोज्ज्वल-विमानकारणकप्रयाणं फलम्। फलस्य वनस्पतिर्देवता सर्व्वदा हर्षान्वितत्वभवनं फलम्। छत्रस्य उत्तानाङ्गिरो देवता प्राज्ञत्व-

* [illegible]

सुखित्वभवनम् फलम्। शय्याया उत्तानाङ्गिरो देवता फलमत्यन्त-सुखित्वभवनम्। धेनोर्देवता रुद्रः स्वर्लोकमहितत्वं फलम्। एवमन्यान्यपि यथाशक्ति दद्यात्। ]

मत्स्यपुराणे—

*अशौचान्ताद्द्वितीयेऽह्नि शय्यां दद्याद्विलक्षणाम्।
काञ्चनं पुरुषं तद्वत् फलवस्त्रसमन्वितम्॥
सम्पूज्य द्विजदाम्पत्यं नानाभरणभूषणैः।
वृषोत्सर्गश्च कर्त्तव्यो देया च कपिला शुभा॥

अशौचान्तादिति अशौचान्ताहादित्यर्थः। अतएव अशौचान्ताह-द्वितीयेऽह्नीति निमित्तोल्लेखः कार्य्यः। विलक्षणां विचित्रां खट्वा-सन-पदप्रक्षालनपानपात्र-सताम्बूलपात्राच्छादनोपधानादि नाना-विधोपकरणान्वितामित्यर्थः। काञ्चनपुरुषदानन्तु शय्यादानात् पृथगेव तद्वद्दद्यादित्यभिसम्बन्धात्। द्विजदम्पतिपूजनमपि शय्या-दानात् पृथगेव न तु वृषोत्सर्गस्याङ्गं पारस्करादिनानामुनिभि-र्वृषोत्सर्गाभिधाने द्विजदम्पतिपूजानभिधानात् प्रधानीभूतशय्यादि-मध्यपाताच्च।

न च क्त्वाप्रत्ययेनोपकारकत्वबोधनात् फलवत्सन्निधावफलं तदङ्गमिति न्यायादङ्गत्वमिति वाच्यम्।

क्त्वाप्रत्ययस्यानन्तर्य्यमात्राभिधायकत्वात् न हि भुक्त्वा स्वपितीत्यादौ शयनस्योपकारकमङ्गं वा भोजनं भवति न चोप-

* क पुस्तके-स्तकान्तादिति क्वचित् पाठः।

कारकत्वमात्रमङ्गताप्रयोजकं आरभ्भणीयादौ व्यभिचारात् किन्तू-भयस्मिन् क्रियमाणे द्विजदम्पतिपूजानन्तरमेव वृषोत्सर्गः कार्य्यः।

न च पाठक्रमानुरोधात् क्रमो लभ्यत एव इति वाच्यम्। श्रावोधितानन्तर्य्यबलात् वृहस्पतिसवेनेष्ट्वा सोमेन यजेतेतिवत् कृतद्विजदम्पतिपूजनस्यैव एकादशाहवृषोत्सर्गाधिकारादुभयस्मिन् क्रियमाणे विश्वजिन्न्यायात् स्वर्गफलमुद्दिश्य द्विजदम्पतौ पूजयित्वैव वृषोत्सर्गः कार्य्यः। वृषोत्सर्गाशक्तौ तु निरपेक्षं द्विजदम्पतिपूजनं निर्व्विवादमेवेति ध्येयम्।

नानाभरणभूषणैरिति आभरणानि कुण्डलाङ्गुरीयशङ्खादीनि भूषणानि गन्धमाल्यवस्त्रादीनि। देयेति पृथग्विधानश्रवणात् शृङ्गाद्यकपिलादानमपि पृथगेव। किन्तु विलक्षणशय्याकाञ्चन-पुरुषदानद्विजदम्पतिपूजानां फलविशेषानुपादानात् विश्वजिन्न्या-येन स्वर्गफलमेव कल्पनीयं वृषोत्सर्गकपिलादानयोस्तु मुन्यन्तरोक्तः फलविशेषोऽस्त्येव।

यथा याज्ञवल्क्यः—

हेमशृङ्गी शफै रौप्यैः सुशीला वस्त्रसंयुता।
कांस्योपदोहा दातव्या क्षीरिणी गौः सदक्षिणा॥
दाताऽस्याः स्वर्गमाप्नोति वत्सरान् लोमसम्मितान्।
कपिला चेत्तारयति भूयश्चासप्तमं कुलम्॥

देवव्रतः—

एकादशाहे प्रेतस्य यस्य चोत्सृज्यते वृषः।
प्रेतलोकं परित्यज्य स्वर्गलोकं स गच्छति॥

मासिके वा त्रिपक्षे वा षण्मासे चाब्दिके तथा।
वृषोत्सर्गश्च कर्त्तव्यो यावन्न स्यात् सपिण्डता॥

एकादशाहेऽशक्तौ मासिकादिकः क्रमिकः कालः। तत्रापि तद्दैव फलं एकादशाहस्यैवानुकल्पिककालत्वात्।

सपिण्डनात् परन्तु कालविशेषं फलविशेषञ्चाह —

छन्दोगपरिशिष्टम्—

कार्त्तिक्यामयने चैव फाल्गुन्यामष्टकासु च।
आषाढ़्यां विषुवे चैव पौष्णामाश्वयुजस्य च॥
स्वर्भानुना चोपसृष्टे आदित्ये चन्द्रमस्यपि।
सप्तावरान् सप्तपूर्व्वानुत्सृष्टस्तारयेद्वृषः॥

पौष्णं रेवतीनक्षत्रं तद्युक्ता या आश्विनी पौर्णमासी तस्यामित्यर्थः।

मत्स्यपुराणे—

चरणानि शिरः पुच्छं यस्य श्वेतानि गोपतेः।
लाचारससवर्णस्य तं नीलमिति निर्दिशेत्॥
वृष एव स मोक्तव्यो न स धार्य्यो गृहे भवेत्।
तदर्थमेषा चरति लोके गाथा पुरातनी॥
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्।
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत्॥

एनं वृषं लक्षणसंनियुक्तं
गेहोद्भवं क्रीतमथापि राजन्।
मुक्त्वा न शोचेन्मरणं महात्मा
मोक्षे गतिस्तस्य मतोऽभिधास्ये॥

अत्र नीलवृषोत्सर्गस्य गयाश्राद्धाश्वमेधतुल्यतामभिधाय सामान्येन मोक्षफलकथनादेकादशाहेऽपि मोक्षफलत्वमेव। एतेन सर्व्वत्रैव फलश्रवणात् वृषोत्सर्गः काम्य एव।

अत्र केचित्-मत्स्यपुराणे एकादशाहश्राद्धतुल्यतयाभिधानात्, शक्तेनावश्यं कर्त्तव्य इति वदन्ति। तन्न

शय्याकाञ्चनपुरुषकपिलादानादीनामपि तथात्वप्रसङ्गात्, एकादशाहश्राद्धस्य अशक्तं प्रत्यपि नित्यत्वनिश्चयात्तत्तुल्यताभिधानस्याशक्तं प्रत्यनित्यतारूपफल*स्योक्तित एव व्याघाताच्च।

वस्तुतस्तु एकादशाहश्राद्धतुल्यताभिधानस्य फलमेवालोक्यं तथाहि किमिदमेकादशाहश्राद्धतुल्यतयाऽभिधानफलं अनन्यकालीनत्वं वा अभिन्नफलत्वं वा शक्तस्याऽवश्यानुष्ठेयत्वं अभिन्नकर्त्तृकत्वं वा।

नाद्यः—मासिके वा त्रिपक्षे वा इत्यादि देवव्रतवचने कालान्तरस्यापि प्रतिपादितत्वात्।

न द्वितीयः—एकादशाहादौ वृषोत्सर्गस्य प्रेतलोकपरिहारपूर्व्वकस्वर्गलोकगमनफलत्वेन नीलवृषगोचरतया मोक्षफलत्वेन कार्त्तिक्यादौ पूर्व्वापरसप्तपुरुषतारणफलत्वेन च एकादशाहश्राद्धस्य तु प्रेतत्वपरिहारमात्रफलत्वेन च पृथक्पृथक्फलत्वात्।

न तृतीयः—एकस्यैव शक्तं प्रति नित्यत्वमशक्तं प्रत्यनित्यत्वमित्यदृष्टाश्रुतकल्पनाया हास्यास्पदत्वात्। अन्यथा एकादशाहश्राद्धस्यापि तुल्यन्यायादशक्तं प्रत्यनित्यता स्यात्।

* ग पुस्तके अनित्यताफलस्येति पाठः।

न चतुर्थः—एवञ्च काम्यत्वे निर्णीते सति कामनावतः सर्व्वस्यैवाधिकारात्।

ततश्च—

महार्हाणि च रत्नानि गावश्च वाहनमेव च।
यानानि दासीदासांश्च रामस्त्वौर्द्ध्वदेहिके॥

इत्यादि रामायणोक्तवत्सर्व्वमेव नित्यकाम्यसामान्यमेकादशाहानुष्ठेयम्।

*मत्स्यपुराणे—शय्यादानादिकमुक्तं तत्र चैतत्प्रकरणे एकादशाहश्राद्धं नाभिहितं कथं तत्तुल्यताभिधानमित्यलं बहुना।

केचित्तु मलमासाभ्यन्तरे एकादशाहे वृषोत्सर्गो न कार्य्यं इत्याहुः। तन्न-एकादशाहे नियमविधानात्।

नैमित्तिकानि काम्यानि निपतन्ति यथा यथा।
तथा तथैव कार्य्याणि न कालस्तु विधीयते॥

इति दक्षवचने नैमित्तिकपदेनागन्तुकनिमित्तोपनिपातविहितस्य गृहीतत्वादुपरागनिमित्तकदानवृषोत्सर्गादिवदपाठवादिनिमित्तकशान्तिकर्म्मादिवच्च द्वादशाहिकवैपक्षिकश्राद्धवच्च मरणनिमित्तकैकादशाहविहितवृषोत्सर्गशय्यादानादीनामनिवार्य्यत्वाच्च।

तथा बृहस्पतिः—

नित्यनैमित्तिके कुर्य्यात् प्रयतः सन् मलिम्लुचे।

* ख पुस्तके मत्स्यपुराणमतं नोद्धारितम्।

वृषपरिशिष्टधृतवचनञ्च—

मलमासादिकः कालो वृषोत्सर्गे न दूष्यति ।
वत्सरोपरिकर्त्तव्ये कालशुद्धिर्विधीयते ॥ इति ॥

यत्तु—

अग्न्याधानं प्रतिष्ठाञ्च यज्ञदानव्रतानि च ।
देवव्रत-वृषोत्सर्ग-चूड़ाकरण-मेखलाः ।
मङ्गल्यमभिषेकञ्च मलमासे विवर्जयेत् ॥

इति ज्योतिःपराशरवचनं तत् वत्सरात्परकर्त्तव्यवृषोत्सर्गविषयमिति । अत्र यद्यपि वृषस्यैवोत्सर्गः श्रूयते तथापि चतस्रो वत्सतर्य्यस्ताश्चालंकृत्येति पारस्करेणोपदेशात् एनं युवानं पतिमित्युत्सर्गमन्त्रलिङ्गाच्च—

द्विहायनोभिर्धन्याभिश्चतुर्भिःसह रूपवान् ।
द्वाभ्यामथैकयाऽभावादुत्स्रष्टव्यो द्विहायनः ॥
यो वाहयति* षण्डञ्च पिवेत् क्षीरञ्च तद्गवाम् ।
यावन्ति तस्य लोमानि तावद्वर्षाण्यधोगतिः ॥
तासां न चाज्यं पातव्यं शाश्वतीं गतिमिच्छता ।

इत्यग्निपुराणवचनाच्च वत्सतरीचतुष्टयसहितस्यैव वृषस्योत्सर्गः । अतएव वत्सतरीचतुष्टयसाहित्येन सङ्कल्पवाक्यं सुगतिसोपानादौ लिखितम् । एष च शूद्रेणाप्यनुष्ठेयः सामान्येन विधानात् ।

श्वेतोदरः कृष्णपृष्ठो ब्राह्मणस्य प्रशस्यते ॥

---

* ग पुस्तके—याबा हरति ।

सिन्धरत्नेन वर्णेन क्षत्रियस्यापि शस्यते।
काञ्चनाभेन वैश्यस्य कृष्णेनाप्यन्त्यजन्मनः॥

इति मत्स्यपुराणे वृषस्य वर्णविशेषेण प्रशस्य कथनाच्च। अतएव पारस्करे एतयैवोत्सृजेरन्निति एतयैव ऋचा नान्यवाक्येनेत्येवकारार्थवशात् वाक्यभेदकल्पनागौरवाच्च उत्सृजेरन्निति चातुर्वर्णसाधारणतया बहुवचनोपदेशाच्च रथकारन्यायात् शूद्रेणापि एतं युवानमित्याद्युत्सर्गप्रकाशकमन्त्रः पठनीय एव।

न च —अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते।
इति ब्राह्मणद्वारा पठनीय इति वाच्यम्।

प्रधानस्य *वृषात् स्वस्वत्वध्वंसरूपस्य स्वयमेवानुष्ठेयस्य मुनिभिरेव तादृशवाक्येनैव विहितस्यानन्यथासिद्धस्य वृषोत्सर्गस्याजातत्वात् रुद्राध्यायजपादेस्तु अङ्गत्वेनाचार्यद्वाराप्यनुष्ठेयत्वे श्राद्धाङ्गमन्त्रवदन्यथासिद्धत्वमिति।

अतएवोत्सर्गमन्त्रपाठानधिकारात्तादृशविशेषप्रतिपादकवचनाभावादनुपनीतस्य स्त्रियाश्चाधिकारो वृषोत्सर्गे नास्तीति ध्येयम्।

प्रमाणाभावाद्वृषोत्सर्गेऽधिवासो नास्तीति केचित् तदशुद्धं एतं युवानं पतिं वो ददामीति मन्त्रलिङ्गेन वत्सतरीगतस्वत्वारोपणेन च वत्सतरीणां देवतात्वावगमात् "देवतोद्देशेन द्रव्यत्यागो यागः" इति यागलक्षणव्यवस्थापनाद् यागत्वे सिद्धे दर्शपौर्णमासातिदेशेनाङ्गभूताधिवासप्राप्तेः-गन्धेनाभ्युक्षणं गवामिति शूलगवोक्ताधिवासस्य-

---

* ग पुस्तके—वृषगतस्वत्व

"अथ वृषोत्सर्गो गोयज्ञेन व्याख्यातः" इत्यनेन पारस्करेणाति-दिष्टत्वाच्च।

अत्राधुनिकाः—एकादशाहपूर्व्वदिनेऽशौचसम्भवात् संवत्सरा-भ्यन्तरेऽपि मासिकादौ च*।

प्रमीतौ पितरौ यस्य देहस्तस्याशुचिर्भवेत्।
नापि दैवं न वा पैत्रं यावत् पूर्णो न वत्सरः॥

इति देहाशुद्धिविधानात् संवत्सरात्परमेव माङ्गल्यं† कर्त्तव्यताव-गमात् वृद्धिश्राद्धवदधिवासाभावः, अन्यथा वत्सराभ्यन्तरे वृद्धि-श्राद्धस्याप्यनुष्ठानं स्यादिति प्राचीनाचारमुल्लङ्घ्य व्यवस्थापयन्ति तदयुक्तम्।

यद्यधिवासो वृषोत्सर्गेऽङ्गमित्यस्ति तदाशौचान्तपरदिने वृषो-त्सर्गः कार्य्य इत्युपदिशन् विधिरेव तदङ्गान्यपि विदधातीत्यशौचे-ऽप्यधिवासो वैधः दाशाहिकपिण्डदानवत् तत्राशौचमकिञ्चित्कर-मनङ्गत्वे तु कस्तत्र प्रसङ्गः कथं वा अन्यदा तदनुष्ठानमिति।

न च‡ प्रधानाधिकाराभावान्नाङ्गेऽधिकार इति वाच्यम्। श्वः कर्त्तव्यतया प्रधानाधिकारसम्भवात्।

न च तद्दिनेऽधिवास इति वाच्यं पूर्व्वदिनरूपाङ्गाभावात् न चाङ्गविधानमन्यदा चरितार्थमिति वाच्यं सामान्यप्राप्तस्याङ्गविधे-रनिवार्य्यत्वात्। अन्यथा एकादशाहश्राद्धे पूर्व्वदिने ब्राह्मण-निमन्त्रणाद्यपि न स्यात्।

* क पुस्तके—मासिकादौ च पदं नास्ति।
† क ख पुस्तके—माङ्गल्यात्।
‡ ख पुस्तके पूर्व्वदिने इत्यधिकः।

*न च तत्रापि निमन्त्रणबाधः-

प्रतिगृह्य द्विजो विद्वानेकोद्दिष्टस्य केतनम्।

त्र्यहं न कीर्त्तयेद्ब्रह्म राज्ञो राहोश्च सूतके॥

इति मनुना एकोद्दिष्टस्य निमन्त्रणदिनादारभ्य त्र्यहमध्ययन-निषेधात्।

तथाह वराहपुराणे—

अस्तं गते तथादित्ये गत्वा विप्रनिवेशनम्।

दद्यात्तु पाद्यं विधिवन्नमस्कृत्य द्विजोत्तमम्॥

प्रेतस्य नामगोत्रेऽद्दिश्य यथार्थं विनियोजयेत्।

श्वः करिष्य इति कृत्वा ब्राह्मणांश्च निमन्त्रयेत्॥

गतोऽसि दिव्यलोकं त्वं कृतान्तविहितात्पथः।

मनसा वायुभूतेन विप्रेषु त्वं नियोजय॥

पूजयिष्यामि भोगैन एवं विप्रं नियोजयेत्।

†पादस्रक्षणं तैलेन प्रेतस्य हितकाम्यया॥ इति

न च वचनबलादेव तत्र तथेति वाच्यं वचनस्योक्तयुक्तिमूलत्वेनान्यथा गतिसम्भवात् बलकल्पनाया अयोगात्। किञ्चाशौचपतितश्राद्धस्य निरामिषभोजनमधुश्राजनमैथुनवर्जनादिकमङ्गमपि न स्यात्। उक्तयुक्तिस्तु सर्व्वसिद्धिकरीति सैवोपास्येति।

* क ख पुस्तके -[ ] चिह्नितांशो नास्ति।

† ग पुस्तके—पादप्रक्षालनं तैल।

किञ्चाशौचव्यपगमे सुस्नात' इत्यादिविष्णादिवचनेन दशाहा-त्परमशौचाभावप्रतिपादनादन्यथा सन्ध्यादीनामकरणप्रसङ्गात्।

कालिकापुराणे—

महागुरुनिपाते तु काम्यं किञ्चिन्न चाचरेत्।

लघुहारीतेन च

सहपिण्डक्रियां कृत्वा कुर्य्यादभ्युदयं ततः।
तथैव काम्यं यत्कर्म्म वत्सरात्प्रथमादृते॥

इति काम्यकर्म्मणामेव निषेधात्। तत्रापि च विहितानां काम्यानां दानवृषोत्सर्गादीनां कर्त्तव्यतानियमात् तदङ्गानामधिवासादीनां वत्सराभ्यन्तरे सुतरामेव कर्त्तव्यत्वमायातं अन्यथा तुल्यन्यायात् होमादीनामप्यकरणप्रसङ्गः स्यात् केवलं वृषोत्सर्गमात्रं स्यात्। वृद्धिश्राद्धस्य तु

सेतुवृक्षजलादीनां प्रतिष्ठासु विशेषतः।
तीर्थयात्रावृषोत्सर्गे वृद्धिश्राद्धं प्रकीर्त्तितम्॥

इति मत्स्यपुराणवचनात् वृषोत्सर्गाङ्गत्वेऽपि वाचनिक एवात्र निषेधः।

यथा—

त्रिपिण्डमाचरेच्छ्राद्धमेकोद्दिष्टं मृताहनि।

उशनाः—

नार्वाक्‌संवत्सराद्‌वृद्धिर्वृषोत्सर्गं विधीयते।
सपिण्डीकरणादूर्द्ध्वं वृद्धिश्राद्धं विधीयते॥ इत्यलं बहुना।

वृषोत्सर्गश्च एकादशाहश्राद्धात् पूर्व्वमेव कार्य्यो न तु परं देवकृत्य-त्वेन पूर्व्वाह्णविधानात् निषेधश्रवणाच्च।

यथा शाट्यायनः—

एकादशाहिकं श्राद्धं वृषोत्सर्गं करोति यः ।

असिपत्रवने घोरे पितृभिः सह पच्यते ॥

## अथ शय्यादानादिप्रयोगः।

खट्वादिनानाविधोपकरणां शय्यामुत्तानाङ्गिरसं ब्राह्मणञ्चाभ्यर्च्च्य इमां सोपकरणां शय्यां तुभ्यं ददानीति द्विजकरे जलं दत्त्वा ददस्वेति तेनोक्ते वारिणा शय्यां प्रोक्ष्य अद्येत्यादि अमुकगोत्रस्य प्रेतस्यामुकशर्म्मणः स्वर्गकाम इमां नानाविधोपकरणां शय्यामुत्तानाङ्गिरोदैवतामर्च्चिताममुकगोत्रायेत्यादिं दक्षिणान्तं पूर्ववत्। ततो वस्त्रसमन्वितं काञ्चनपुरुषं विष्णुं ब्राह्मणञ्च सम्पूज्य पूर्ववत् कृत्वा अद्येत्यादि अमुकगोत्रस्य प्रेतस्यामुकशर्म्मणः स्वर्गकाम इमं काञ्चनपुरुषं फलवस्त्रसमन्वितं विष्णुदैवतमर्च्चितममुकगोत्रायेत्यादि दक्षिणान्तं पूर्ववत्। ततो द्विजदम्पती आनीय अद्येत्यादि अमुकगोत्रस्य प्रेतस्यामुकशर्म्मणः स्वर्गकामोऽहं द्विजदम्पती पूजयिष्ये इति सङ्कल्प्य द्विजदम्पतीभ्यां पाद्यं नमः इत्यादि गन्ध-पुष्प-ताम्बूल-नानाविधोपचार-वस्त्रालङ्कारादिभिः सम्पूज्य दक्षिणां दद्यात्। वृषोत्सर्गप्रयोगस्तु दानकौमुद्यां द्रष्टव्यः। ततश्च मत्स्यपुराणोक्तक्रमानुरोधात् कपिला देया।

सवत्सां कपिलां स्वर्णशृङ्गाद्यलङ्कृतां पाद्यादिभिः सम्पूज्य धेन्वङ्गाधिष्ठातृदेवताभ्यो नम इति पुष्पाञ्जलिं दत्त्वा कृताञ्जलिः पठेत्।

या लक्ष्मीः सर्व्वभूतानां या च देवेष्ववस्थिता।
धेनुरूपेण सा देवी मम शान्तिं प्रयच्छतु॥

देहस्था या च रुद्राणी शङ्करस्य सदाप्रिया* ।
धेनुरूपेण सा देवी मम पापं व्यपोहतु ॥
विष्णोर्वक्षसि या लक्ष्मीः स्वाहा या च विभावसोः ।
चन्द्रार्कशक्रशक्तिर्या धेनुरूपा च साश्रियेऽ† ॥
चतुर्मुखस्य या लक्ष्मीर्या लक्ष्मीर्धनदस्य च ।
या लक्ष्मीः सर्व्वभूतानां सा धेनुर्वरदाऽस्तु मे ॥
स्वधा त्वं पितृमुख्यानां स्वाहा यज्ञभुजां यतः ।
सर्व्वपापहरा धेनुः सर्व्वशान्तिं प्रयच्छ मे ॥

इति पठित्वा रुद्रं ब्राह्मणञ्चाभ्यर्च्य इमां धेनुं तुभ्यं ददानीति द्विजकरे जलं दत्त्वा ददस्वेति तेनोक्ते धेनुं प्रोक्ष्य वस्त्रेणाच्छाद्य पुच्छं धृत्वाद्येत्यादि अमुकगोत्रस्य प्रेतस्यामुकशर्म्मणो मरणाशौचान्तद्वितीयेऽहनि अमुकगोत्रस्य प्रेतस्यामुकशर्म्मण एतद्धेनुलोमसम्मितवत्सरावच्छिन्न स्वर्गवासानन्तरकुलतरणकाम इमां कपिलां धेनुं सौवर्णशृङ्गीं रौप्यखुरां ताम्रपृष्ठां कांस्योपदोहामादर्शललाटां घण्टाग्रीवां चामरपुच्छां पयस्विनीं वासोयुगाच्छादितां अमुकगोत्रायामुकशर्म्मणे ब्राह्मणायाहं सम्प्रददे इति ग्रहीता पुच्छे गृहीत्वा स्वस्तीति वदेत् दक्षिणादान-गायत्रीपाठादिकम् ।

---

* ग पुस्तके--शङ्करस्य च या प्रिया ।
† क ख पुस्तके--रूपास्तथा प्रिये ।

ततो दाता धेनुं प्रदक्षिणीकृत्य पठेत्—

यावन्ति तव लोमानि शरीरे सम्भवन्ति हि।

तावद्वर्षसहस्राणि स्वर्गे वासोऽस्तु मे पितुः॥

ततो घासग्रासदानम्।

सुरभि त्वं जगन्माथे देवानाममृतप्रदे।

गृहाण वरदे ग्रासमीप्सितार्थं प्रदेहि मे॥

कपिलाभावे तदितरसालङ्कृतधेनुदाने तु अद्येत्यादि एतद्धेनुलोम-सम्मितवत्सरावच्छिन्न-स्वर्गवासकाम इमां धेनुमित्यादि पूर्व्ववत् सर्व्वं करणीयम्। तत एकोद्दिष्टं कुर्य्यात्।

लघुहारीतः—

एकोद्दिष्टन्तु कर्त्तव्यं पाकेनैव सदा स्वयम्।

अभावे पाकपात्राणां तदहः समुपोषणम्॥

पाकपात्राणां स्थाल्यादीनां एतत्सकलसामग्र्यभावोपलक्षकम्। तदहः समुपोषणमिति पाकसामग्र्यभावे पाकाभावाच्छ्राद्धलोपे द्रव्यासम्पादनेन तद्दिनविहितातिक्रमजनितपापक्षयार्थं प्रायश्चित्त-रूपं, श्राद्धन्तु क्षणकादश्यां सामग्रीं सम्पाद्य कर्त्तव्यम्। अपाट-वादौ तु नोपवासः।

यत्तु—

सपिण्डीकरणं यावत् प्रेतश्राद्धानि षोड़श।

पक्वान्नेनैव कार्य्याणि सामिषेण द्विजातिभिः॥

इति वचनं तत् सपिण्डीकरणात्मश्राद्धानां पाकावश्यभावप्रति-

पादकं न तु सांवत्सरिकैकोद्दिष्टस्य पाकावश्यम्भावव्यवच्छेदकं पाकेनैव सदा स्वयमित्यस्य सङ्कोचे प्रमाणाभावात्।

शूद्रेण त्वामात्रेणैव।

यथा मत्स्यपुराणे—

एवं शूद्रोऽपि सामान्यं वृद्धिश्राद्धञ्च सर्व्वदा।
नमस्कारेण मन्त्रेण कुर्य्यादामान्नवद्बुधः॥

सामान्यं यत्किञ्चिद्देवपूजादिकमित्यर्थः। वृद्धिश्राद्धमिति सकलश्राद्धोपलक्षणम्।

तथा—

सदा स्वयमित्यनेनैकोद्दिष्टं नान्यद्वारेति प्रागेव व्याख्यातम्।

आद्यैकोद्दिष्टे विशेष उक्तो वराहपुराणे—

प्रक्षाल्य पादौ विप्रस्य करौ धृत्वा च मन्त्रवित्।
उपविश्यासने तत्र इमं मन्त्रमुदीरयेत्॥

अत्रासने देवराजाभ्यनुज्ञातो
विश्रम्यतां द्विजवर्य्यानुकम्पाय।
प्रसादये त्वासनं गच्छ पूतं
ज्ञानाग्निशुद्धेन करेण विप्र॥

आतपार्थं ततश्छत्रं ब्राह्मणाय प्रदीयते।
पश्चादुपानहौ दद्यात् पादस्यर्शकरी शुभे॥
सुतप्तवालुका भूमिरसिपत्रवनं तथा।
सन्तारयति दुर्गाणि प्रेतं ददद्युपानहौ॥

अम्बुघटश्राद्धन्तु एकादशाहश्राद्धदिनादारभ्य कार्य्यं तत् पूर्व्वमशौचेऽनधिकारात्।

मत्स्यपुराणे—अशौचान्ताद्द्वितीयेऽह्नि इत्युपक्रम्य—

यावदब्दञ्च यो दद्यादुदकुम्भं विमत्सरः।
प्रेतायान्नसमायुक्तं सोऽश्वमेधफलं लभेत्॥

इत्यभिधानात्।

अतएवाब्दपदं किञ्चिन्न्यूनाब्दपरं काम्यञ्चैतत् फलश्रवणात्। अशौचान्तरपातेऽपि न देयमिदमनधिकारात्। शुचिभूतेनापि पतितान्नि——श्रेयानि मृताहसम्बन्धिश्राद्धस्यैवाशौचान्ते देयत्वादनावश्यकत्वाच्च।

पारस्करः—

अहरहरन्नमस्मै ब्राह्मणायोदकुम्भञ्च दद्यात्। पिण्डमप्येके निपृणन्तीति।

अत्र—

अहन्यहनि यच्छ्राद्धं तन्नित्यमभिधीयते।

इति भविष्यपुराणवचनात् नित्यत्वे सति—

नित्यश्राद्धमदैवं स्यादर्घ्यपिण्डविवर्जितम्।

इति बृहस्पतिवचनात्॥

नित्यं तावत् प्रवक्ष्यामि अर्घ्यावाहनवर्जितम्।

इति वचनाच्च।

अर्घ्यपिण्डादिनिषेधे केचिच्छाखिविशेषाः पिण्डमपि निपृणन्ति ददतीत्यर्थः। तच्च पारस्कर-गोभिलयोरसम्मतम्।

अत्र च सर्व्वत्रान्नस्याम्बुघटस्य च ग्रहणोपदेशात् तयो-रेवोत्सर्गवाक्ये निवेशः। एतदन्नं एषोऽम्बुघट इतिरूपः, एतेन घटस्याप्युत्सर्गः।

संवत्सरमध्ये तु वृद्ध्यादिनिमित्तेन सपिण्डनापकर्षे कृतेऽपि यावद्वर्षमम्बुघटश्राद्धमाह याज्ञवल्क्यः—

अर्व्वाक् संवत्सराद्यस्य सपिण्डीकरणं भवेत्।
तस्याप्यन्नं सोदकुम्भं दद्यात्संवत्सरं द्विजे॥

न चाग्निसपिण्डनविषयमेवेदं वचनं न तु वृद्ध्यर्थसपिण्डनविषय-मिति वाच्यम्। सङ्कोचे प्रमाणाभावात् क्रियाकर्म्मणां समा-पनस्यावश्यकत्वात्।

सपिण्डीकरणान्ता तु ज्ञेया प्रेतक्रिया बुधैः।

इति शातातपवचनात् सपिण्डनान्तप्रेतश्राद्धापकर्षेऽम्बुघटस्याप्यप-कर्षप्राप्तौ तदपवादकं वचनमिदं तत्राग्नसाविव वृद्धावपीति।

एतच्च श्राद्धं वृद्ध्यर्थमपकृष्य सपिण्डने प्रेतत्वपरिहारपूर्व्वक-पितृत्व-प्राप्तौ सत्यामप्यसमवेतार्थेनापि प्रेतपदेनैव कार्य्यम्।

अन्नं कुम्भञ्च दातव्यं प्रेतनिर्देशधर्म्मतः।

इति हारीतवचनात् षोड़शश्राद्धवत् प्रेतपदत्वेनैव देवत्वावगमात्।

न च प्रेतपद पितृपदयोस्तुल्यलोकप्राप्त्युपाधिनैव प्रयोग-नियमः, वाराणस्यादिमृतस्यापि षोड़शश्राद्धानां प्रेतपदेनैव क्रिय-माणत्वात् कृतेष्वपि षोड़शश्राद्धेषु बलवत्तरपापवशेन प्रेतत्वसत्त्वेऽपि सपिण्डनोत्तरश्राद्धानां पितृपदेनैव कर्त्तव्यत्वाच्च किन्तु कर्म्मविशेषे

प्रयोगनियमः सपिण्डनप्राक्विहितानां कर्म्मणां प्रेतपदवत्त्वे देवतात्वं तत्परिविहितानान्तु पितृपदवत्त्वेन इति।

अतएव—

असंस्कृतौ न संस्कार्य्यौ पूर्व्वौ पौत्रप्रपौत्रकैः।
पितरं तत्र संस्कुर्य्यादिति कात्यायनोऽब्रवीत्॥

इति छन्दोगपरिशिष्टवचनात् प्रेतीभूतेनापि पितामहेन सह पितुः सपिण्डने क्रियमाणे पितामहपदोल्लेखेनैव पितामहश्राद्धं न तु प्रेतपदेन तत्र च एतद्वः पितर इत्यादिमन्त्रोऽपि समवेतार्थं इति ध्येयम्।

यदङ्गमपि मङ्गलानां विलसति सीमा विलासलक्ष्मीणाम्।
श्रीगोविन्दमुखेन्दोः स्मितरुचिरभितः शुभं तनुताम्॥

---

एवमशौचशुद्धिं निरूप्येदानीं कालोपाधिविशेषाणां कर्म्माङ्गत्व-निरूपणमुखेन कालशुद्धिर्निरूप्यते।

तत्र महागुरुनिपाते वत्सरपर्य्यन्तं काम्यनैमित्तिककर्म्मनिषेध-माह कालिकापुराणे—

विशेषतः शिवापूजां प्रमीतपितृको द्विजः।
यावत् वत्सरपर्य्यन्तं मनसापि न चाचरेत्॥
महागुरुनिपाते तु काम्यं किञ्चिन्न चाचरेत्।
आर्त्विज्यं ब्रह्मयज्ञञ्च श्राद्धं देवयुतञ्च यत्॥

प्रमीतपितृक इति महागुरुनिपातोपलक्षण(क)म्। अतएव वक्ष्यति महागुरुनिपाते त्विति। शिवापूजामिति सकलकाम्यनैमित्तिक

देवपूजोपलक्षणम् तेन दुर्गोत्सवादिनिषेधः। यावद्वर्षपर्य्यन्त-मिति सपिण्डनेन महागुरोः प्रेतत्वपरिहारपर्य्यन्तमित्यर्थः। तेन संवत्सरमध्येऽपि वृद्ध्यर्थमपकृष्य सपिण्डने कृते पितृत्वप्राप्त्यर्थ-मेवापकर्षादन्यथा वृद्धिश्राद्धे कथं पितृपदप्रयोगः।

अर्वाक् संवत्सरात्वृद्धौ पूर्णे संवत्सरेऽपि वा।
ये सपिण्डीकृता प्रेता न तेषान्तु पृथक्क्रिया॥
प्रेतत्वाच्चेह निस्तीर्णाः प्राप्ताः पितृगणन्तु ते।

इति शातातपवचनाच्च प्रेतत्वपरिहारपूर्व्वक-पितृत्वप्राप्तिर्जातत्वात् सर्व्वं कर्म्म कर्त्तव्यमेव। अन्यथा त्वपकर्षे*—

अर्वाक् संवत्सराद्यस्य सपिण्डीकरणम्भवेत्।
प्रेतत्वमिह तस्यापि ज्ञेयं संवत्सरं नृप॥

इत्यग्निपुराणवचनात् संवत्सरपर्य्यन्तं प्रेतीभावसत्त्वेन तत्पर्य्यन्तमेव काम्यनैमित्तिकदेवार्च्चनादि नाचरेत्। तत्र हेतुमाह महागुरु-निपाते त्विति यतो महागुरुनिपाते महागुरोः प्रेतीभावे सत्त्वे यत्किञ्चिद्दैवं पैत्रंवा काम्यं कर्म्म वा नाचरेदिति। अतएव महागुरोः प्रेतीभावनिबन्धनमेव कर्म्मानर्हत्वं न मरणनिबन्धनं तस्य चैका-दशाहे निवृत्तेः ततश्चाशौचलक्षणाव्याप्त्या तदन्नभक्षण-तत्प्रति-ग्रहादौ तद्दानादिक्रियायाञ्च दोषाभावः, एवञ्च महागुरुनिपाति-गोचरतया कालविशेष एव दूष्यति न तु महागुरुनिपात इति यच्च—

---

* पुस्तके -उत्कर्षे।

प्रमीतौ पितरौ यस्य देहस्तस्याशुचिर्भवेत् ।
नापि दैवं न वा पैत्र्यं यावत् पूर्णो न वत्सरः ॥

इति स्मृतिसागरे लिखितं देवीपुराणवचनं तद्देहस्याशुचित्वकथन-निन्दार्थानुवादेन काम्यानां देवपैत्र्यकर्म्मणां वर्जनस्यावश्यभाव-प्रतिपादकमेव न तु वस्तुतस्तु तद्देहोऽशुचिरिति ध्येयम् ।

तथाप्यागन्तुकनिमित्तोपनिपातविहितमपाटवादिनिमित्तकं शान्त्यादिकं काम्यमपि कर्त्तव्यम् ।

यथा दक्षः—

नैमित्तिकानि काम्यानि निपतन्ति यथा यथा ।
तथा तथैव कार्य्याणि न कालस्तु विधीयते ॥

वामनपुराणे—

नित्यस्य कर्म्मणो हानिः केवलं मृत्युजन्मनोः ।
न तु नैमित्तिकोच्छेदः कर्त्तव्यो हि कथञ्चन ॥

एवमुपरागनिमित्तकस्नानदानश्राद्धादिकमपि मातृमरणे कर्त्तव्यं तुल्यन्यायात् पितृमरणे तु उपरागनिमित्तकं श्राद्धं न कार्य्यम् ।

सपिण्डीकरणादूर्द्ध्वं प्रेतः पार्व्वणभुग्भवेत् ।
ततः प्रभृति संक्रान्तावुपरागादिपर्व्वसु ॥
त्रिपिण्डमाचरेच्छ्राद्धमेकोद्दिष्टं मृताहनि ॥

इति मत्स्यपुराणे पितृसपिण्डनानन्तरमेव उपरागश्राद्धविधानात् । नित्यन्तु प्रतिदिनकर्त्तव्यं सन्ध्या-सायम्प्रातर्होमेष्टदेवपूजादिकं कार्त्तव्यमेव काम्यानामिव देवपैत्र्याणां कर्म्मणां प्रतिषेधात् । तर्हि पञ्चमहायज्ञादीनामनुष्ठानप्रसङ्ग इत्याह पारिजातमिति—

आर्त्विज्यं याजनं ब्रह्मयज्ञमिति पञ्चमहायज्ञोपलक्षणं तेन स्वधातर्पणबलिवैश्वदेवातिथिपूजननित्यश्राद्धानि न कार्य्याणि प्रेततर्पणमात्रन्तु कर्त्तव्यमेव। श्राद्धं देवयुक्तमिति मृताहविहितेतरं विश्वदेवसमन्वितं पार्व्वणश्राद्धमित्यर्थः।

तेन संवत्सरमध्येऽपि पितृमरणे मातुः सांवत्सरिकं मातृमरणे पितुः सांवत्सरिकं पितामहादीनाञ्चावश्यं सांवत्सरिकं सर्व्वाणि च प्रेतकर्म्माणि कार्य्याणि काम्यन्तु सांवत्सरिकं वर्ज्जयेदेव काम्यं किञ्चिन्न चाचरेदिति पूर्व्ववचनात्।

अतएव—

ततः प्रभृति संक्रान्तावुपरागादिपर्व्वसु।
त्रिपिण्डमाचरेच्छ्राद्धमेकोद्दिष्टं मृताहनि॥
इति मत्स्यपुराणे ततः प्रभृतीत्यनेन सपिण्डीकरणात्
पूर्व्वं पार्व्वणनिषेध उक्तः।

तथा हारीतः—

ततः प्रभृति वै प्रेतः पितृसामान्यमाप्नुयात्।
विन्दते पितृलोकञ्च ततः श्राद्धं प्रवर्त्तते॥

तत्र चामावस्यादिमरणनिमित्तेन पार्व्वणविधिनानुष्ठीयमानस्य सांवत्सरिकस्य निषेधप्राप्तौ प्रतिप्रसवमाह बृहस्पतिः—

पितर्य्युपरते पुत्रो मातृश्राद्धान्निवर्त्तते।
मातर्य्यपि च वृत्तायां पितृश्राद्धादृते समाः॥

मातृश्राद्धादृते पार्वणश्राद्धान्तरात् संवत्सरं व्याप्य निवर्त्तते इत्यर्थः।

अत्र संवत्सरमध्ये

व्रीहिपाके च कर्त्तव्यं यवपाके तथैव च ।
न तावाद्यौ महाराज विना श्राद्धं कथञ्चन ॥

इति विष्णुधर्म्मोत्तरविहितस्य पार्व्वणश्राद्धस्याभावात् । नवान्नभक्षणनिषेधेऽपि पुरातनधान्यालाभे पुनरनन्यगत्या नवान्नेन प्रेतश्राद्धं विधाय नवान्नं भोक्तव्यमिति प्राञ्चः ।

लघुहारीतः—

भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा ।
सहपिण्डक्रियां कृत्वा कुर्य्यादभ्युदयं ततः ।
तथैव काम्यं यत्कर्म्म वत्सरात् प्रथमादृते ॥

सपिण्डीकरणानन्तरमेव विवाहोपनयनाद्यभ्युदयं कुर्य्यान्न तु पूर्व्वं तथैव वत्सरात् प्रथमादृते प्रथमाब्दाद्बहिरेव काम्यमभ्युदयं कुर्य्यान्न तु तदर्थमपकर्षः कार्य्यः । [तेन सपिण्डनात् पूर्व्वं काम्यं नास्तीति] ।

मत्स्यपुराणे—

सपिण्डीकरणादूर्द्धं प्रेतः पार्व्वणभुग्भवेत् ।
वृद्धीष्टापूर्त्तयोग्यश्च गृहस्थश्च ततो भवेत् ॥

अत्रापि ततो भवेदित्यनेन सपिण्डीकरणात् पूर्व्वं वृद्ध्यादिकं न कार्य्यमित्यायातं वृद्धिर्नामकरणचूड़ाकरणोपनयनादि वृद्धियोग्यता तु संस्कार्य्यत्वेन संस्कारकत्वेन चेत्यर्थः । इष्टं यागदानादि पूर्त्तं वापीकूपतड़ागसेत्वारमदेवगृहदानादि । गृहस्थश्चेति गृह-

[ ] ख पुस्तके—चिह्नितांशोऽधिकः ।

स्वधर्म्मः पञ्चमहायज्ञ-भोजनद्वय-मैथुनादिः, तदपि सपिण्डनात् परमेव न तु पूर्व्वमित्यर्थः। सत्यपि गार्हस्थ्ये वचनात् तत्कर्म्मप्रतिषेधः। अन्यथा गृहस्थस्य ततो भवेदित्यनर्थकं स्यात्।

अतएव संवत्सरमध्ये दुर्गोत्सव-रोहिण्यष्टमीव्रतादिकं न कार्य्यं गृहस्थधर्म्मत्वात् "देवतोद्देशेन द्रव्यत्यागो यागः" इति यागलक्षणव्यापकत्वेन*मातृयागग्रचोयाग इत्यादिप्रयोगदर्शनेन देवतार्चनस्य यागत्वादिष्टापूर्त्तमध्येऽभिनिवेशाच्च। अतएव स्रक्चन्दनाद्युपभोगमपि न कुर्व्वन्ति गृहस्थविहितत्वात्।

एतच्च तत्कालपितृत्वप्रापकसपिण्डनानन्तरं बोद्धव्यं तच्च वृद्धिसन्निधाने संवत्सरान्ते च क्रियमाणमिति। अपकर्षे तु सपिण्डनापकर्षे संवत्सरपर्य्यन्तं प्रेतोभावसत्त्वात् तत्पर्य्यन्तमेव कर्म्मानधिकारितेति प्रागवस्थितम्†।

महागुरौ प्रेतीभूते वृद्धिकर्म्म न युज्यते।

इति वचनम्।

अत्र केचित्—

अर्वाक् संवत्सराद्यस्य सपिण्डीकरणम्भवेत्।

प्रेतत्वमिह तस्यापि ज्ञेयं संवत्सरं नृप ॥

इत्यग्निपुराणवचनादग्रत्यापकर्षे कृतेऽपि पितुः प्रेतीभावसत्त्वे दैवादवश्यानुष्ठेयवृद्ध्युपस्थितौ पुनर्वृद्ध्यर्थमपकर्षं कृत्वा वृद्धिः कार्य्येत्याहुः। तन्न

* ख पुस्तके व्यापनेन।

† ख पुस्तके - प्रागेव विवृतम्।

पुनरपकर्षविधानाभावात् अपकृष्य कृतत्वेन स्वकालप्राप्तत्वा-भावात् पुनरपकर्षासम्भवाच्च। स्वकालव्याप्तस्य हि पूर्व्वकाल-करणमपकर्षः किन्तु "स एवापकृष्टः पितृत्वप्रापककालं प्राप्य प्रेतत्वपरिहारं पितृत्वञ्च जनयति।

स च संवत्सरान्तो वृद्धिसन्निहितकालश्च उभयोरेव कालयोः पितृत्वप्राप्तिविधानात्।

यच्च—श्रेयं संवत्सरं नृप—इत्यग्निपुराणवचने संवत्सरपदं तत्पितृत्वप्रापककालपूर्व्वकालपरमिति ध्येयम्।

ततश्चाप्राप्तकृतापकर्षेणेव संवत्सरान्तमिव अवश्यानुष्ठेयवृद्धि-सन्निहितकालमासाद्य पितुः पितृत्वप्राप्तिजननात् वृद्धिं कृत्वा तत्परं काम्यनैमित्तिकानि सर्व्वाण्येव कर्म्माण्यनुष्ठेयानि।

अत्र च वृद्धिनिश्चयं ज्ञात्वा कृतेऽपकर्षे दैवात् वृद्ध्यसिद्धावपि पुनः सपिण्डनं न कार्य्यं वृद्धिनिश्चयमेव निमित्तमादाय कृतेऽपकर्षे तत्-क्षणादेव पितृत्वप्राप्तेर्जातत्वेन पुनः सपिण्डनवैयर्थ्यादिति केचित्।

वस्तुतस्तु यद्यपि वृद्धिनिश्चयो निमित्तं तथापि—

यत्नाभे विपन्ने वा यदस्य वृद्धिरापद्येत तदहस्तत्वार्य्युदकपात्राणि।

इति गोभिलेन वृद्धयव्यवहित [पूर्व्वदिनस्याधिकरणत्वप्रतिपाद-नात् वृद्ध्यभावे च तद्दिनस्य वृद्ध्यव्यवहित] पूर्व्वत्वाभावादविहित-काले कृतस्य कर्म्मणोऽकृतकल्पनया फलाजनकत्वनियमात् पुनः सपिण्डनं कार्य्यमेव।

---

ख पुस्तके—[ ] चिह्नितांशः पतितः।

विशेषः कूर्म्मपुराणे—

विदेशगमनञ्चैव तीर्थयात्राञ्च मैथुनम्।

महागुरुनिपाते तु न कुर्य्याद्देवदर्शनम्।

विदेशगमनं म्लेच्छदेशगमनं देवदर्शनं प्रथमदेवदर्शनमित्यर्थः।

अत्र केचित् गयातीर्थयात्रा कार्य्या तत्र प्रेतशिलायां पिण्डदाने प्रेतत्वविमुक्तिश्रवणादित्याहुः। तन्न

पूर्व्वकृततीर्थयात्रस्य (यात्रामात्रस्य) तत्रस्थितस्य वा वत्सराभ्यन्तरे पिण्डदानेन तदुपपत्तेः। वत्सराभ्यन्तरे पार्व्वणनिषेधात् तीर्थ-यात्राश्राद्ध-गयाश्राद्धयोरनुपपत्तेः शिष्टाचारविरोधाच्च इत्यलं बहुना।

रक्तपातादिना तद्दिवसानुष्ठेयकर्म्मणां निषेधमाह।

कालिकापुराणे—

अशुचिर्न्न महामायां पूजयेत्तु कदाचन।

अवशस्तु अरेन्मन्त्रं योऽतिभक्तियुतो नरः॥

दन्तरक्ते समुत्पन्ने स्मरणञ्च न विद्यते।

*सर्व्वेषामेव मन्त्राणां स्मरणान्नरकं व्रजेत्॥

जानूर्द्ध्वं क्षतजे जाते नित्यकर्म्माण्यपि त्यजेत्।

नैमित्तिकञ्च तदधः स्रवद्रक्तो न चाचरेत्॥

आतङ्के च समुत्पन्ने क्षुरकर्म्मणि मैथुने।

धूमोद्गारे तथा वान्ते नित्यकर्म्माणि संत्यजेत्॥

* पुस्तके सर्व्वेषामिति श्लोकांशो नास्ति।

दुष्टे भुक्तेऽभ्यतीते च नैव भुक्तापि किञ्चन ।
कर्म्म कुर्य्यान्नरो नित्यं सूतके मृतके तथा ॥
पत्रं पुष्पञ्च ताम्बूलं भेषजत्वेन कल्पितम् ।
कणादि पिप्पल्यन्तञ्च फलं भुक्ता न चाचरेत् ॥
जलस्यापि नरश्रेष्ठ भोजने भेषजादृते ।
नित्यक्रिया निवर्त्तेत काम्यनैमित्तिकैः सह ॥
जलौकां गूढ़पादञ्च क्रमिगण्डूपदादिकम् ।
कामाद्यस्तेन संस्पृश्य नित्यकर्म्माणि संत्यजेत् ॥
विशेषतः शिवापूजां प्रमीतपितृको नरः ।
यावद्वत्सरपर्य्यन्तं मनसापि न चाचरेत् ॥
महागुरुनिपाते तु काम्यं किञ्चिन्न चाचरेत् ।
आर्त्विज्यं ब्रह्मयज्ञञ्च श्राद्धं देवयुतञ्च यत् ।
गुदमाश्रित्य विप्रश्च प्रक्षाल्यैव च पाणिना ।
न कुर्य्यान्नित्यकर्म्माणि रेतःपाते च भैरव ॥

एषामर्थः-अशुचिः-रक्तपातादिना अशुद्धः, महामायामिति सर्व्व-देवोपलक्षणम्, अवश्यं स्मरेत् जपेदित्यर्थः, एतदप्युपलक्षणं मानसपूजापि कर्त्तव्या ।

यथा तत्रैव कालिकापुराणे—

प्रवासे पथि वा दुर्गे ग्रामाप्राप्तौ जलेऽपि वा ।
कारागारे निबद्धो वा प्रायोवेशगतोऽपि वा ।
अशुचि र्वा महामायापूजां कुर्य्यात्तु मानसीम् ॥

दन्तरक्तपाते तु स्मरणं मन्त्रजपो मानसपूजा च न विद्यते इत्यर्थः। जानूर्द्ध्वं क्षतजे जाते रक्तपाते सति न केवलं नैमित्तिकं नित्यकर्म्मापि नाचरेदित्यर्थः। तदधो जान्वधो रक्तपाते तु नैमित्तिकमेव न कुर्य्यान्नित्यन्तु कुर्य्यादेवेत्यर्थश्चकारस्यार्थे। अत्र स्रवदिति वर्त्तमानकालो न विवक्षितः क्षतजे जात इति पूर्व्वमतीतनिर्देशात्।

नाभेरूर्द्ध्वमधो वापि यस्य क्षरति शोणितम्।

अशुचिस्तदहः कर्म्म कुर्व्वन्नरकमाप्नुयात्॥

इति वचने तदहरिति वैयर्थ्यापत्तेश्च।

आददीत मृदोऽपश्च षट्सु पूर्व्वेषु शुद्धये।

इति बौधायनेन वसाशोणितादिपाते मृज्जलशोधनाचमनात् पूर्व्वं मूत्रपुरीषोत्सर्गकालवदशुद्धिविधानात् पूयशोणितपातदशायां कर्म्मनिषेधे प्राप्ते निषेधस्यास्य वैयर्थ्याच्च। अतएव मनुना 'रुधिरे च स्रुते गात्रादित्यनेन रक्तपातानन्तरमेवाध्ययनं निषिद्धम्। सन्ध्या तु रक्तपातेऽपि कार्य्या।

विष्णुपुराणे—

सर्व्वकालमुपस्थानं सन्ध्ययोः पार्थिवेष्यते।

अन्यत्र सूतकाशौचविभ्रमातुरभीतितः॥

इति सूतकादिनिमित्तपञ्चकादन्यस्थले सर्व्वकालं सन्ध्याविधानात्।

सूतकं जननाशौचमशौचं मरणाशौचं विभ्रमो मोहः, आतुरं रोगो भीतिः-राजव्याघ्रादिभयमित्यर्थः।

न च सूतकं जननमरणाशौचमशौचं रक्तपाताद्यशुद्धिरिति वाच्यम्।

अशौचपदस्य जननमरणाशुद्ध्योर्योगरूढ़त्वात् अशुद्धिमात्रा-र्थत्वे सूतकपदवैयर्थ्याच्च ।

न चास्मन्मतेऽपि सूतकाशौचपदयोरेकं व्यर्थमिति वाच्यं परस्परसाचिव्ये उभयोः प्रत्येकपरत्वदर्शनात् ।

यथा मनुः—

बालस्त्वन्तर्दशाहे तु प्रेतत्वं यदि गच्छति ।
सद्य एव विशुद्धिः स्यान्नाशौचं नैव सूतकम् ।

दक्षः—हूयमाने तथाग्नौ च नाशौचं नैव सूतकम्* ।

तथा—

सूतके मृतके तथेति कालिकापुराणम् ।

अतएव हरिवंशे वज्रनाभवधे—

असुराश्च रणे मत्ताः कार्ष्णिं प्रत्यैरितस्ततः ।
जघ्नुः कमलपत्राक्षं परं नियममास्थिताः ॥

इत्युपक्रम्य—

†यावद्धै योधयामास कार्ष्णिर्दैत्यान् रणाजिरे ।
सन्ध्योपास्ता जयन्तेन तावद्विष्णुपदीजले ॥
अयोधयज्जयन्तश्च यावद्दैत्यान् महाबलः ।
तावदाकाशगङ्गायां कार्ष्णिः सन्ध्यामुपास्तवान् ॥

इत्यनेन मृतानन्तरं प्रद्युम्नस्य सन्ध्याचरणवर्णनं सङ्गच्छत इति ।

---

* ख पुस्तके—श्लोकांशः पतितः ।
† ग पुस्तके यावद्वै ।

तथा महाभारते शल्यपर्व्वणि सप्ततानामश्वत्थामादीनाम् सन्ध्योपासनं दृश्यते*।

यथा—विनिर्भिन्नाः शितैर्बाणैर्गत्वा तोमरशक्तिभिः।
अश्वत्थामा कृपश्चैव कृतवर्म्मा च शात्वतः॥
सूर्य्यास्तमनवेलायां समासेदुर्महावनम्।
अवतीर्य्य रथेभ्यश्च विप्रमुच्य च वाजिनः॥
उपस्पृश्य यथान्यायं सन्ध्यामन्वासत प्रभो।

किन्तु दन्तरक्तपाते सन्ध्यापि न कार्य्या—
सर्व्वेषामेव मन्त्राणां स्मरणान्नरकं व्रजेत्।
इति गायत्रीजपनिषेधादिति शिष्टाचारोऽपीहश एव॥

यत्तु—नित्यं कर्म्म न कुर्व्वीत नाभेरुर्द्धं गलद्व्रणः।
दैवं तथापि कुर्व्वीत यदि हस्तोऽव्रणो भवेत्॥

इति वचनं तदमूलं समूलत्वे च वसा-पूयपातविषयं मन्तव्यम्।

लोतके च समुत्पन्ने इति लोतमश्रु।

तथा भूरिप्रयोगकोषे—
पोतः शिशौ वहित्रे च लोतमश्रुणि चोदितम्। इति।
तस्मिन्नुत्पन्ने रोदनेनाश्रुपातं कृत्वेत्यर्थः। मैथुने तद्दिवसीय-मैथुने सतीत्यर्थः।

शातातपः—अजीर्णेऽभ्युदिते वान्ते श्मश्रुकर्म्मणि मैथुने।
दुःस्वप्ने दुर्जनस्पर्शे स्नानमात्रं विधीयते॥

---

* ख पुस्तके—महाभारतीयप्रमाणानि नोद्धृतानि।

अत्र तद्दिवसीयशयने दुःस्वप्नदर्शन इत्यर्थः, दुर्जनस्पर्शचाण्डालादि-रतिनीचः, अत्र विधानबलादेव स्नानस्यैव शुद्धिहेतुत्वप्राप्तौ मात्रग्रहणं नित्यकर्म्मनिषेधार्थम्। धूमोद्गारे इति अजीर्णोद्गारे भूते सतीत्यर्थः, वान्ते पित्तादिविकारे चोत्थिते इत्यर्थः—भुक्तोऽभ्युत्थिते चेति वक्ष्यमाणवचनात्।

भुक्तेऽन्नादौ दुष्टे परिपाकमप्राप्य विकारं कुर्व्वति सतीत्यर्थः। अतएव 'सुजीर्णेऽन्ने निरामयः' इति व्यासः। अभ्यतीते भुक्ते ऽभ्युत्थिते चेत्यर्थः। किञ्चन नित्यं नैमित्तिकं काम्यञ्च न कुर्य्या-दित्यर्थः। सूतके जननाशौचे मृतके मरणाशौचे इत्यर्थः।

अथापवादमाह दक्षः—

यज्ञे प्रवर्त्तमाने तु जायते म्रियतेऽथवा।
पूर्व्वसङ्कल्पितार्थेषु न दोषस्तत्र विद्यते।
वर्त्तमाने विवाहे च देवयागे तथैव च।
हूयमाने तथाग्नौ च नाशौचं नैव सूतकम्॥

*[एवमशौचेऽपि सन्ध्याख्याने सूर्य्याञ्जलित्रयं देयम्।

तथा मिताक्षराधृतपैठीनसिः—

सूतकेऽपि सावित्र्या चाञ्जलिं प्रक्षिप्य सूर्य्यं ध्यायन् नमस्कुर्य्यादिति।]

तथा पत्रादिकं भुक्त्वा भेषजत्वेन कल्पितं कषादि चूर्णादिकमपि भुक्त्वेत्यर्थः।

---

* ग पुस्तके—[ ] चिह्नितांशः पतितः।

तथाच पठन्ति—

ताम्बूलं वा फलं वापि यः प्रातर्भक्षयेन्नरः।

स पापिष्ठः कथं ब्रूते पूजयामि जनार्द्दनम्॥

भेषजादृते औषधार्थं विना जलस्यापि भोजने कृते सति काम्यनैमित्तिककर्म्मभिः सह नित्यक्रिया निवर्त्तेत। औषधार्थन्तु जलमात्रपाने कर्म्म कर्त्तव्यमेवेत्यर्थः। गूढ़पादो भुजङ्गः, गण्डुपदः किञ्चुलुकः, आदिशब्दात् भेकादिः। अकामतः स्पर्शे तु कर्म्म कर्त्तव्यमेवेत्यर्थः। विशेषत इत्यादिवचनद्वयं पूर्व्वमेव व्याख्यातम्। पाणिनेति स्वयं प्रहारोपलक्षणम्। रेतःपाते स्त्रीदर्शनादिना स्वयं पतिते सतीत्यर्थः। मैथुने तु पूर्व्वमेवोक्तमिति।

यत्तु—आददीत मृदोऽपश्च षट्सु पूर्व्वेषु शुद्धये।

इति बौधायनेन शोणितवशादिपाते मृज्जलग्रहणाचमनात् परमेव शुद्धिविधानं तत् पुरुषनिष्ठमेव। अनेन तु वचनेन तद्दिनगोचरामशुद्धिं विधाय तत्परकालनिष्ठा शुद्धिर्विधीयत इति न विवादः। एवञ्च यत्र यत्र पुरुषनिष्ठं शुद्धान्तरमस्ति तत्र तत्रैवानेन वचनेन *कालनिष्ठाशुद्धिर्विधीयते इति।

यथा जावालः—

अस्पृश्यस्पर्शने वान्ते अश्रुपाते भगे क्षुरे।

स्नानं शुद्धार्थकं प्रोक्तं दैवपैत्रविवर्ज्जितम्॥ इति।

रक्तपात-मैथुन-क्षुरकर्म्मसु तद्दिनरूपकालनिष्ठैवाशुद्धिः। अन्येषु

* क पुस्तके—कालपरं नास्ति।

अत्र तद्दिवसीयशयने दुःस्वप्नदर्शन इत्यर्थः, दुर्जनस्पर्शकाकादि-रतिनीचः, अत्र विधानबलादेव स्नानस्यैव शुद्धिहेतुत्वप्राप्तौ मात्रग्रहणं नित्यकर्म्मनिषेधार्थम्। धूमोद्गारे इति अजीर्णोद्गारे भूते सतीत्यर्थः, वान्ते पित्तादिविकारे चोत्थिते इत्यर्थः—भुक्तेऽभ्युत्थिते चेति वक्ष्यमाणवचनात्।

भुक्तेऽन्नादौ दुष्टे परिपाकमप्राप्य विकारं कुर्व्वति सतीत्यर्थः। अतएव 'सुजीर्णेऽन्ने निरामयः' इति व्यासः। अभ्यतीते भुक्ते ऽभ्युत्थिते चेत्यर्थः। किञ्चन नित्यं नैमित्तिकं काम्यञ्च न कुर्य्या-दित्यर्थः। सूतके जननाशौचे मृतके मरणाशौचे इत्यर्थः।

अत्रापवादमाह दक्षः—

यज्ञे प्रवर्त्तमाने तु जायते म्रियतेऽथवा।
पूर्व्वसङ्कल्पितार्थेषु न दोषस्तत्र विद्यते।
वर्त्तमाने विवाहे च देवयागे तथैव च।
हूयमाने तथाग्नौ च नाशौचं नैव सूतकम्॥

*[एवमशौचेऽपि सन्ध्याख्याने सूर्य्याञ्जलित्रयं देयम्।
तथा मिताक्षराधृतपैठीनसिः—

सूतकेऽपि सावित्र्या चाञ्जलिं प्रक्षिप्य सूर्य्यं ध्यायन् नमस्कुर्य्यादिति।]

तथा पत्रादिकं भुक्त्वा भेषजत्वेन कल्पितं कषादि चूर्णादिकमपि भुक्त्वेत्यर्थः।

---

* न पुस्तके—[ ] चिह्नितांशः पतितः।

तथाच पठन्ति—

ताम्बूलं वा फलं वापि यः प्रातर्भक्षयेन्नरः।

स पापिष्ठः कथं ब्रूते पूजयामि जनार्द्दनम्॥

भेषजादृते औषधार्थं विना जलस्यापि भोजने कृते सति काम्यनैमित्तिककर्म्मभिः सह नित्यक्रिया निवर्त्तेत। औषधार्थन्तु जलमात्रपाने कर्म्म कर्त्तव्यमेवेत्यर्थः। गूढ़पादो भुजङ्गः, गण्डुपदः किञ्चुलुकः, आदिशब्दात् भेकादिः। अकामतः स्पर्शे तु कर्म्म कर्त्तव्यमेवेत्यर्थः। विशेषत इत्यादिवचनद्वयं पूर्व्वमेव व्याख्यातम्। पाणिनेति स्वयं प्रहारोपलक्षणम्। रेतःपाते स्त्रीदर्शनादिना स्वयं पतिते सतीत्यर्थः। मैथुने तु पूर्व्वमेवोक्तमिति।

यत्तु—आददीत मृदोऽपश्च षट्सु पूर्व्वेषु शुद्धये।

इति बौधायनेन शोणितवशादिपाते मृज्जलग्रहणाचमनात् परमेव शुद्धिविधानं तत् पुरुषनिष्ठमेव। अनेन तु वचनेन तद्दिनगोचरामशुद्धिं विधाय तत्परकालनिष्ठा शुद्धिर्विधीयत इति न विवादः। एवञ्च यत्र यत्र पुरुषनिष्ठं शुद्ध्यन्तरमस्ति तत्र तत्रैवानेन वचनेन *कालनिष्ठाशुद्धिर्विधीयत इति।

यथा जावालः—

अस्पृश्यस्पर्शने वान्ते अश्रुपाते भगे क्षुरे।

स्नानं शुद्ध्यर्थकं प्रोक्तं दैवपैत्रविवर्ज्जितम्॥ इति।

रक्तपात-मैथुन-क्षुरकर्म्मसु तद्दिनरूपकालनिष्ठैवाशुद्धिः। अन्येषु

* क पुस्तके—कालपरं नास्ति।

तु सूतकमृतकादिषु पुरुषनिष्ठैवानेन वचनेन विधीयते इति सङ्कलितार्थः।

रात्रौ कर्म्मनिषेधमाह यमः,—

स्नानं दानं तपःश्राद्धमनन्तं राहुदर्शने।
आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्ज्जयेत्॥

अन्यत्र राहुदर्शनातिरिक्तस्थले आसुरी तत्कृतकर्म्मणामासुरहरणेन फलाजनिकेति निन्दा तस्मात्तां रात्रिं काम्यनित्यनैमित्तिकस्नानदानादिसर्व्वकर्म्मसु वर्ज्जयेत्।

मत्स्यपुराणे,—

प्रातःकालो मुहूर्त्तांस्त्रीन् सङ्गवस्तावदेव तु।
मध्याह्नस्त्रिमुहूर्त्तःस्यादपराह्णस्ततःपरम्॥
सायाह्नस्त्रिमुहूर्त्तःस्यात्तत्र श्राद्धं न कारयेत्।
राक्षसी नाम सा वेला गर्हिता सर्व्वकर्म्मसु॥
अह्नो मुहूर्त्ता विज्ञेया* दशपञ्च च सर्व्वदा।

सायाह्नवेला नित्यनैमित्तिककाम्यस्नानदानव्रतादिसर्व्वकर्म्मसु गर्हिता निन्दितेत्यर्थः।

मनुः—

रात्रौ श्राद्धं न कुर्व्वीत राक्षसी कीर्त्तिता हि सा।
सन्ध्ययोरुभयोश्चैव सूर्य्ये चैवाचिरोदिते॥

अचिरोदिते सूर्य्ये प्रथममुहूर्त्ते श्राद्धमेव न कुर्य्यात् स्नानदानव्रता-

---

* ग पुस्तके—विख्याता।

दौनि तु कर्त्तव्यानि 'पूर्व्वाह्णो वै देवानामिति श्रुत्या स्नानदान-व्रतादीनां देवकर्म्मणां तत्र विधानात् ।

मैवं प्रसाधनं स्नानं दन्तधावनमञ्जनम् ।

पूर्व्वाह्ण एव कुर्व्वीत देवतानाञ्च पूजनम् ॥

इति दक्षवचनाच्च श्राद्धमधिकृत्य मनुना पर्य्युदासाच्च ।

न चायं निषेधविधिः शास्त्रप्राप्तस्य निषेद्धुमशक्यत्वादंशतो विधिबाधात् ।

न वांशतो विकल्पोऽस्तु तुल्यबलविरोधाभावात् किन्तु पर्य्युदास एवायं विधेरेव तात्पर्य्यग्राहकः । अतो रात्र्यादिनिषिद्धेतरकाले श्राद्धादिकं कुर्य्यादिति विधिः सिद्धः पूर्व्वापराह्णादिविशेषविधिस्तु प्राशस्त्य-पर एवान्यथा अप्राप्तत्वेन पर्य्युदासस्य निषेधस्य वाऽसम्भवात् ।

रात्र्यादिषु प्रतिप्रसवमाह देवलः—

राहुदर्शन-संक्रान्ति-विवाहात्ययवृद्धिषु ।

स्नानादानादिकं कुर्य्युर्निशि काम्यव्रतेषु च ॥

निशीति सायाह्नरात्रिसन्ध्योपलक्षणं राहुदर्शने चन्द्रसूर्य्योपरागे तत्र विहितश्राद्धस्नानदानादि । संक्रान्तौ रविसंक्रान्तिविहित स्नानदानव्रतादिकं विवाहे विवाहनिमित्तकमभ्युदयश्राद्धं स्नान कन्यासम्प्रदानादिकर्म्म च । अत्यये मरणे तन्निमित्तकपूरक-पिण्डदान-स्नान-प्रेततर्पणादिकर्म्म । वृद्धौ पुत्रजन्मनि तन्निमित्त-काभ्युदयश्राद्धं तद्दिनविहितदानादि च काम्यव्रतेषु च रात्रि सन्ध्यादिविहितव्रतेषु शिवरात्रिरोहिण्यष्टमीचन्द्रभागादिषु च तत्र विहितस्नानदानदेवार्च्चनादिकं कार्य्यं नात्युत्वेति ।

विष्णुः—

सन्ध्यारात्र्योर्न कर्त्तव्यं श्राद्धं खलु विचक्षणैः।

तयोरपि च कर्त्तव्यं यदि स्याद्राहुदर्शनम्॥

*[गयाश्राद्धमपि रात्र्यादिनिषिद्धसमयेऽपि कार्य्यम्।

गरुड़पुराणे—

दिवा च सर्व्वदा रात्रौ गयायां श्राद्धकृद्भवेत्।

दिवा सर्व्वदा सायाह्नादिनिषिद्धकालेऽपीत्यर्थः॥]

अहरहःक्रियमाण-स्नानदेवार्चनादिकन्तु दैवादशक्त्या यदि कर्त्तुं न शक्यते तदा रात्रिसन्ध्ययोरपि कर्त्तव्यमित्याह—

बृहन्नारदीये—

नित्योदितानि कर्म्माणि स्वकाले न कृतानि चेत्।

शर्व्वर्य्याः प्रथमे यामे तानि कुर्य्यादतन्द्रितः॥

शर्व्वर्य्याः प्रथमप्रहरपर्य्यन्तमेव कार्य्यम्। ततःपरन्तु कर्म्मलोप एव यदि पुनः अशक्त्याप्यालस्येन स्वकाले न क्रियते तदा स्वकालाकरणान्नित्यकर्म्माकरणजन्यप्रत्यवायो जायत एवेति ध्येयम्।

शुद्धिस्नाने प्रतिप्रसवमाह यमः—

चण्डालश्वपचैः स्पृष्टे निशि स्नानं विधीयते।

न वसेत्तत्र रात्रौ च सद्यः स्नानेन शुध्यति॥

श्वपचश्चाण्डालभेदः एतच्चास्पृश्यस्पर्शोपलक्षणम्। यतः सद्यःस्नानेनैव शुध्यति न तु परदिने स्नानेन, अतो रात्रावपि स्नातव्य-

* ख पुस्तके [ ] चिह्नितांशः पतितः।

मित्यर्थः। गयास्नाने तु रात्र्यादिनिषेधो नास्ति यथादिपर्व्वणि रात्रौ जलप्रवेशनिषेधं कुर्व्वन्तं गन्धर्वं प्रति गङ्गां प्रविशतोऽर्ज्जुनस्योक्तिः। अर्ज्जुन उवाच—

समुद्रे हिमवत्पार्श्वे नद्यामस्याश्च दुर्म्मते।
रात्रावहनि सन्ध्यायां कस्य गुप्तः परिग्रहः॥
असम्बाधा देवनदी स्वर्गसम्पादनी शुभा।
कथमिच्छसि तां रोद्धुं नैष धर्म्मः सनातनः॥
अनिवार्य्यमसम्बाधं तव वाचा कथं वयम्।
न स्पृशाम यथाकामं पुण्यं भागीरथीजलम्॥

दुर्म्मते शास्त्रानभिज्ञ परिग्रहः स्वीकारः कस्य गुप्तो नियत इत्यर्थः। पुण्यमिति अतिपावनतया रात्र्यादिदोषो नास्तीत्यर्थः।
तथा च ब्रह्माण्डे—

रात्रौ दिवा च सन्ध्यायां गङ्गायान्तु प्रसङ्गतः।
स्नात्वाश्वमेधजं पुण्यं गृहेऽप्युद्धृततज्जलैः॥

प्रसङ्गतो हेलयापीत्यर्थः। भविष्ये—

न मन्त्रो न विधिश्चैव न मृदो न च गोमयम्।
न कालनियमश्चापि गङ्गां प्राप्य सरिद्वराम्॥

ज्योतिषे शुद्धिदीपिकायाम्—

सर्व्वकर्म्मस्वुपादेया विशुद्धिश्चन्द्रतारयोः।
तच्छुद्धावेव सर्व्वेषां ग्रहाणां फलदातृता॥

चन्द्रतारयोरिति-चन्द्रस्य मेषमादिराशिविशेषगतचन्द्रक्रियावच्छिन्नकालस्य तारायाः अश्विन्यादिनक्षत्रविशेषगतचन्द्रक्रियावच्छिन्न-

कालस्य च विशुद्धिः कर्म्मार्हेता सर्व्वकर्म्मणि काम्यनैमित्तिकशुभ-कर्म्मारम्भे उपादेया इत्यर्थः। एवं सर्व्वमेव वक्ष्यमाणरवि-शुद्ध्याद्यवगन्तव्यं हेतुमाह तच्छुद्धाविति।

राजमार्त्तण्डे—

*चन्द्रबलेन विहीनो न मनः(परि)तोषदः क्रियारम्भः।
अन्यगुणैरपि युक्तो जरीव रमणो वरस्त्रीणाम्॥

तथा—करकचा मृत्युयोगाश्च दिनं दग्धं तथापरे।
शुभे चन्द्रे क्षयं यान्ति वृक्षा वज्रहता इव॥
तारास्तत्र न गण्यन्ते यत्र चन्द्रो बलोत्तरः।
स्वामिना परितुष्टेन भृत्यक्रोधो निरर्थकः॥
कृष्णे बलवती तारा शुक्ले चन्द्रो बलोत्तरः।
तस्मात् कार्य्यं प्रयत्नेन विशुद्धे चन्द्रतारयोः॥
ताराबलेन कर्त्तव्यं चन्द्रमा यदि दुर्ब्बलः।
दुर्ब्बलो नहि शक्तः स्यात् प्रारब्धे विषये यतः॥

चन्द्रशुद्धिमाह शुद्धिदीपिकायाम्—

सप्तमोपचयाद्यस्थश्चन्द्रः† सर्व्वत्र शोभनः।
शुक्लपक्षे द्वितीयस्तु नवमः पञ्चमः शुभः॥

पुरुषस्य जन्मराशेः सकाशात् सप्तमराशिस्थः तृतीय-षष्ठ-दशमैका-दशस्था‡नामुपचयसंज्ञा तेषु स्थितः आद्ये जन्मराशौ च स्थित-

* ग पुस्तके चन्द्रे बलेन हीने।
* ख पुस्तके—शशी।
+ ग पुस्तके—स्वामान्युप।

चन्द्रः सर्व्वत्र शुक्लपक्षे कृष्णपक्षे च शोभनः। द्वितीयपञ्चमनवमस्तु शुक्लपक्ष एव शोभनः। न तु कृष्णपक्षे इत्यर्थः।

अत्रैव ग्रहवेधेनाशुद्धिमाह वृहद्यात्रायाम्—

सप्तमायदशषट्त्रिजन्मगोऽनिष्टदो द्विनिधनोपगैर्ग्रहैः।

बन्धु-रिप्फ नव-पञ्चमस्थितैरिष्टदो यदि विलोमवेधगः॥

आयमेकादशस्थानं निधनमष्टमं बन्धुश्चतुर्थस्थानं रिप्फं द्वादशस्थानं जन्मराशेः सप्तमायदशषट्त्रिजन्मगश्चन्द्रो यथासंख्यं जन्मराशे-र्द्विनिधनोपगैर्बन्धुरिप्फपञ्चमस्थैर्ग्रहैर्विद्धो न शुभः स्यात्। अत्र च वक्ष्यमाणरत्नमालावचनात् बुधवर्ज्जितैर्ग्रहैरिति बोद्धव्यम्।

तद्यथा—जन्मराशेः सप्तमस्थश्चन्द्रो जन्मराशिद्वितीयस्थेन बुध-वर्ज्जितेन ग्रहेण विद्धो न शुभः। जन्मराशेरेकादशस्थो जन्मराशे-रष्टमस्थेन दशमस्थो बन्धुस्थेन षष्ठस्थो रिप्फस्थेन तृतीयस्थो नवमस्थेन जन्मस्थः पञ्चमस्थेन विद्धो नेष्टद इत्यर्थः। यदि तु विलोमे वेधगश्चन्द्रःस्यात्तदेष्टद इत्यर्थः।

एतदुक्तं भवति विपरीतगश्चन्द्रो द्विनिधनबन्धुरिप्फनवमपञ्च-मस्थो यथासंख्यं विपरीतस्थैर्जन्मराशेः सप्तमायदशषट् त्रिजन्मस्थै-र्बुधवर्ज्जितैर्ग्रहैर्विद्धश्चन्द्रः शुभदः स्यात्।

तद्यथा—

जन्मराशे द्वितीयस्थश्चन्द्रो जन्मराशेः सप्तमस्थग्रहेण विद्धः शुभः। एवमष्टमस्थ एकादशस्थेन चतुर्थस्थो दशमस्थेन द्वादशस्थः षष्ठस्थेन नवमस्थस्तृतीयस्थेन पञ्चमस्थो जन्मराशिस्थेन विद्धः शुभदः स्यादित्यर्थः।

तथाच वसिष्ठः—

जन्मराशिगतश्चन्द्रो जन्मतः पञ्चमो ग्रहः ।
*स्थितो यदा तथा चेन्द्वेंधगो नेष्टदः स्मृतः ॥
पञ्चमस्थानगश्चन्द्रो जन्मतो जन्मगो ग्रहः ।
यदा तदा विपर्य्यस्तवेधगः शुभदः स्मृतः ॥
एवं तृतीयषट्सप्त दशमैकादशोपगः ।
धर्म्मरिप्फ द्विबन्धष्टस्थितैर्विद्धस्तु नेष्टदः ॥
विपरीतविद्धस्तु शुभदः परिकीर्त्तितः ।

रत्नमालायां—

द्यून ७ जन्म १ रिपु ६ लाभ ११ ख १० त्रि ३ ग
चन्द्रमा शुभफलप्रदस्तथा ।
स्वात्मजा ५ऽन्त्य १२ मृति ८ बन्धु ४ धर्म्मगे
विंध्यते न विबुधै र्ग्रहैर्य्यदि ॥
वामवेधविधिना त्वशोभना
भप्यमी शुभफलं दिशन्त्यलम् ।

प्रकारान्तरेण चन्द्रशुद्धिमाह शुद्धिदीपिकायाम्—

उपचयकरयुक्तः सव्यगः शुक्लपक्षे
शुभमभिलषमाणः सौम्यमध्यस्थितो वा ।
सखि-वधि ग्रहयुक्तः-कारकर्त्तोऽपि चेन्दु-
र्जयधनसुखदाता तत्प्रहर्त्तान्यथातः ॥

* ख पुस्तके -पंक्तिद्वयं पतितम् ।

गोचरे दशायां वा उपचयकरा हृद्धिकरा ये ग्रहास्तेर्युक्तश्चन्द्रो जय-धनसुखदाता स्यात् शुक्लपक्षे सव्यग उत्तरमार्गस्थश्चन्द्रः शुभश्चन्द्रस्य यदोत्तरक्रान्तिःस्यात् तदा शुक्लपक्षे शुभ इत्यर्थः। क्रान्ति-विनिर्णयस्तु सूर्य्यसिद्धान्तविह्निर्ज्ञातव्यः, इह तु बहुत्वादतिदुरूहत्वाच्च नोच्यते। तथा शुभमभिलषमाणः शुभफलदं गृहं गन्तुकामः शस्तस्तथा शुभग्रहयोर्मध्ये स्थितः शस्तस्तथा मित्र-गृहस्थश्चन्द्रः शुभः। तथा वशिगृहस्थश्च जन्मकाले चन्द्राद्यस्मिन्यो ग्रहो वशो तस्य गृहे गतश्चन्द्रः शस्तः।

यथा बृहद्यात्रायाम्

> यो यस्य दशमगृहगः स तस्य
>
> वश्यस्तु भवति नियमेनेति।

स्वगृहतुङ्गमूलत्रिकोणस्था अन्योन्यं केन्द्रस्थाः सन्तो ग्रहाः कारक-संज्ञकाः। एवञ्च जन्मकाले ये ग्रहाः कारकास्तेषां गृहे स्थितश्चन्द्रो जयधनसुखदाता स्यात्।

तथाच बृहज्जातके--

> स्वर्क्ष-तुङ्ग-मूलत्रिकोणगाः
>
> कण्टकेषु यावन्त आस्थिताः।
>
> सर्व्व एव तेऽन्योन्यकारकाः
>
> कर्म्मगस्तु तेषां विशेषतइति॥

अत उक्तादन्यथा प्रकारेण स्थितश्चन्द्रः अनुपचयकरग्रहेण युक्तः कृष्णपक्षे दक्षिणक्रान्तिस्थश्च अशुभगृहं गन्तुकामः पापयोर्मध्ये स्थितः शत्रुगृहगश्च तेषां जयादीनां कर्त्ता नाशक इत्यर्थः।

राजमार्त्तण्डे

पापात् सप्तमगः शशी यदि भवेत् पापेन युक्तोऽथवा*
†यत्नेनापि विवर्ज्जयेत् मुनिमतो दोषोऽप्ययं कथ्यते।
यात्रायां विपदो गृहेषु मरणं चौरे च रोगोद्भवो
वैधव्यं विवहे‡ व्रते च मरणं शूलस्य पुंकर्म्मणि॥

एतच्च सकलशुभकर्म्मोपलक्षणम्।

तथा तत्रैव—सक्रूरे वा शशिनि क्रूरद्वयमध्यगे विलग्ने वा।
शुभकर्म्माणि शुभेच्छुर्नैवोपदिशेन्नरेन्द्राणाम्॥

मित्रग्रहादौ दोषाभावमाह राजमार्त्तण्डे—

मित्रांशमे मित्रसमीक्षितो वा
मित्रांशके मित्रसमाश्रितो वा§।
क्रूरग्रहादस्तगतोऽपि सोमः
समीहितार्थं वितरेन्नराणाम्॥
यातः¶ स्वमित्रभवने सुहृदीक्षितो वा
भास्वन्मयूखविमलीकृतदिङ्मुखो वा।
यामित्रदोषमपहृत्य परं‖ करोति
सोमः समाहितफलं खलु मानवानाम्॥

* ग पुस्तके वा संयुतः।
† ख यत्नात् तत्परिवर्ज्जयेत्।
‡ ग पुस्तके—विवाहे।
§ ग पुस्तके—मित्रयुतो यदि स्यात्।
¶ ग पुस्तके—स्थोऽपि।
‖ ख पुस्तके—शुभम्।

यामित्रदोषं सप्तमपापग्रहजनितदोषमित्यर्थः।

ताराशुद्धिमाह शुद्धिदीपिकायाम्—

तारासु-जन्मसम्पद्विपत्क्षेमप्रत्यरिसाधकवधमित्रातिमित्रसंज्ञास्वेताः संज्ञानुरूपफलाः।

जन्मनक्षत्रादितस्त्रिरावृत्तिपरिभ्रमात् जन्मादयस्ताराः स्युः। अतिमित्रमत्यन्तमित्रमित्यर्थः।

तथा च स्वरोदये—

जन्म सम्पत् विपत् क्षेम प्रत्यरिः साधको वधः।
मैत्रं परममैत्रञ्च जन्मादीनि पुनः पुनः॥
सिद्धिदा वृद्धिदा चैव मृत्युदा च विशेषतः।
प्रत्यरिनामतः* स्तारास्त्रिप्रकाराः प्रकीर्त्तिताः॥

सिद्धिदा पञ्चमी वृद्धिदा चतुर्द्दशी मृत्युदा त्रयोदशी तारेत्यर्थः।

तथाच शुद्धिदीपिकायाम्—

पापाख्या तु त्रिविधा पञ्च-चतुर्द्दश विंशति स्त्रियुता।
सिद्धिफला वृद्धिकरी विनाशसंज्ञाः क्रमात् कथिताः॥

त्रियुता विंशतिस्त्रयोविंशतिरित्यर्थः।

राजमार्त्तण्डे—

रोगो जन्मसु तारकासु कथितः कार्य्यप्रणाशोऽचिरा
दारोग्यं द्रविणञ्च वाञ्छितफलावाप्तिः सदा सम्पदि।
तारायां विपदो भवन्ति विपदि प्रारब्धकार्य्यक्षयः
क्षेमारोग्यधनप्रमोदमुदितं क्षेमाभिधानास्वपि॥

* क पुस्तके—प्रत्यरिनाम वा क्षेमं।

*पञ्चम्यामचिराच्छ्रमोऽतितरलं कार्य्यप्रसिद्धिं प्रति
सद्बस्त्रद्रविणप्रमोदमतुलं प्राप्नोति षष्ठ्यामपि।
सप्तम्यामपि कोषनाशमशुभं नानागदव्याहृति-
श्चाष्टम्यां धनमानसौख्यविजयानेवं नवम्यामपि॥
सर्व्वमङ्गलकार्य्याणि त्रिषु जन्मसु कारयेत्।
विवाद-श्राद्ध-भैषज्य-यात्रा-क्षौराणि वर्ज्जयेत्॥

एतेन जन्मतारादोषो विवादादिपञ्चस्वेव नान्यत्र।

तथा—जन्मनक्षत्रगश्चन्द्रः प्रशस्तः सर्व्वकर्म्मसु।
क्षौर-भैषज्य-वादाध्व-श्राद्धकर्म्मसु तं त्यजेत्॥

राजमार्त्तण्डे—रविशुद्धौ गृहकरणं रविगुरुशुद्धौ व्रतोद्वाहौ।
क्षौरं तारकाशुद्ध्या शेषं चन्द्राश्रितं कर्म्म॥

गौडेऽमरेज्यार्कशशाङ्कशुद्धौ
पूज्यस्तथैकस्य च कामरूपे।
कर्णाट-नाटङ्ग-कलिङ्गदेशे
जीवस्य चाभ्युन्नतिदो विवाहः॥
बृहस्पतौ शोभनगोचरस्थे
विवाहमिच्छन्ति हि दाक्षिणात्याः।
रवौ विशुद्धे प्रवदन्ति गौड़ा
न गोचरो मानवके प्रमाणम्॥

* ग पुस्तके- पञ्चम्यां मतिमान्.....
क्षौरक..

होरासारे—

यद्यपि सुरगुरुसूर्य्यौ शस्तौ कथितौ विवाहयोगेऽपि।

सकलगुणोदययुक्ता भानोः शुद्धिः परा गौडे॥

एतेन विवाहे रविशुद्धिरवश्यं विचार्य्येत्यर्थः।

रविशुद्धिमाह—

जन्मराशेः शुभः सूर्य्यस्त्रि-षष्ठ-दश-लाभगः।

द्विपञ्चनवगोऽप्यौष्टस्तयोदशदिनात् परम्॥

राजमार्त्तण्डे

जन्मनि भानौ विधवा पतिसुतयुक्ता भवत्युपचयर्क्षे।

शेषक्षस्थे कन्या नानाशोकातुरा नूनम्॥

गुरुशुद्धिमाह तत्रैव

द्विपञ्चनवमस्तायगतो वाचस्पतिः शुभः।

शेषेषु दुःखदौर्भाग्यरोगशोकप्रदो भवेत्॥

उच्चस्थः स्वगृही सुहृद्भवनगो वाचस्पतिर्नित्यशः

सौभाग्यार्थसुखप्रमोदजनको जन्माष्टगो वापि चेत्।

नीचस्थोऽरिगृही दिवाकरकरच्छायानुगामी यदा

दृष्टोऽनिष्टफलं ददाति नियतं दौर्भाग्यदुःखादिकम्॥

दिवाकरकरच्छायानुगामी अस्तङ्गत इत्यर्थः।

तथा—जन्माष्टमद्वादशगः सुरेज्यो वैधव्यदो रोगकरस्त्रिषष्ठः*।

दौर्भाग्यदाता दशमश्चतुर्थः शेषेषु सौभाग्यसुखार्थकृत् स्यात्

* ग पुस्तके – स्त्रीणामकृत् त्रिषष्ठः।

धर्म्मात्मजव्ययासुतलाभगोऽपि कर्म्मान्त्यसोदर्य्यसुखाष्टमस्थैः।
विद्धो ग्रहैर्नेष्टफलानि धत्ते वामेन विद्धस्तु शुभः सुरेज्यः॥

मित्रादिगृहेषु सर्व्वेषामेव ग्रहाणां प्रशस्तत्वमाह पशुपति-दीपिकायाम्—

सुहृद्गृहस्थोच्चगतोऽपि वा स्यान्मित्रेक्षितो वात्मगृहं गतो वा।
अनिष्टसंस्थोऽपि ध्रुवं नराणां सर्व्वो ग्रहः श्रेष्ठफलं ददाति॥

लग्नादष्टमसक्रूरग्रहवर्ज्जनमाह राजमार्त्तण्डे—

यस्य व्रतोपनयनादिशुभक्रियासु
पापोऽष्टगो भवति वाथ शशी विलग्नात्।
तस्याचिरेण मरणं परिकीर्त्तयन्ति
सन्तः सुरेन्द्रसचिवेऽपि च कण्टकस्थे॥

शुद्धिदीपिकायां—

इन्दष्टमगान् पापान् वर्ज्जयेन्नैधनं विलग्नञ्च।
चन्द्रञ्च निधनसंस्थं सर्व्वारम्भप्रयोगेषु॥

विवाहेषु विद्धनक्षत्रवर्ज्जनमाह शुद्धिदीपिकायां—

कर्णवेधे विवाहे च व्रते पुंसवने तथा।
प्राशने चाद्यचूडायां विद्धर्क्षं विवर्ज्जयेत्॥

व्रतमुपनयनम्।

विद्धनक्षत्रमाह तत्रैव

तिथ्यङ्कवेदेन्दुदशोनविंश भैकादशाष्टादशविंशसंख्याः।
दृष्टोडुना सूर्य्ययुतोडुना च योगादमूषेद्दश योगभङ्गः॥

अङ्गं षट् भं सप्तविंशतिः, दृष्टोडुना कर्म्मकरणार्थमिष्टनक्षत्रेण च

योगाद्यदि तिथ्यादयोऽमूर्दशसंख्याःस्युस्तदा योगभङ्गः स्यात्।
सप्तविंशाधिके तु सप्तविंशं वर्जयित्वा शेषेण योगभङ्गो विचार्य्यः।
यथा राजमार्त्तण्डे—

शून्यैक वेदऋतवो दशरुद्रयुक्ता
विंशोनविंशधृतिपञ्चदशाख्यसंख्याः।
साश्यर्क्षमिन्दुयुतमर्कसमन्वितञ्च
भागः प्रदेय उडुभिर्दशयोगचक्रम्॥

धृतिरष्टादश उडुभिः सप्तविंशतिभिः।

अत्रैव विशेषमाह—

आद्यपादे स्थिते सूर्य्ये तुरीयांशं प्रदूष्यति।
द्वितीयस्थे तृतीयन्तु विपरीतमतोऽन्यथा॥

आक्रान्तनक्षत्रस्य प्रथमपादस्थे सूर्य्ये दृष्टनक्षत्रस्य चतुर्थपादमेव पण्डितो दूष्यति दूषयति नतु सर्व्वमित्यर्थः। एवं द्वितीयस्थे सूर्य्ये तृतीयपादं दूष्यति अन्यत् पादत्रयमदुष्टमित्यर्थः।

विष्टिमाह शुद्धिदीपिकायाम्—

तृतीयादशमीशेषे तत्पञ्चम्योस्तु पूर्व्वतः।
कृष्णे विष्टिः सिते तद्वत् तासां परतिथिष्वपि॥

कृष्णपक्षे तृतीयादशम्योः शेषार्द्धे विष्टिः स्यात् तत्पञ्चम्योः तृतीया-दशमी-पञ्चमीतिथ्योः *सप्तमीचतुर्द्दश्योः पूर्व्वतः पूर्व्वार्द्धे विष्टि-रित्यर्थः। सिते शुक्लपक्षे तासां तृतीयादीनां परतिथिषु चतुर्थी-काद्दश्योस्तद्वत् तत्पञ्चम्योर अष्टमीपौर्णमास्योस्तद्वत् पूर्व्वार्द्धे विष्टिरित्यर्थः॥

विष्टिवर्ज्जनमाह —

केषु केषु च कार्य्येषु सर्व्वाण्येव नियोजयेत् ।
विहाय विषरौद्राणि विष्टिं सर्व्वत्र वर्ज्जयेत् ॥

सर्व्वाणि करणानि केष्वित्यनेन यात्रादिषु गरवणिजविष्टय-स्त्याज्या इत्यर्थः ।

यथा लघुयात्रायाम्—

गर-वनिज-विष्टि परिवर्ज्जितानि करणानि यान्तु रिष्टानि ।
गरमपि केचिच्छस्तं वणिजञ्च वणिक्क्रियास्वेव ॥

विषरौद्राणि कर्म्माणि विहाय सर्व्वकर्म्माणि विष्टिं वर्ज्जयेत् विष-प्रदाने कूटयुद्धादिरौद्रकर्म्मणि च विष्टिर्विहितेत्यर्थः ॥

तथा च दैवज्ञवल्लभायाम्—

व्यतीपात-विष्टि वैधृति-पापग्रहलग्न-दिवसेषु चौर्य्यावस्कन्दा-कृतसंग्रामाः सिद्धिमायान्ति ।

अत्र विष्टेः शेषटघटिकाये पुच्छभागे शुभकर्म्म कर्त्तव्यमित्याह राजमार्त्तण्डे—

विष्टिं भुजङ्गमाकारां केचिदिच्छन्ति दारुणाम् ।
भुजगस्य मुखे* भीतिर्न तु पुच्छे कदाचन ॥
आस्यं तस्या भवति घटिकाः पञ्च कण्ठस्तथैका
वक्षस्येकादश निगदिता नाभिदेशश्चतस्रः ।
पुच्छस्तिस्रः कटिरपि तथा षट् च पूर्व्वं मुनीन्द्रै
राख्यातैषा न शुभफलदा वर्ज्जयेदुत्तमस्ताम् ॥

* ग पुस्तके भुजङ्गस्यमुखे ।

पुच्छस्य पूर्व्वं षट्घटिकाः कटिः तत्परं दण्डत्रयं पुच्छं इत्यर्थः।

तथा तत्रैव—कार्य्यं न सिध्यति मुखे मरणं गले स्या—

दर्थक्षयो हृदि कटावपि बुद्धिनाशः।

नाभौ भयं विजयलब्धिरतीव पुच्छे*

विष्टिप्रमाणफलमेतदुशन्ति सन्त॥

व्यतीपातादिवर्ज्जनमाह सूर्य्यसिद्धान्ते—

शशाङ्कार्कयुतेर्लिप्ता भभोगेन विभाजिताः।

लब्धं सप्तदशोऽन्त्योऽन्यो व्यतीपातश्च वैधृतिः†।

सर्पेन्द्रपौष्णधिष्ण्यानामन्त्यपादा भसन्धयः।

तदग्रभेषु चाद्यांशो गण्डान्तं नाम कीर्त्यते॥

व्यतीपातद्वयं सन्ध्यो गण्डान्तं त्रितयं पुनः।

एतद्भसन्धित्रितयं सर्व्वकर्म्मणि वर्ज्जयेत्॥

चन्द्रार्कस्फुटयोर्योगं कृत्वा लिप्ताः कार्य्यास्तास्च भभोगेन नक्षत्र-

भोगप्रमाणेनाष्टशतेन हरेत्। तत्र च सप्तदशपूरणभागो व्यती-

पातः, अन्त्यः सप्तविंशत्यन्त्यो भागो वैधृतिरित्यर्थः। सर्पोऽश्लेषा

इन्द्रो ज्येष्ठा पौष्णं रेवती एतेषां नक्षत्राणामन्त्यपादा भसन्धि-

संज्ञकाः तदग्रभेषु तेषां परनक्षत्रेषु मघामूलाश्विनीषु आद्योऽंशः

प्रथमपादो गण्डान्तसंज्ञकः। एतत्सर्व्वं सन्ध्यो विद्वान् सर्व्वकर्म्मसु

वर्ज्जयेदित्यर्थः।

* क पुस्तके—अभीति पुच्छे।

† ख पुस्तके—गोध्यो।

‡ ग पुस्तके—व्यतीपातस्तृतीयकः।

तथाच पशुपतिदीपिकायाम्—

गण्डादौ गण्डकान्ते च विवाहे म्रियतेऽङ्गना ।
न जीवेज्जातकोऽत्रैव पितृमातृविनाशकृत् ॥
गतो न जीवेत् सीमन्तविधौ गर्भ*च्युतिर्भवेत् ।
व्रतारम्भे विनाशः स्यात् चौरे पञ्चत्वमादिशेत् ॥

तथाच शुद्धिदीपिकायाम्—

निरंशं दिवसं विष्टिं व्यतीपातञ्च वैधृतिम् ।
केन्द्रञ्चापि शुभैः शून्यं पापाहमपि वर्ज्जयेत् ॥

निरंशं रविना अंशशून्योक्तं दिनं रविसञ्चारदिनमित्यर्थः ।

तथाच राजमार्त्तण्डे—

अस्तं प्रयाते च भृगौ गुरौ वा
सूर्य्ये निरंशे हिमगौ प्रनष्टे ।
न कूपवाप्यादिकमन्दिराद्यं†
शुभं प्रदिष्टं धनकीर्त्तिनाशात् ॥

शुभैरिति यत्किञ्चिदपि केन्द्रं शुभमात्रेण युक्तं चेत्तदा न दोष इत्यर्थः । लग्न-सप्तम-दशम-चतुर्थानां केन्द्रसंज्ञा । पापाहं पाप-ग्रहवारं वर्ज्जयेत् । अत्र तु तत्तद्विशेषविहितकर्म्माणि कर्त्तव्यान्येव ।

यथा राजमार्त्तण्डे—

जीवार्कभौमवाराश्च शस्ताः पुंसवने विधौ ।

---

* ख पुस्तके—स्रुतिः ।
† ख पुस्तके—मन्दिरार्थम् ।

तथाच पशुपतिदीपिकायाम्—

स्थाप्यं समाप्यं क्रतुयूपकाष्ठं
वेश्मप्रवेशं गजबाहनञ्च।
ग्रामप्रवेशं नगरे पुरे वा
कुर्य्याद्दिने सूर्य्यसुतस्य सर्व्वम्॥

वारप्रवृत्तिमाह शुद्धिदीपिकायाम्—

रेखापूर्व्वापरयोर्वारः सूर्य्योदयात्परस्तात्प्राक्।
देशान्तरयोजनमितविघटीभिः पादहीनाभिः॥

रेखोक्ता सूर्य्यसिद्धान्ते—यथा रेखामधिकृत्य—

राक्षसालयदेवौकःशैलयोर्मध्यसूत्रगाः।
रोहितकमवन्ती च तथा सन्निहितं सरः॥ इति।

अस्यार्थः—

लङ्कासुमेरुपर्व्वतयोर्मध्यसूत्रगता देशा रेखासंज्ञकास्ताम् देशानाह रोहीतकदेशोऽवन्तीदेशः सन्निहितं सरः कुरुक्षेत्रञ्च इत्यर्थः।

रेखायाः पूर्व्वदेशे परदेशे च यथासंख्यं सूर्य्योदयकालात् परकालं पूर्व्वकालञ्च वारप्रवृत्तिः स्यात् रेखापूर्व्वदेशे सूर्य्योदयात् पश्चात् रेखापरदेशे सूर्य्योदयात् पूर्व्वं वार इत्यर्थः। तत्र कालपरिमाणमाह रेखातो यावन्ति देशान्तरयोजनानि तत्सम्मिताभिर्विघटीभिः पलैः पादहीनाभिश्चतुर्थभागहीनाभि वारप्रवृत्तिः स्यादित्यन्वयः।

योजनसाधनप्रकारम् अतिविस्तारभयादतिदुरूहत्वाच्चोपेक्षितः संक्षेपेण किञ्चित् कथ्यते।

दक्षिणराढ़े गङ्गातीरे सार्द्धशतं १५० वङ्गे सुवर्णग्रामादौ *अशीत्यधिकं शतं १८० एतन्मध्येऽप्युक्तं वाराणस्यामष्टोत्तरशतं १०८ देशान्तरमिति।

तेन दक्षिणराढ़े द्विपञ्चाशत्पलाधिकदण्डैकानन्तरं वारप्रवृत्तिः। वङ्गे तु सपाददण्डद्वयानन्तरं वारप्रवृत्तिरिति।

पशुपतिदीपिकायाम्—

अवमाहे त्र्यहस्पर्शे शुभकर्म्म विवर्ज्जयेत्।
कदाचिदवमे कुर्य्यान्न कदाचित्त्र्यहस्पृशि॥

अन्यदिनेऽशक्तिसम्भावनायां कदाचिदवमदिनेऽपि कुर्य्यात्।

तथाच शुद्धिदीपिकायाम्—

त्र्यहस्पृशं नाम यदेतदुक्तं
तत्र प्रयत्नः कृतिभिर्विधेयः।
विवाह-यात्रा-शुभपुष्टिकर्म्म
सर्व्वं न कार्य्यं त्रिदिनस्पृशोऽह्नि† ॥

यत्नः कार्य्यः यत्नेन तद्वर्ज्जनीयमित्यर्थः।

अवमदिनं त्र्यहस्पर्शदिनञ्चाह स एव—

तिथ्यन्तद्वयमेको दिनवारः स्पृशति यत्र तद्भवत्यवमदिनं
त्र्यहस्पृक् तिथित्रयस्पर्शनादह्नः।
दिवसे तावद्वारद्वयं भवति वारप्रवृत्तिकालात् पूर्व्वमेको-

* ख पुस्तके—चत्वारिंशदधिकम्।
† ग पुस्तके—स्पृशे तु।

वारस्तत्परश्चान्यः तत्र च दिनस्याहोरात्रस्य एको वारस्तिथ्यन्त-द्वयं तिथित्रयं यत्र दिने स्पृशति तद्दिनमवमसंज्ञकं वारप्रवृत्ति-कालात् परं परदिनसूर्य्योदयावध्येकवारेण तिथ्यन्तद्वयस्पर्शोऽवम-दिनं स्यादित्यर्थः।

यथा दक्षिणराढ़े पादोनदण्डद्वयादूर्द्धं वारप्रवृत्तिस्तत्र च यस्मिन् दिने दण्डत्रयमेका तिथिरन्या च षट्पञ्चाशद्दण्डात्मिका तदवमदिनम्।

त्र्यहस्पृक्दिनन्तु अङ्कस्तिथित्रयस्पर्शादहोरात्रेण यदि तिथि-त्रयं स्पृश्यते अहोरात्रस्य वारद्वयेन तिथ्यन्तद्वयं यदि स्पृश्यते तदा स्यादित्यर्थः॥

यथा वारप्रवृत्तेः पूर्व्वमेका तिथिर्दण्डैकप्रमाणा अन्या च सप्त-पञ्चाशद्दण्डात्मिका वारद्वयेन तिथ्यन्तद्वयस्पर्शात् त्र्यहस्पृक्दिनं स्यात्।

तथाच करणरत्ने—

अवमं तद्वारदिनं तिथ्यन्तद्वययोगि यत्।
त्र्यहस्पृशन्तु त्रितिथिस्पर्शादौदयिकं विदुः॥

रत्नमालायाम्—

यत्रैकः स्पृशति तिथिद्वयावसानं
वारश्चेदवमदिनं तदुक्तमार्य्यैः।
यः स्पर्शाद्भवति तिथित्रयस्य चाह्न-
स्त्रियुस्पृक् स पुनरिदं द्वयञ्च नेष्टम्॥

केचित्तु—तिथिद्वयेन मिलित्वा यदहोरात्रं पूर्णं स्यात्तदवमदिनं

यथा दण्डद्वयमेका तिथिस्तत्परमपरसूर्य्योदयान्तं समस्तदिन-व्यापिनी चान्या तद्दिनमवमं यत्र दण्डद्वयमेका तिथिरन्या च समग्रस्वाग्रहण्डात्मिका ततःपरमन्यतिथियोगः ततस्तिथित्रयस्पर्शात् त्र्यहस्पृगित्याहुः। तदयुक्तम्—

वत्सरलक्षेणापि तिथिद्वयसमाप्त्यसम्भवात् अवश्यं किञ्चि-न्न्यूनाधिकत्वसम्भवात् एको(दिन)वार इतिपदद्वयवैयर्थ्याच्चेति।

अन्ये तु-तिथित्रयस्पर्शादिति पाठं कृत्वा व्याचक्षते, अहस्त्रय-स्पर्शाद्दिनत्रयस्पर्शात्तिथिस्त्रिदिनस्पृक् स्यात् षष्ठिदण्डात्मिकतया वर्त्तमाना या तिथिः सा त्रिदिनस्पृगित्यर्थः। एतच्च शास्त्रविरुद्ध-माचारविरुद्धञ्च।

यथा विष्णुरहस्यवचनम्—

एकादशी द्वादशी च निशान्ते च त्रयोदशी।
त्र्यहस्पृक् तदहोरात्रमुपोष्या सा सदा तिथिः॥

राजमार्त्तण्डे—

एकस्मिन् सावने त्वह्नि तिथीनां त्रितयं यदा।
तदा दिनक्षयः प्रोक्तस्तत्र साहस्रिकं फलम्॥
त्र्यहस्पृग्दिवसश्चैव महापुण्यतमः स्मृतः।
तिथित्रयस्य संस्पर्शात् त्र्यहस्पृक् समुदाहृतः॥ इति

निषिद्धनक्षत्रमाह लघुयात्रायाम्—

नक्षत्रमपटुकिरणं पश्चात् सन्ध्यागतं ग्रहैर्भिन्नम्।
क्रूरनिपीड़ितमुत्पातदूषितमशुभं सर्व्वम्॥

अपटुकिरणं अस्तासन्नविहितनक्षत्रं पश्चात् सन्ध्यागतं अस्तङ्गतं ग्रहैः शुभाशुभैर्योगतारायोगेन शकटादिभेदेन वा भिन्नं क्रूरनिपीड़ितं पापग्रहभोग्यनक्षत्रं उत्पातदूषितमुल्कादिविविधोत्पातदूषितं नक्षत्रं शुभकर्म्मणि वर्ज्जयेदित्यर्थः।

नष्टयात्रायाम्—

नाकालवर्षविद्युत्स्तनितेष्विष्टं कथञ्चिदपि यानम्।

राजमार्त्तण्डे—

पौषादिचतुरो मासान् प्रोक्ता वृष्टिरकालजा।
व्रतं यात्रादिकं तत्र वर्ज्जयेत् सप्तवासरान्॥
वृष्टिः करोति दोषं तावन्नाकालसम्भवा राज्ञः।
यावन्न भवति गमने नरपशुचरणाङ्किता वसुधा॥

नरपशुचरणाङ्किता कर्दमाढ्या पृथिवी न स्यात्।

कर्दमसम्पादकवृष्टावेव सप्तरात्रं मङ्गलकर्म्माणि त्यजेदाध्येति।

तथा भोजराजः—

ग्रहे रवीन्द्वोरवनिप्रकम्पे
केतूद्गमोल्कापतनादिदोषे।
व्रते दशाहानि वदन्ति तज्ज्ञा
वर्ज्ज्यानि सप्ताहमपि प्रयाणे॥

शुद्धिदीपिकायाम्

अनिष्टे त्रिविधोत्पाते सिंहिकासूनुदर्शने।
सप्तरात्रं न कुर्व्वीत यात्रोद्वाहादिमङ्गलम्॥

दिव्यान्तरीक्षभौमभेदेन त्रिविधोत्पातास्तेषां शुभाशुभत्वञ्च वक्ष्यते। अत्र चानिष्टफले त्रिविधोत्पाते समरात्रं यात्रोद्वाहादि मङ्गलं कर्म्म न कुर्य्यात्। इष्टफले तु कर्त्तव्यमेवेति तात्पर्य्यम्। तथा राहुदर्शनस्य दिव्योत्पातत्वेऽपि इष्टेऽनिष्टे च तस्मिन् सामान्यतो निषेध इति पुनरुक्तिः।

त्रिविधोत्पातानाह—

ग्रहनक्षत्रविकारो दिव्योत्पातः प्रकीर्त्तितो मुनिभिः।
ग्रहयुद्ध धूमकेतु ग्रहसंकोलकोपरागादिः।

आकस्मिकमाकाशजमुत्पातं प्राहुरन्तरीक्षगतम्।
उल्कान्तरीक्षनगरप्राप्त वाताग्नि रक्तवृष्ट्यादि।

स्थावरजङ्गमजन्यवैकृतमाहुर्महीजमुत्पातम्।
असमयपुष्पफलादिकमन्यस्मिन्नन्यजातिजन्मादि।

शुभाशुभत्वमाह शुद्धिदीपिकायाम्—

आर्य्यम्यादिचतुष्कचन्द्रतुरगादित्येषु वायुर्भवेत्
देवेज्याज विशाख याम्ययुगले पित्र्यद्वये चानलः।
वैश्वादित्रय धातृमैत्रयुगलेष्विन्द्रो भवेदीश्वरः
सर्पोपान्त्यशताम्बुमूलयुगलेशानेष्वपामीश्वरः॥
अनिलाग्निशक्रवरुणा धुनिशोः पतयश्चतुर्षु यामेषु।
नक्षत्राधिपयोगात् शुभमशुभं वाद्भुतेषु सर्व्वेषु॥
पवनदहनौ नेष्टौ योगस्तयोरतिदोषदः
सुरपवरुणौ शस्तौ योगस्तयोरतिशोभनः।
सवरुणमरुन्मिश्रः शक्रस्तथाग्निसमायुतः

फलविरहितः सेन्द्रो वायुस्तथाग्नियुतोऽम्बुपः ॥

आर्य्यमो उत्तरफल्गुनी तदादिचतुष्कं चन्द्रो मृगशिरः तुरगोऽश्विनी आदित्यं पुनर्वसुरेषु-वायुः पतिः। देवेज्यं पुष्या ऽजः पूर्व्वभाद्रपदं याम्ययुगलं भरण्यादिद्वयं पितृद्वयं मघादिद्वयं एष्वग्निः पतिः। वैश्व उत्तराषाढ़ा तदादित्रयं धाता रोहिणी मैत्रयुगलं अनुराधादिद्वयं एष्विन्द्रः पतिः। सर्पोऽश्लेषा उपान्त्यं उत्तरभाद्रं शतं शतभिषा अन्त्यं रेवती मूलादिद्वयं एषु वरुणः पतिरित्यर्थः।

राहुदर्शनस्य शुभाशुभफलत्वमाह वराहसंहितायाम्—

जन्मसप्ताष्टरिःफाङ्कदशमस्थे निशाकरे।

दृष्टोऽरिष्टप्रदो राहुर्जन्मर्क्षे निधनेऽपि च॥

रिःफं द्वादशं अङ्को नवमः, जन्मर्क्षं त्रिजन्मनक्षत्रं निधनं त्रयोविंशनक्षत्रमित्यर्थः। दृष्ट इत्यनेनादर्शने रिष्टाभाव इत्यर्थः। रिष्टमैहिकदुःखरोगादि।

यत्र— सप्ताष्टजन्मरिःफेषु चतुर्थे दशमे तथा।

नवमे च निशानाथे न कुर्य्याद्राहुदर्शनम्॥

इति राजमार्त्तण्डनाम्ना गङ्गावाक्यावलीकारेण राहुदर्शननिषेध विधायकं वचनं लिखितम् तच्च राजमार्त्तण्डादावदृष्टमिति प्रतिभाति समूलत्वे निषेधोऽयं न सर्व्वसाधारणविषयः किन्तु पूर्व्वोपन्यस्तसमूलवचनैकवाक्यतया रिष्टदोषपरिहारेच्छुना जन्मादिषु त्रिजन्मतारासु वैनाशिकनक्षत्रेषु च राहुर्नेक्षितव्य इति रिष्टापहारविषय एव।

ततः –

ऐहिकाल्पारिष्टदोषसहिष्णुना पश्चात्प्रतीकारेण तद्दोषप्रशमनेच्छुना वा स्नानदानश्राद्धादीनां पारलौकिकाक्षयफलाभिलाषुकेण राहुर्वीक्षितव्य एव।

न चानिष्टसाधने कथं प्रवृत्तिरिति वाच्यम्।

बलवदनिष्टाननुबन्धीष्टसाधनताज्ञानस्यैव प्रवर्त्तकत्वात्। दृश्यते च लोके बलवदिष्टमिष्टान्नादिवाञ्छया स्वल्पक्लेशसाधनपाकादौ प्रवृत्तिरिति।

अथवा वैधक्रियानधिकारिगोचरं वा रागप्राप्तदर्शनमादाय निषेधविधेश्चरितार्थत्वात् वैधस्नानाद्यङ्गभूतदर्शनं निषेद्धुं न शक्यते अङ्गस्यापि विधिप्रयुक्तत्वेन बलीयस्त्वान्न च वैधनिषेधः किन्तु रागप्राप्तस्यैवेति।

अतएव न हिंस्यात् सर्व्वभूतानीति रागप्राप्तहिंसैव निषिध्यते न तु पशुयागाङ्गहिंसेति।

यथा च—

नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन।

नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम्॥

इति मनुवचनेन रागप्राप्तमेव राहोर्द्वितीयादिदर्शनं निषिध्यते न तु वैधस्नानाद्यङ्गभूतं प्रथमराहुदर्शनमन्यथा विध्यङ्गस्य* वैधबाधाक्षमत्वात्।

---

* म पुस्तके—अन्यथाविध्यङ्गस्य।

न च जन्मराश्यादिगतचन्द्रादिव्यतिरिक्तस्थले राहुर्वीक्षितव्य इति पर्य्युदासः।

भवेदेवं यदि वीक्षणविधिर्मुख्यस्तिष्ठेत्, न च तथा वीक्षणस्य स्वतोऽनुपादेयत्वात् किन्तु वीक्षणानन्तरं स्नानदानादीनामेवोपादेयत्वात् तेष्वेव विधिप्रवृत्तेः। दृश्यते च सर्व्वत्र स्नानादिष्वेव विधिः।

यथा शातातपः—

सर्व्वस्वेनापि कर्त्तव्यं श्राद्धं वै राहुदर्शने।
अकुर्व्वाणस्ततः श्राद्धं* पङ्के गौरिव सीदति॥

यमः—

स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने।

देवलः—

राहुदर्शन संक्रान्ति-विवाहात्यय-वृद्धिषु।
स्नानदानादिकं कुर्य्युर्निशि काम्यव्रतेषु च॥

विष्णुः—

सन्ध्यारात्रदर्शने कर्त्तव्यं श्राद्धं खलु विचक्षणैः।
तयोरपि च† कर्त्तव्यं यदि स्याद्राहुदर्शनम्॥
राहुदर्शनदत्तं हि श्राद्धमाचन्द्रतारकम्।
गुणवत् सर्व्वकामीयं पितृणामुपतिष्ठते॥

* क पुस्तके अकुर्व्वाणस्तु शङ्कास्पदम्।

† ख पुस्तके तत्रापि कर्म्म।

[अन्ये तु—

रिष्टस्थले राहुमदृष्ट्वा राहुदर्शनं निर्णीय स्नानादिकं कार्य्यम् ।

न च दर्शनस्यैव निमित्तत्वाद्दर्शनपदस्य चाक्षुषज्ञाने शक्तत्वात् ज्ञानमात्रपरत्वे लक्षणाप्रसङ्गात् द्वीपान्तरे रात्रौ सूर्य्यग्रहणे दिवा चन्द्रग्रहणे च मेघाच्छन्नतया च केषामप्यदर्शने वा शास्त्रमात्रज्ञानेनातिप्रसङ्गाच्चानुचितमिदमिति वाच्यम् ।

निमित्तस्य ज्ञानाभावादसत्कल्पतया पुरुषप्रवृत्तेरभावात् विधेस्ताटस्थ्यात् वैदिकस्थले सर्व्वत्रैव लाघवात् ज्ञायमानस्यैव सतो निमित्तत्वं क्लृप्तं नतु स्वरूपतः ततश्च निमित्तस्य ज्ञानमपेक्षणीयम् ।

अतएव नैमित्तिके निमित्तनिश्चयवानधिकारीति निमित्तस्य निश्चयज्ञानमपेक्षणीयमेवेत्युक्तम् ।

ततश्च —

दिवाकरकरैः पूतं दिवास्नानं प्रशस्यते ।
अप्रशस्तं निशि स्नानं राहोरन्यत्र दर्शनात् ॥

इति पराशरवचने पूर्व्वोक्तशातातप-यम-देवल-विष्णुवचनेषु च राहुदर्शनस्यैव निमित्तत्वावगमा*त्तस्य च राहुविषयकचाक्षुषज्ञाननिमित्तस्य ज्ञानान्तरापेक्षणात् शब्दादिप्रमाणेन निश्चयज्ञानान्तरसद्भावे एव स्नानदानादिकर्म्मणामधिकारः ।

यत्र तु चाक्षुषज्ञानमात्रं तत्रानुव्यवसायेन ज्ञायमानत्वं

ख पुस्तके—[ ] चिह्नितमत्र नोल्लिखितम् ।

* ख पुस्तके - निमित्तत्वमवगम्यते ।

*अनुव्यवसायाभावेन हि तस्य प्रमाणाभावात्। दिवा चन्द्रोप-रागादिस्थले तु द्वीपान्तरवासिनां चाक्षुषज्ञानस्य शब्दादिप्रमाणान्तरावेद्यतया निश्चयाभावान्निमित्तत्वाभावः।

ततो राहुमदृष्ट्वापि अस्मदीयराहुगोचरचाक्षुषज्ञानं प्रमाणान्तरेणावधार्य्य स्नानदानादिकं कार्य्यं अन्यथा प्रथमदृष्टराहोर्वंचनेन पश्चात् मेघाच्छन्नत्वेनाजातराहुदर्शनस्य स्नानादौ प्रवृत्तिर्न स्यात् दृश्यते हि तथा।

अतएव श्रीभागवते कुरुक्षेत्रे सूर्य्यग्रहणे अन्धस्य धृतराष्ट्रस्य गमनवर्णनं सङ्गच्छते नारायणोपाध्यायेनापि समयप्रकाशे ग्रहणस्नानदानादावन्धस्याप्यधिकारोऽस्तीत्युक्तमेवेत्याहुः।]

होरासारे- -जन्मादिचन्द्रे दृष्टे राहौ प्रतीकारमाह—

जन्माष्ट जायान्त्य-ख धर्म्मसंस्थे
निशाकरे जन्मसु तारकासु।
दृष्ट्वा तमश्चन्द्रमसं प्रयत्ना-
दभ्यर्च्य दद्यात् कनकं द्विजाय॥

शुद्धिदीपिकायाम्—

गुर्व्वादित्ये गुरौ सिंहे नष्टे शुक्रे मलिम्लुचे।
याम्यायने हरौ सुप्ते सर्व्वकर्म्माणि वर्ज्जयेत्॥

गुर्व्वादित्यादिषु सम्भवत्कालान्तरकाणि काम्यनैमित्तिकानि सर्व्वकर्म्माणि वर्ज्जयेत्। असम्भवत्कालान्तरन्तु कर्त्तव्यमेव।

---

*न पुस्तके अर्थव्यवसाया—।

यथा गृह्यपरिशिष्टम्—

मलं वदन्ति कालस्य मासं कालविदोऽधिकम्।
नेहेतात्र विशेषेणाऽत्यमन्यत्रावश्यकाद्विधेः॥

तेन नित्यमहरहःकृत्यमसम्भवत्कालान्तरव्यापाटवादिनिमित्तकं *ग्रहशान्त्यादि काम्यमपि कर्त्तव्यमेवेति।

गुर्व्वादित्ययोगस्तु द्विविधः—

जीवार्कयोरेकराशिगतत्वेनैकनक्षत्रगतत्वेन च। एकनक्षत्र-गतत्वन्तु भिन्नराशिगतत्वे सतीति बोध्यम्।

तथाच कश्यपः—

ऋक्षैकमन्दिरगतौ यदि जीवभानू
शुक्रोऽस्तगः सुरवरैकगुरुश्च सिंहे।
नारभ्यते व्रतविवाहगृहप्रतिष्ठा-
चौरादिकर्म्म गमनागमनञ्च धीरैः॥

नारभ्यत इत्यनेनारब्धव्रतन्तु कर्त्तव्यमेवेति तात्पर्य्यं, गुरौ सिंहे इति।

तथाच राजमार्त्तण्डे—

यात्रां चूडां विवाहं श्रुतिविवरविधिं याग*सद्मप्रवेशौ
प्रासादोद्यानहर्म्यं ग्रामर नरभवनारम्भविद्याप्रदानम्।
मौञ्जीबन्धं प्रतिष्ठां मणिरदकनकाधारणं कुर्व्वते ये
मृत्युस्तेषां ध्रुवो†ऽयं गुरुदिनकरयोरेकराशिस्थयोश्च॥

* ग पुस्तके याग।
† ग पुस्तके—तेषाञ्च सिंहे।

हरीज्ये सिंहस्थबृहस्पतौ यात्रां प्रथमतीर्थयात्रां राज्ञो विजययात्राञ्च।

यथा राजमार्त्तण्डे—

अनादिदेवतां दृष्ट्वा शुचः स्युर्नष्टभार्गवे।

मलमासेऽप्यनाहूतं तीर्थस्नानमपि त्यजेत्॥

मलमासेऽपीत्यपिशब्दात् गुर्व्वादित्यादीनामपि ग्रहणं, अनाहूतं प्रथमम्, अनाहूतमिति देवतादर्शनेऽपि सम्बध्यते।

भीमपराक्रमे—

वापी-कूप-तड़ाग-याग-गमनं क्षौरं प्रतिष्ठाव्रतं

विद्या-मन्दिर कर्णवेधन-महादानं वनासेवनम्।

तीर्थस्नान-विवाह-देवभवनं मन्त्रादि*देवेक्षणं

सिंहेज्ये गुरुभास्करे परिहरेत् क्षीणे तथास्ते भृगौ॥

वनासेवनं वानप्रस्थाश्रमग्रहणं मन्त्रो मन्त्रग्रहणं आदिदेवेक्षणं प्रथमदेवदर्शनमित्यर्थः।

तथा—— विवाह-चूड़ा-व्रत-कर्णवेध-

वापीप्रतिष्ठार्च्च-गृहप्रवेशाः।

सुवर्ण शय्याद्युपभोगविद्या

सिंहे सुरेज्ये न शुभप्रदा स्यात्॥

अत्र च सिंहबृहस्पतौ विवाहे विशेषमाह राजमार्त्तण्डे——

गुरौ हरिस्थे न विवाहमाहु-

र्हारीत-गार्ग्यप्रमुखा मुनीन्द्राः।

* ख-पुस्तके- चानादि।

*यदा न माघी मघसंयुता स्या-

त्तदा तु कन्योद्वहनं वदन्ति ॥

हरिस्थे सिंहस्थे यस्मिन्नब्दे माघी पौर्णमासी मघानक्षत्रयुक्ता न स्यात् तस्मिन्नब्दे कन्याविवाहे सिंहस्थबृहस्पतिदोषो नास्तीत्यर्थः। तथा भीमपराक्रमे--

मघायोगविनिर्मुक्ता यदा माघी भवेत् क्वचित्।

तत्रोद्वाहादिकं कार्य्यं सिंहे गुरुरकारणम् ॥

तथा—मघाक्षर्क्षं परित्यज्य यदा सिंहे गुरुर्भवेत्।

विवाहस्तत्र कर्त्तव्यो मुनिभिः परिकीर्त्तितः ॥

अत्र च वक्रातिचारेण राश्यन्तरसञ्चारे सिंहस्थबृहस्पतिदोषो नास्ति किन्तु वक्रातिचारोक्तदोषमात्रमेव।

तथा राजमार्त्तण्डे--

हारीत माण्डव्य-पराशराद्या

गर्गाङ्गिराद्या मुनयो वदन्ति।

वक्रातिचारे सुरराजमन्त्री

यत्रागतस्तत्र फलं ददाति ॥

यच्च—

गुर्व्वादित्ये दशाहानि गुरौ सिंहे द्विमासकम्।

गुरोर्वक्रातिचाराभ्यामष्टाविंशतिवासरान् ॥

इति वचनं तत्कालक्षेपासहिष्णुकर्म्मणि दशाहादीनां वर्ज्जनीयत्वा-वश्यम्भावप्रतिपादनपरम् ततःपरन्तु कालक्षेपासहिष्णु कर्म्मैव कर्त्तव्यं न तु सर्व्वं कर्म्मेति ध्येयम्।

नष्टे शुक्रे इति विकारापत्तिर्नष्टत्वं तच्चतुर्धा भवति हृद्यत्व-सम्ध्यास्तंगतत्व-बालत्वभेदेन तत्र चास्मात् पूर्व्वं हृद्यत्वं सम्ध्यागतत्वञ्च उदयात्परन्तु अस्तगमनं बालत्वम्।

एषाञ्च दिङ्नियम उक्तः सूर्य्यसिद्धान्ते—

अथोदयास्तमययोः परिज्ञानं प्रकोर्त्त्यते।
दिवाकरकराक्रान्तमूर्त्तीनामल्पतेजसाम्॥
*अल्पा विवस्वतः प्राच्यामस्तं चन्द्रज्ञभार्गवाः।
व्रजन्त्यभ्यधिकाः पश्चादुदयं मन्दतेजसः† ॥
सूर्य्यादभ्यधिकाः पश्चादस्तं जीवकुजार्कजाः।
ऊनाः प्रागुदयं यान्ति शुक्रज्ञौ वक्रिणौ तथा॥

सूर्य्यलुप्तकिरणतया अदृश्यत्वमस्तत्वं सूर्य्ययुक्तकिरणतया च दृश्यत्वमुदय इति अस्तोदययोर्लक्षणं दिवाकरेत्यादिना विवृतम्।

विवस्वतो न्यूनाः सन्तश्चन्द्रज्ञभार्गवाः प्राच्यां स्वभावतोऽस्तं यान्ति ततस्तत्रैषां हृद्यत्वं सूर्य्यस्फुटादधिकाः सन्तः प्रतीच्यामुदयं यान्ति अतस्तत्रैषां बालत्वम्।

जीवश्चकुजार्कजाश्च सूर्य्यस्फुटादधिकाः सन्तः पश्चिमदिशि अस्तं यान्ति एते तु सूर्य्यादूनाः सन्तः प्राच्यामेवोदयं यान्ति बुध-शुक्रयोस्तु वक्रदशायामपि सूर्य्येण स्थितिसम्भवात् तथा पश्चिमेऽप्य-स्तत्वं हृद्यत्वञ्च तदा प्राच्यामुदयो बालत्वञ्चेति।

* ग पुस्तके अल्पेत्यादि वचनं पतितम्।
† ख पुस्तके शीघ्रगामिनः।

तथाच तत्रैव :—

समागमः शशाङ्केन सूर्य्येणास्तमयः सदा । इति ॥

जीवकुजार्कजानान्तु सूर्य्यात् षष्ठसप्तमाष्टमेषु वक्रत्वनियमात् सूर्य्येण सहस्थित्यभावात् वक्रदशायामस्तता नास्त्येवेति ध्येयम् ।

तथाच— पश्चिमेऽस्तं प्रागुदयो वक्रत्वे बुधशुक्रयोः ।

स्वभावेऽस्तमयः पूर्व्वे पश्चिमे तूदयस्तयोः ॥

बालत्वादीनां कालनियम उक्तो भीमपराक्रमे—

पश्चादभ्युदितो बालो दशाहं प्राग्दिनत्रयम् ।

पचं वृद्धो भृगुः पूर्व्वे पश्चाहं पश्चिमे स्थितः ॥

स्वभावेन पूर्व्वस्यां स्थितो यदास्तं याति तदा पक्षमेकं वृद्धः स्यात् वक्रदशायान्तु पश्चिमस्थितो उदयास्तं याति तदा पश्चाहं वृद्ध इत्यर्थः ।

तथाच राजमार्त्तण्डे—

बालो दशाहान्युदितोऽपरेण

पूर्व्वेण बालो दिवसत्रयं स्यात् ।

वृद्धस्तु पूर्व्वेण च पक्षमेकं

पश्चात् स्थितः पञ्चदिनानि शुक्रः ॥

भवेत्सन्ध्यागतः पश्चादस्तमेति दिनत्रयम् ।

दिनानि पञ्च पूर्व्वे तु भृगुः पूर्व्वं विवर्ज्जयेत् ॥

अपरेण प्रतीच्यामुदितो दशाहानि बाल इत्यर्थः पश्चिमे स्थित्वा-वक्रदशायां यदास्तमेति तदा भृगुर्द्दिनत्रयं सन्ध्यागतो भवेत् तत्र च पञ्चदिनानि वृद्धत्वमुक्तं तन्मध्यएवास्तसमीपदिनत्रयं

सन्ध्यागत इत्यर्थः। यदा तु प्राच्यां स्थितः स्वभावेनास्तमेति तदा च पञ्चदिनानि सन्ध्यागतो भवेत् तत्र च पञ्चमिकं वृद्धत्वमुक्तं तन्मध्य एवास्तसमीपदिनपञ्चकं सन्ध्यागतो भृगुर्भवेदित्यर्थः। एतत्सर्व्वं बालत्वं वृद्धत्वं सन्ध्यागतत्वमस्तत्वञ्च वर्ज्जयेदित्यर्थः।

यद्यपि वृद्धत्वमध्य एवास्तगतत्वं तथापि दोषभेदात् संज्ञाभेदः क्रियते।

यथा राजमार्त्तण्डे—

बालभृगौ परिणीता युवतिरसाध्वी भवेन्नियतम्।
वृद्धे तस्मिन् वन्ध्या सन्ध्यास्ते मृत्युमायाति॥
एवं चतुर्विधे शुक्रे सर्व्वकर्म्माणि वर्ज्जयेत्।

मलिम्लुच इति मलमासः पश्चादभिधास्यते। याम्यायन इति दक्षिणायन इत्यर्थः। आषाढ़ेऽपि हरिशयनसम्भवादिति हरौ सुप्त इति न पुनरुक्तम्। अथ यत्र यत्र विशेषविधिस्तत्र तत्र विधिवैयर्थ्यभयात्तत्कर्म्म कर्त्तव्यमेव यथा श्रावणे गृहारम्भो भाद्रेऽनन्तव्रतादिः।

गुरौ वक्रातिचारादौ निषेधमाह शुद्धिदीपिकायाम्

अतीचारगते जीवे वक्रे चास्तमुपागते।
व्रतोद्वाहौ न कुर्व्वीत जायते मरणं ध्रुवम्॥

व्रतमुपनयनं एतच्चोपलक्षणं यथा राजमार्त्तण्डे—

अस्तं प्रयाते च गुरौ भृगौ वा सूर्य्ये निरंशे शिमगौ प्रनष्टे।
न कूपवाप्यादिकमन्दिराद्यं* शुभं प्रदिष्टं धनकीर्त्तिनाशात्॥

---

* पुस्तके—मन्दिराद्यं च।

हिमगौ प्रनष्टेऽमावस्यायामित्यर्थः ।

तथा-- अतिचारगते जीवे वर्ज्जयेत्तदनन्तरम् ।
व्रतोद्वाहादिचूड़ासु अष्टाविंशतिवासरान् ॥

अष्टाविंशतिवासरानिति तु कालक्षेपासहिष्णु कर्म्म प्रत्येव वर्ज्जनस्यावश्यम्भावकथनपरमिति प्रागेव-व्याख्यातम् । अत्र च वक्रातिचारेण राश्यन्तरसञ्चारे सत्येव गुरोर्वक्रातिचारदोषो नान्यथेति ।

यथा भीमपराक्रमे--

वक्रातिचारोपगतः सुरेज्यो
यद्यन्यराशौ परिवर्ज्जनीयः ।
यथाक्रमस्थः स्वगृहस्थितो वा
न वर्ज्जनीयो यवना वदन्ति ॥ *

यथाक्रमस्थो यथाक्रमं यत्र स्थित्वा वक्रातिचारं करोति वक्रातिचारेणापि तत्रैव यदि तिष्ठतीत्यर्थः ।

राश्यन्तरसञ्चारेणापि स्वगृहं गतो वा जीवो यदि भवति तदापि न दोष इत्यर्थः ।

तथा तत्रैव--

*वक्रातिचारे सुरराजमन्त्री
यद्यन्यगेहात् स्वगृहं प्रयाति ।
तदा विवाहादिगृहप्रतिष्ठा
न वर्ज्जनीया मुनयो वदन्ति ॥

* ग पुस्तके वक्रेत्यादि वचनं नास्ति ।

तथा शुद्धिदीपिकायाम्—

त्रिकोणजायाधनलाभराशौ
वक्रातिचारेण गुरुः प्रयातः।
यदा तदा प्राह शुभे विलग्ने
हिताय पाणिग्रहणं वसिष्ठः॥

गुरुश्चेत् त्रिकोणादिराशौ वक्रातिचारवशात् यदि सञ्चरति तदा विवाहो हिताय स्यात् अत्रापि प्रयात इत्यनेन वक्रातिचारेण सञ्चारे सति यो दोषः स त्रिकोणादिराशौ नास्तीत्यर्थः।

महातिचारे वर्षपर्य्यन्तं कर्म्मलोपमाह भीमपराक्रमे—

कृत्वातिचारं यदि पूर्व्वगेहं
न याति मन्त्री विबुधाधिपानाम्।
यानं विवाहं व्रतचौड़गेहं
वर्षं तदा हन्ति मतं मुनीनाम्॥
अतिचारं गतो जीवः पूर्व्वराशिं न गच्छति।
नाचरेत्सर्व्वकर्म्माणि यावत्तत्रैव संस्थितः॥

यथा पशुपतिदीपिकायाम्—
अतिचारं गतो जीवः तत्रैव कुरुते स्थितिम्।
तदा महातिचारः स्यात् लुप्तसंवत्सरक्रियः॥

तत्रैवापवादमाह भीमपराक्रमे—
यदातिचारं सुरराजमन्त्री करोति गोमन्मथमीनसंस्थः।
न याति तं यद्यपि पूर्व्वराशिं शुभाय पाणिग्रहणं वदन्ति॥

अतिचारं गते जीवे मन्मथे चैव कर्कटे।
तदा न लुप्यते कालो वदत्येवं पराशरः॥

मन्मथो मिथुनराशिरित्यर्थः।

तथा अस्तं गते जीवे व्रतोद्वाहादिकं न कुर्य्यात्। यथा राजमार्त्तण्डे—

अस्तमिते भृगुपुत्रे कन्या म्रियते बृहस्पतौ पुरुषः।
उभयोरपि मरणं स्यात् केतौ पाणिग्रहेऽभ्युदिते॥

भीमपराक्रमे—

गुरोरस्ते पतिं हन्यात् शुक्रास्ते चैव कन्यकाम्।
चन्द्रे नष्टे उभावेव तस्मात्तत्परिवर्ज्जयेत्॥

हन्यात् विवाह इति शेषः।

विवाहे वर्षशुद्धिमाह राजमार्त्तण्डे—

वात्स्योऽब्दशुद्धिमाचष्टे ग्रहशुद्धिञ्च वाक्पतिः।
ग्रहवत्सरसंशुद्धौ विवाहं शुभदं जगुः॥
ग्रहवत्सरशुद्धिञ्च न प्रौढ़ा कालमीक्षते।

मासत्रयादूर्द्धमयुग्मवर्षे
युग्मेषु मासत्रयमेव यावत्।
विवाहशुद्धिं प्रवदन्ति सर्व्वे
वात्स्यायनो ज्योतिषि जन्ममासात्॥

गर्भमासान्विते युग्मे विवाहे स्यात् पतिव्रता।
अयुग्मे दुर्भगा नारी रोगशोकातुरा भवेत्॥

अष्टवर्षा भवेद्गौरी नववर्षा तु कन्यका।
प्राप्ते तु द्वादशे वर्षे परतस्तु रजस्वला॥
संप्राप्ते द्वादशे वर्षे कन्यां यो न प्रयच्छति।
मासि मासि रजस्तस्याः पिता पिबति शोणितम्॥
माता चैव पिता चैव ज्येष्ठभ्राता तथैव च।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम्॥
यस्तां विवाहयेत् कन्यां ब्राह्मणो *मदमोहितः।
असम्भाष्यो ह्यपाङ्क्तेयः स ज्ञेयो वृषलीपतिः॥
अतिप्रौढ़ा तु या कन्या नानुकूलं प्रतीक्षते॥

अतिप्रौढ़ाया ग्रहशुद्धिर्व्वत्सरशुद्धिश्च न विचार्य्या तत्र च शुक्रास्तादि-दोषोऽपि न विचार्य्य इत्यर्थः।

विवाहे मासशुद्धिमाह राजमार्त्तण्डे—

आषाढ़े धनधान्यभोगरहिता नष्टात्मजा* श्रावणे
वेश्या भाद्रपदे इषे च मरणं रोगान्विता कार्त्तिके।
पौषे प्रेतवती वियोगबहुला चैत्रे मदोन्मादिनी
अन्येष्वेव विवाहिता सुतवती नारी समृद्धा† भवेत्॥
ऊढ़ा दक्षिणमार्गगे दिनपतौ नैव प्रतिष्ठां व्रजेत्
कन्येत्याह समस्तशास्त्रकुशलो वेद्यो मुनीनां मतम्।

---

* ख पुस्तके—काम  * ग पुस्तके—नष्टप्रजा।
† ग पुस्तके—धनवती नारी सुपुत्रा भवेत्।

साध्वीत्युत्तरमार्गगे सुतधनोपेता विहायापरे
चैत्रं पौषयुतं हरेश्च शयनं शेषं जगुः शोभनम् ॥
मङ्गलेषु विवाहेषु कन्यासम्बरणेषु च ।
दशमासाः प्रशस्यन्ते चैत्रपौषविवर्ज्जिताः* ॥

एवञ्च मुनिमतद्वैधे शक्त्यशक्तिभेदेन व्यवस्थेत्यर्थः ।

कन्याजन्ममासे विवाहमाह राजमार्त्तण्डे—

जन्मर्क्षे जन्ममासे च तारायामथ जन्मनि ।
जन्मभे जन्मलग्ने वा कन्यकोढ़ा पतिप्रिया ॥
जन्ममासे च पुत्राढ्या धनाढ्या जन्मभोदये ।
जन्मभे च भवेदूढ़ा कन्यासन्ततिवर्द्धिनी ॥

जन्मर्क्षं जन्मनक्षत्रं इत्यर्थः ।

यच्च –

न जन्ममासे न च चैत्रपौषे
क्षौरं विवाहो न च कर्णवेधः ।

इति वचनम् । तद्वरस्य जन्मविषयम् ।

तथा तत्रैव—

जन्मोदये जन्मसु तारकासु
मासेऽथवा जन्मनि जन्मभे वा ।
व्रतेन विप्रोऽप्यवबुध्यतोऽपि
प्रज्ञाविशेषैः प्रथितः पृथिव्याम् ॥

* ग पुस्तके—दशमासान् प्रशंसन्ति.. तान् ।

यो जन्ममासे क्षुरकर्म्मयात्रां
कर्णप्रवेधं कुरुते विवाहम्।
नूनं स रोगान् बहुवित्तनाशं
प्राप्नोति मूढ़ो वधबन्धनानि॥

नित्यक्षौरविषय एवायं चैत्रनिषेधो नान्यक्षौरे "चूड़ा माघादि षट्के" इति शुद्धिदीपिकायां षट्कश्रवणात्।

तथाच राजमार्त्तण्डे—

माघादिषट्सु मासेषु शार्ङ्गिणः शयनावधि।
चूड़ाकर्म्म प्रशंसन्ति मुनयो व्रतकर्म्म च॥

अतएव शुद्धिदीपिकायां नित्यक्षौरे चूड़ाकरणधर्म्मातिदेशं कृत्वापि विशिष्य चैत्रमासो निषिद्धः।

यथा — चूड़ोदितर्क्षमुदयः क्षण एव चैषा
मिष्टौ बुधेन्दुदिवसौ क्षुरकर्म्मशुद्धौ।
नेष्टो हरीज्यभवनोपगतोऽत्र सूर्य्यः
कालाविशुद्धिरखिलं वितरत् पुरावत्॥

एषां चूड़ादिनक्षत्राणां क्षणो मुहूर्त्तो वेत्यर्थः। हरिः सिंहः, इज्यभवनं बृहस्पतिगृहं धनुर्मीनौ एषु गतः सूर्य्यो नेष्टः, इतरत् एतस्मादन्यत् सर्व्वं पूर्व्ववत् चूड़ाकरणवदित्यर्थः। किन्तु नित्य-क्षौरे शुक्रास्तादिकालाशुद्धिदोषो नास्तीत्यर्थः।

राजमार्त्तण्डे—

न स्नातमात्रगमनोत्सुकभूषितानां
मभ्यक्तमुक्तरणकामनिशामनानाम्।

सन्ध्या-निशा-परदिनेषु तिथौ च रिक्ते
क्षौरं हितं कुज-यमाह्नि नापि रिष्टौ ॥

स्नानमात्रस्तत्कालं कृतस्नानः अपरदिनं सायाह्नः ।

येन मानेन यत्कर्म्म कर्त्तव्यं तदाह सूर्य्यसिद्धान्ते,—

ब्राह्मं दैवं तथा पैत्रं प्राजापत्यं गुरोस्तथा ।
सौरञ्च सावनं चान्द्रमार्क्षं मानानि वै नव ॥
चतुर्भिर्व्यवहारोऽयं सौरचान्द्रर्क्षसावनैः ।
सौरेण द्युनिशोर्मानं षड़शीतिमुखानि च ॥
तुलादिषड़शीत्यङ्घ्रौ षड़शीतिमुखं क्रमात् ।
तच्चतुष्टयमेवं स्यात् द्विस्वभावेषु राशिषु ॥
षड्विंशे धनुषो भागे द्वाविंशेऽनिमिषस्य तु ।
मिथुनेऽष्टादशे भागे कन्यायाश्च चतुर्द्दशे ॥
ततः शेषाणि कन्याया यान्यहानि तु षोड़श ।
क्रतुभिस्तानि तुल्यानि पितॄणां दत्तमक्षयम् ॥
अयनं विषुवच्चैव संक्रान्तेः पुण्यकालता ।
अहोरात्रं कृतादीनां संख्या ज्ञेया यथोदिता ॥
भानोर्म्मकरसंक्रान्तेः षण्मासास्तूत्तरायणम् ।
कर्क्कादेस्तु तथैव स्यात् षण्मासा दक्षिणायनम् ॥
द्विराशिमाना ऋतवस्ते चापि शिशिरादयः ।
मेषादयो द्वादशैते मासाः संवत्सरः स्मृतः ॥

सौरादीनि चत्वारि मानानि विभिद्य वक्ष्यन्ते—तत्र सौरव्यवस्थया

यत्कृत्यं तदाह सौरेणेति युग्मिशोर्म्मानमित्यनेनाह षडहःकृत्यमपि सौरेणेति मन्तव्यम्।

षडशीतिमुखानि विष्णुपदीति तुलादीनि तुलादि सौरकार्त्ति कादीत्यर्थः द्विःस्वभावेषु द्व्यात्मकेषु तदेव विष्णुपदीति षड्विंशे धनुषो भाग इति धनिमिथो मीनः। सौराश्विनशेषषोडश दिनानि शुक्लकृष्णपक्षसाधारणानि श्राद्धेऽत्यन्तं प्रशस्तानि क्रतु-तुल्यफलजनकतया काम्यानीत्यर्थः। कृतादीनां सत्ययुगादीनां संख्या सौरेणैवेत्यर्थः। कर्क्यादिः कर्कटसंक्रान्तितः षण्मासा दक्षिणायनम्। अतः सौरेणैव मानेनायनव्यवस्थेत्यर्थः। सूर्य्यभुक्तराशिद्वयमानेन माघादित ऋतवो भवन्ति ते च ऋतवः शिशिरादयः शिशिर-वसन्त ग्रीष्म वर्षा-शरद्धेमन्ताः उत्तरायणे ऋतुत्रयं दक्षिणायने च ऋतुत्रयमित्यर्थः तत्र मकरमारभ्य भानोर्द्विद्विराशिभोगकाल ऋतुरिति ऋतुलक्षणम्।

तथाच रत्नमालायाम्—

मृगादिराशिद्वयभागयोगात्*
षडर्त्तवः स्युः शिशिरो वसन्तः।
ग्रीष्मश्च वर्षाश्च शरच्च तद्व-
द्धेमन्तनामा कथितश्च षष्ठः॥

तथाच विष्णुपुराणे—

द्वौ मासावर्कजावृतुरित्यनेन सौरमानेनैव ऋतुपदमङ्गत उक्तः।

* ख पुस्तके भानुभोगात्।

तथाच शक्तिग्राहकशास्त्रेऽमरकोषे—

द्वौ द्वौ माघादिमासौ स्यादृतुस्तैरयनं त्रिभिः। इति।

अत्र तैरयनं त्रिभिरित्यनेन सौरमानेनैव ऋतुपदशक्ति-दर्शिता।

तथाच श्रुतिः—तपस्तपस्यौ शैशिरावृतुः

मधुश्च माधवश्च वासन्तिकावृतुः।

शुक्रश्च शुचिश्च ग्रैष्मावृतुः

अथैतदुदगयनं देवानां दिनम्॥

नभश्च नभस्यश्च वार्षिकावृतुः

इषश्चोर्ज्जश्च शारदावृतुः।

सहश्च सहस्यश्च हैमन्तिकावृतुः

अथैतद्दक्षिणायनं देवानां रात्रिः॥ इति

अत्र हि उत्तरायण-दक्षिणायनोपसंहारादयनस्य च सौरनियतत्वात् लक्षणया तपस्तपस्यादिपदानाञ्च सौरपरत्वात् श्रुत्यापि सौरेणैव मानेन ऋतुपदशक्तिः स्वरूसिता तेन तपस्तपस्यादिपदानां चान्द्रे मुख्यत्वानुरोधेन मुख्यचान्द्रमासद्वये केषाञ्चित् ऋतुपदवाच्यताभ्रमो हेय एव।

अतएव श्राद्धविवेके—

आश्वयुज्याश्च कृष्णायां त्रयोदश्यां मघासु च।

प्रावृड़्तौ यमः प्रेतान् पितॄंश्चाथ यमालयात्॥

इति वचनव्याख्यानावसरे प्रावृड़्तुरत्र "वृतः संवत्सरः" इति मतेनेति व्याख्यातम्।

अन्यथा मघात्रयोदश्यां मुख्यचान्द्रभाद्रीयत्वेन सुतरां प्राप्त-ऋतुगोचरत्वादन्यथा व्याख्यानमसङ्गतं स्यात्।

यच्च—मुख्यं श्राद्धं मासि मासि अपर्य्याप्तावृतुं प्रति।

इति मरीचिवचने चान्द्रेण ऋतुशब्दप्रयोगः। स च गौण एवावश्यं वाच्यः तस्य शिशिरादिशब्दवाच्यत्वाभावात्"न निर्विशेषं सामान्य-मिति न्यायेन" शिशिरादिषड़तिरिक्तत्वाभावाच्चेति।

यत्— विशेषतश्च कार्त्तिक्यां द्विजेभ्यः संप्रयच्छति।

शरद्व्यपाये रत्नानि पौर्णमास्यामिति स्थितिः॥

इत्यादिमत्स्यपुराणादिवचने पौर्णमास्यन्तगौणचान्द्रेण ऋतुसमाप्ति-रवगम्यते तत् पौर्णमास्यन्तमासद्वये शरदादिपदस्य भाक्तत्वात्।

न च वैपरीत्याशङ्का सङ्केतग्राहकशास्त्राभावात् अनुवाद-शास्त्रतः शक्तिग्राहकशास्त्राणां बलीयस्त्वाच्च श्रुतेरपि स्मृतेर्दुर्बलत्वा-च्चेति। प्रकृतमनुसरामः।

मेषादय इति—सौरसंवत्सराभिप्रायेणेदं किन्तु द्वादशमासाः संवत्सर इतिश्रुतेर्मासपदस्य च सौरचान्द्रर्क्षसावनेषु चतुर्ष्वेव शक्त-त्वेनान्विताया वक्ष्यमाणत्वात्।

सौरेणाब्दस्तु मानेन यदा भवति भार्गव।

सावने च तदा माने दिनषट्कं प्रवर्द्धते*॥

सौरसंवत्सरस्यान्ते मानेन शशिजेन तु।

एकादशातिरिच्यन्ते दिनानि भृगुनन्दन॥

---

* न पक्षते प्रपूर्य्यते।

इत्यादि विष्णुधर्म्मोत्तरवचनाच्च सौरादिभिश्चतुर्विधैर्द्वादशभि मासैश्चतुर्विधः संवत्सर इति ।

न चाधिमासपाते त्रयोदशभिश्चान्द्रमासैः संवत्सर इति वाच्यम्—

षष्ट्या तु दिवसैर्मासः कथितो वादरायणे ।
पूर्व्वमर्द्धं परित्यज्य उत्तरार्द्धं प्रशस्यते ॥

इति वचनेन मासद्वयस्यैकमासत्वाभिधानात् ।

अथवा धर्म्मकार्य्योपयुक्तैरेव द्वादशभिर्मासैश्चान्द्रवत्सरव्यवहारो न त्वधिकेनेति ध्येयम् ।

यात्रापि सौरेणैव कार्य्या यथा योगयात्रायाम्—

यात्राजसिंहतुरगोपगते वरिष्ठा
मध्या शनैश्चरबुधोशनसां गृहेषु ।
भानौ कुलीरझषवृश्चिकगेऽतिदीर्घा
शस्तस्तु देवलमतेऽध्वनि पृष्ठतोऽर्कः ॥

तुरगो धनुः शनैश्चरगृहं मिथुनं उशनाः शुक्रः तद्गृहं वृषतुले इत्यर्थः ।

पारस्करः विवाहोत्सवयज्ञेषु सौरमानं प्रशस्यते ।
पार्व्वणे त्वष्टकाश्राद्धे चान्द्रमिष्टं तथाब्दिके ॥

अतो— मङ्गलेषु विवाहेषु कन्यासंवरणेषु च ।
दशमासाः* प्रशस्यन्ते चैत्रपौषविवर्ज्जिताः ॥

इत्यादिराजमार्त्तण्डादिवचने विवाहे चैत्रादिपदं सौरचैत्रपरमिति बोद्धव्यम् ।

* ग पुस्तके दशमासान् पशंसन्ति... ...तान् ।

उक्तवाः पुंसवन सीमन्तोन्नयन-चूड़ाकरण-कर्णवेधोपनयनानि सौरेणैव कार्य्याणि।

यथा राजमार्त्तण्डे—

मासे द्वितीये ऽप्यथवा तृतीये पुन्नामधेये ग्रहवर्ज्जिते भे।
अक्षीणचन्द्रे कुजजीवभानुवारे शुभं पुंसवनाख्यकर्म्म॥

अथ याज्ञवल्क्यः—

षष्ठेऽष्टमे वा सीमन्तः प्रसवे जातकर्म्म च।

इति यो द्वितीयादिमासो विहितः स सौरेण ज्ञातव्यः।

तथा—

माघे द्रविणशीलाख्या फाल्गुने च दृढ़व्रतः।
चैत्रे भवति मेधावी वैशाखे कोविदो मतः॥
ज्येष्ठे गहननीतिज्ञ आषाढ़े क्रतुभाजनः।
शेषेष्वपि च मासेषु निषिद्धं मुनिभिर्व्रतम्॥

तथा -

माघादिषट्सु मासेषु शार्ङ्गिणः शयनावधि।
चूड़ाकर्म्म प्रशंसन्ति मुनयो व्रतकर्म्म च॥

इत्यादि राजमार्त्तण्डादिवचने यन्माघादिपदं तत्सौरेणैवेति। राजमार्त्तण्डेऽप्युत्तरायणविधानाच्च।

यथा—

उत्तरायणगते दिवाकरे वीर्य्यवत्सु गुरुचन्द्रभानुषु।
सौरिभेषु सकलेषु देहिनां मौञ्जिबन्धनविधिः प्रशस्यते॥

तथा — चूड़ाकर्म्म प्रकुर्व्वीत रवावुत्तरमार्गगे। इति

तथा—

न जन्ममासे न च चैत्रपौषे
चौरं विवाहो न च कर्णवेधः।

इति कर्णवेधादिषु चैत्रप्रतिषेधः सौरेणैव ज्ञातव्यः।

यज्ञेष्विति यज्ञपदेनात्र—

कर्त्तव्याग्रयणेष्टिश्च चातुर्मास्यानि चैव हि।

इति याज्ञवल्क्योक्तं वृहतुसंवत्सरनयेन मासचतुष्टयरूपकर्तुत्रयान्तेऽनुष्ठीयमानं चातुर्मास्याख्ययागत्रयमयनविहितपशुयागश्च गृह्यते। माससंवत्सरादिसाध्ययज्ञस्तु सावनेनैव कार्य्यः।

यथा सूर्य्यसिद्धान्ते—

उदयादुदयं भानोः सावनाहः प्रकीर्त्तितम्।
सावनानि स्युरेतेषां यज्ञकालविधिस्तु तैः॥
सूतकादिपरिच्छेदो दिनमासाब्दपास्तथा।

सावनानीति-त्रिसवनस्नानादिकं यदुक्तं तदेतेषां सावनाह्नानामेवेत्यर्थः। यज्ञस्य माससंवत्सरादिपरिमाणकालविधिरित्यर्थः।

सूतकादिपरिच्छेद इति--

शूद्रो मासेन शुध्यतीत्यादिना यन्मासाद्यशौचमुक्तं तत्सावनेनैवेत्यर्थः। आदिग्रहणाद्भृतिसद्विप्रायश्चित्तादीनां ग्रहणम्।

यथा—

पणो देयोऽवकृष्टस्य षडुत्कृष्टस्य वेतनम्।
षाण्मासिकस्तथाच्छादो धान्यद्रोणस्तु मासिकः॥

इति मनुना—

अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके।
वर्णक्रमाच्छतं द्वित्रिचतुःपञ्चकमन्यथा॥

इति याज्ञवल्क्येन च यद्वृतिवृद्धिदानमुक्तं तत्सावनमानेनैवेति।

तथा—

अनेन विधिना यस्तु गोघ्नो गामनुगच्छति।
स गोहत्याकृतं पापं त्रिभिर्मासैर्व्यपोहति॥

तथा—

ब्रह्महा द्वादशाब्दानि कुटीं कृत्वा वने वसेत्।

इत्यादि यन्मनुना प्रायश्चित्तमुक्तं तदपि सावनेनैव। चान्द्रायण-व्रतमात्रन्तु चान्द्रेण ज्ञेयम्।

तिथिवृद्ध्याचरेत् पिण्डान् शुक्ले शिखण्ड*सम्मितान्।
एकैकं ह्रासयेत् कृष्णे पिण्डं चान्द्रायणं चरन्॥

इति याज्ञवल्क्यवचनात्।

तथा विष्णुधर्म्मोत्तरे—

अध्वायनञ्च यज्ञचारकर्म्म
सौरेण मासेन सदाध्यवस्येत्।
सत्राण्युपास्यान्यथ सावनेन
लौक्यञ्च यत् स्यात् व्यवहारकर्म्म॥

अध्वायनं यात्रा, सत्राणि माससंवत्सरादिसाध्यानि, लौक्यं लौकिकं व्यवहारकर्म्म भृतिवृद्ध्यादिकम्।

* ग पुस्तके—शिखण्ड।

तथा पितामहः—

आब्दिके पितृकृत्ये च* मासश्चान्द्रमसः स्मृतः ।

विवाहादौ स्मृतः सौरो यज्ञादौ सावनो मतः ॥

विवाहादावित्यादिपदं पारस्करोक्तोत्सवपदवाच्यसीमन्तोन्नयन चूड़ाकरणादिपरम् । यज्ञादावित्यादिपदम् आयुःप्रमाणादीनां ग्रहणम् ।

यथा होरासारे—

गृहप्रवेशं गृहकर्म यात्रां

सौरेण मानेन सदैव कुर्य्यात् ।

वृद्धिग्रहं सावनतस्तथायु-

र्मानञ्च यत्तद्विहितञ्च कर्म ॥

गृहकर्म गृहारम्भः, आयुर्मानम् आयुर्गणना दशान्तर्दशाविवेकश्च यच्च तद्विहितं तेन आयुर्मानेन विहितं कर्म तदपि सावनमानेनैव ।

यथा गर्भमासान्विते युग्मे विवाहे स्यात् पतिव्रता ।

अयुग्मे दुर्भगा नारी रोगशोकातुरा भवेत् ॥

अष्टवर्षा भवेत् गौरी नववर्षा तु कन्यका ।

अर्केऽनुकूले शशिनि प्रशस्ते

तारावले चन्द्रविशुद्धपक्षे ।

अयुग्मवर्षे शुभदः शिशूनां

कर्णप्रवेधः सुरकर्म चाद्यम्† ॥

* क पुस्तके—पितृकार्य्येषु ।

† ख पुस्तके—कर्णप्रवेधो मुनिभिः प्रदिष्टः ।

प्रथमेऽब्दे तृतीये वा पञ्चमे वा यथाकुलम्।

चूड़ा कार्य्या न युग्मे तु वर्षे मासे कदाचन॥

इति राजमार्त्तण्डवचनेषु विवाह-चूडाकरण-कर्णवेधेषु आयुःप्रमाण विहितेषु युग्मायुग्माब्दविचारोऽष्टमादिविचारश्च सावनेनैवेति।

अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः।

षष्ठेऽन्नप्राशनं मासि चूड़ा कार्य्या यथाकुलम्॥

गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनयनम्।

राज्ञामेकादशे सैके विशामेके यथाकुलम्॥

इति याज्ञवल्क्यवचने नामकरणनिष्क्रमणान्नप्राशनोपनयनेष्वा युर्मानविहितेषु चतुर्थषष्ठमासाष्टमाब्दादिविचारः सावनमानेनैव कार्य्य इति।

चान्द्रमानेन व्यवस्थामाह पारस्करः—

पार्व्वणे त्वष्टकाश्राद्धे चान्द्रमिष्टं तथाब्दिके। इति

मासि मास्यपरपक्षस्यापराह्णः श्रेयान्।

इत्यापस्तम्बवचने—

श्राद्धमग्निमता कार्य्यं मासि मास्युडुपक्षये।

इति मत्स्यपुराणे च यन्मासपदं तच्चान्द्रमानेनैवेति।

तथा—

शाकन्तु फाल्गुनाष्टम्यां स्वयं पत्न्यपि वा पचेत्।

इति छन्दोगपरिशिष्टे—

पौषे कृष्णाष्टकायान्तु शाकैः सन्तर्पयेत् पितॄन्।

इति ब्रह्मपुराणे च यदष्टकाश्राद्धं विहितं तच्चान्द्रमानेन।

तथा —

आब्दिके प्रत्याब्दिकविहिते सांवत्सरिकश्राद्धेऽपि चान्द्रमान-मिष्टमित्यर्थः।

तथा—

आब्दिके पितृकृत्ये च मासश्चान्द्रमसः स्मृतः। इति।

अत्र केचित्-अष्टकाश्राद्धसाहचर्य्यात् पौर्णमास्यन्तगौणचान्द्रमानेन सांवत्सरिकश्राद्धव्यवस्था ततश्च तन्मासपुरस्कारेण वागभिलापश्च फलमाहुः। तदशुद्धम्। पूर्व्वोक्तपितामहवचने मुख्यचान्द्र-ग्रहणात्।

चक्रवत् परिवर्त्तेत सूर्य्यः कालवशाद्यतः।
अतः सांवत्सरं श्राद्धं कर्त्तव्यं मासचिह्नितम्॥
मासचिह्नन्तु कर्त्तव्यं पौषमाघाद्यमेव हि।
यतस्तत्र विधानेन मासः स परिकीर्त्तितः॥

इति हारीतेन चक्रवत्परिभ्रमणवशेन सूर्य्यगतेर्मन्दत्वशीघ्रत्वाभ्यां कदाचिदेकराशिभोगे तिथिद्वयप्राप्तौ श्राद्धसंशयात्कदाचिद्वा मृत-तिथेरलाभे श्राद्धलोपापत्तेः। तदा च प्रतिसंवत्सरं कुर्य्यादिति विधिबाधापत्तेः।

सौरमासचिह्नं विहाय पौषमाघादिचान्द्रमासचिह्नस्योक्तत्वात् मुख्यचान्द्रेचैव पौषमाघादिपदानां शक्तत्वात् यतस्तत्र सांवत्सर-श्राद्धे विधानेन शास्त्रेण—

इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्त्तितः।
अग्नीषोमौ स्मृतौ मध्ये समाप्तौ पितृसोमकौ॥

इति तदीयवचनोक्तः स मुख्यचान्द्रो मासः परिकीर्त्तित इत्युपसंहृतत्वाच्च मुख्यचान्द्रेणैव सांवत्सरं श्राद्धं पार्व्वणे त्वष्टकाश्राद्ध इत्यनेन तु चान्द्रमानमात्रमुक्तम्।

न च तत्र चान्द्रमाने यो यो विशेषो यत्र यत्र सम्भवति तत्र स विशेषो ग्राह्य इति कुतोऽत्र साहचर्य्यापेक्षेति।

अन्यथा—

संवत्सरस्य मध्ये तु यदि स्यादधिमासकः।

तदा त्रयोदशे मासि क्रिया प्रेतस्य वार्षिकी॥

इति विष्णुधर्म्मोत्तरवचनात् मलमासे मरणे शुक्लपक्षवत् कृष्णपक्षमरणेऽपि त्रयोदशमास्येव वार्षिकश्राद्धं निर्णीतं तत्र मुख्यचान्द्रव्यवस्थयैव त्रयोदशमासे मृतमासीयतिथिप्राप्तिः स्यान्नतु गौणचान्द्रव्यवस्थया द्वादशमास्येवेति मद्वद्वैशसं प्रतिपद्यते।

न च मलमासमरणे द्वादशमासि वार्षिकं श्राद्धमिति वाच्यम्। शुक्लपक्षमरणे त्रयोदशमास्येव मृतमासीयतिथिप्राप्तेस्तत्र किञ्चिद्देतत्।

यच्च केचित्—

यस्मिन्राशिगते भानौ विपत्तिं यान्ति मानवाः।

तेषां तत्रैव कर्त्तव्या पिण्डदानोदकक्रिया॥

इति सत्यव्रतनाम्ना वचनम्—

यस्मिन्राशिगते भानौ विपत्तिः स्याद्द्विजन्मनः।

तस्मिन्नेव प्रकुर्व्वीत पिण्डदानोदकक्रियाः॥

इति व्यासनाम्ना वचनञ्च पठित्वा सौरेणैव व्यवस्थामाहुः।

तदयुक्तं एतयोर्निर्मूलत्वात् । कदाचिद्रवेर्मन्दभोगेन सौरमासे तिथिद्वयप्राप्तौ श्राद्धद्वयप्रसङ्गात् कदाचिच्च शीघ्रभोगेन मृततिथ्यलाभे श्राद्धलोपप्रसङ्गाच्च तदा "मृताहे प्रति संवत्सरं कुर्य्यात्" इति विधिबाधः स्यात् समूलत्वेऽपि पूर्व्वोपन्यस्तपारस्कर हारीतपितामहवचनविरोधात् ।

मलमासमृतानान्तु श्राद्धं यत्प्रतिवत्सरम् ।
मलमासेऽपि कर्त्तव्यं नान्येषान्तु कदाचन ॥

इति पैठीनसिवचनैकवाक्यतया च मलमासे मृतस्य कदाचिद्वत्सरान्तरे तस्मिन्नेव मासे मलमासेऽपि तत्रैव सौरेणाब्दिकश्राद्धं न तु प्रकृतपरमासे इत्येतद्वचनद्वयस्यार्थ इति ।

तिथिव्यवस्थापि चान्द्रमानेनैव तथा सूर्य्यसिद्धान्ते—

अर्काद्विनिःसृतः प्राचीं यद्यात्यहरहः शशी ।
भागैर्द्वादशभिस्तत्स्यात्तिथिश्चान्द्रमसं दिनम् ॥

तत्प्रत्यहं चन्द्रस्य प्रयाणं द्वादशभिरंशैः परिमितं तिथिरेका स्यादित्यर्थः ।

*[युगाद्यादितिथिकृत्यानान्तु ब्रह्मपुराणे पौर्णमास्यन्तचान्द्रमासेन व्यवस्थापितत्वात् तानि चान्द्रेणैव कार्य्याणि ।] दुर्गोत्सवोऽपि पौर्णमास्यन्तमासमुपक्रम्य ब्रह्मपुराणादिषु विधानाच्चान्द्रेणैव कार्य्यः ।

यच्च—

कन्यास्थे च रवौ वत्स शुक्लामारभ्य नन्दिकाम् ।

* ग पुस्तके चिह्नितांशः पतितः ।

इति कालिकापुराणवचनं तत् कन्यासम्बन्धेन प्राशस्त्यपरं अथवा कन्यास्थे रवौ या शुक्ला नन्दा प्रतिपत् तामारभ्येति तस्यार्थः—कन्यास्थरविप्रारब्धत्वेन तस्यैव पक्षस्य चान्द्राश्विनमासीयत्वात्।

तत्र तिथेरपि सौरमासि कदाचिदप्राप्तौ लोपप्रसङ्गात् चान्द्रेणैव व्यवस्था रोहिण्यष्टमी-रामनवम्यादीनां भगवज्जन्म-तिथीनां ब्रह्मपुराणादौ चान्द्रेणैव व्यवस्थादर्शनाच्च।

उपाकर्म्मणोऽपि—

अध्ययनमुपाकर्म्म श्रावण्यां श्रवणेन वा। इति याज्ञवल्क्यवचना च्चान्द्रेणैव व्यवस्था।

तथाच—उपाकर्म्म तथोत्सर्गः प्रसवाहोऽष्टकादयः।
मासवृद्धौ पराः कार्य्या वर्ज्जयित्वा तु पैतृकम्॥

इति गृह्यपरिशिष्टवचनं तस्यार्थः—

प्रसवाहो जन्मतिथिः मासवृद्धौ मलमासपाते मासद्वया तिथिद्वयप्राप्तौ पर एव प्रकृतमासि उपाकर्म्मादिकं कार्य्यं न तु पूर्व्वस्मिन् मलमासे पैतृकं सपिण्डीकरणं वर्ज्जयित्वा तत्तु मल मास एव कार्य्यमिति वक्ष्यते ततश्चोपाकर्म्मादिकं चान्द्रेणैव कर्त्तव्यमित्यायातम्।

नाक्षत्रमासोऽपि क्वचित् कर्म्मणि विहितः।

यथा विष्णुधर्म्मोत्तरे—

नक्षत्रसत्राण्ययनानि चेन्दो-
र्मासेन* कुर्य्याद्ग्रहगणात्मकेन।

* क पुस्तके—मानेन।

नक्षत्रसत्राणि मासयज्ञविशेषा याज्ञिकप्रसिद्धाः, इन्दोरयनानि सोमायनाख्यसत्राणीत्यर्थः।

'केचिद्बहुतरवचनदर्शनात् चान्द्रमासार्द्धे पक्षपदशक्तिमाहुः। यथा वायुपुराणे—

शुक्लपक्षस्य पूर्व्वाह्णे श्राद्धं कुर्य्याद्विचक्षणः।
कृष्णपक्षापराह्णे तु रौहिणन्तु न लङ्घयेत्॥

मनुः— यथा चैवापरः पक्षः पूर्व्वपक्षाद्विशिष्यते।
तथा श्राद्धस्य पूर्व्वाह्णादपराह्णो विशिष्यते॥

ब्रह्मपुराणे—अश्वयुक्कृष्णपक्षे तु श्राद्धं कुर्य्याद्दिने दिने।

कात्यायनः—

शाकेनाप्यपरपक्षं नातिक्रामेत्। इति।

तस्मन्द्ं सावर्नेषु पञ्चदशाहोरात्रेषु पक्षपदस्य सङ्केतात्। यथा विष्णुपुराणे—

त्रिंशन्मुहूर्त्तं कथितमहोरात्रन्तु यन्मया।
तानि पञ्चदश ब्रह्मन् पक्ष इत्यभिधीयते॥

तथा चामरकोषे—

ते तु त्रिंशदहोरात्रः पक्षस्ते दशपञ्च च।

नचोभत्र शक्तिगौरवात् निरूढ़लक्षणया प्रतिपदादिपञ्चदशतिथिप्रचये प्रयोगिनां समर्थितत्वात्।

*[ न च वैपरीत्याशङ्का सङ्केतग्राहकशास्त्राभावात् अनुवादशास्त्रतः शक्तिग्राहकशास्त्रस्य बलीयस्त्वाच्च।

* ग पुस्तके—चिह्नितांशः पतितः।

पक्षौ पूर्वापरौ शुक्लकृष्णौ मासस्तु तावुभौ।

इत्यमरकोषेऽपि शुक्लकृष्णयोर्विधेयत्वेन पक्षपदस्यानुवादकत्वाच्च। न च प्रयोगभूयस्त्वदर्शनाशङ्का निरूढलक्षणायाः शक्तितुल्यत्वाटिति।]

—

## अथ मासपदार्थो निरूप्यते।

अत्र केचित्—

हारीतेन चान्द्रमासि मासशब्दस्य सङ्केतितत्वात्तत्रैव मासशब्दो मुख्योऽन्यत्र भाक्तः।

यथा हारीतः—

> इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्त्तितः।
> अग्नीषोमौ स्मृतौ मध्ये समासौ पितृसोमकौ॥
> तमतिक्रम्य तु रविर्यदा गच्छेत् कथञ्चन।
> आद्यो मलिम्लुचो ज्ञेयो द्वितीयः प्रकृतः स्मृतः॥

शुक्लप्रतिपदि इन्द्राग्नियागः कृष्णप्रतिपदि अग्नीषोमयागः—एतौ दर्शपौर्णमास्यन्तर्गतौ पिण्डपितृयज्ञाङ्गभूतौ। पितृविशिष्टसोमदैवतोऽग्नौकरणहोमो दर्शे विहितः।

मासादिः-समासावित्यनेन शुक्लप्रतिपदादिदर्शान्तश्चान्द्रमास इत्युक्तं, तं मासमतिक्रम्य रविर्यदि गच्छेत् तत्र यदि सञ्चारं न करोति तदा स मासो मलिम्लुच इत्यर्थ इत्याहुः। तन्मन्दम्।

मलमासोपयुक्तचान्द्रमासस्यैव हारीतेन सङ्केतितत्वात् तमतिक्रम्येत्यादिना तत्रैवोपसंहारात्। किन्तु बहूनां मुनीनां सौर-सावन चान्द्र नाक्षत्रेषु तुल्यसङ्केतदर्शनात् चतुर्ष्वेव नानार्थो मास-शब्दो मुख्यः।

न च नानार्थकल्पना*गौरवाच्चान्द्रे मुख्योऽन्येषु भाक्त इति वाच्यम्।

* ग पुस्तके—कल्पनापदं नास्ति।

विनिगमनाविरहात् सर्व्वत्र मुनीनां तुल्यसङ्केतदर्शनाच्च, अन्यथा नानार्थोच्छेदापत्तेः।

यथा ब्रह्मसिद्धान्ते—

चान्द्रः शुक्लादिदर्शान्तः सावनस्त्रिंशता दिनैः।
एकराशौ रविर्य्यावत् कालं मासः स भास्करः* ॥

शुक्लादिः शुक्लप्रतिपदादिरित्यर्थः पक्षावयववाचित्वात् शुक्लशब्दस्य।

तथा वराहसंहितायाम्—

दर्शाद्दर्शश्चान्द्रस्त्रिंशद्दिवसस्तु सावनो मासः।
रविसंक्रान्तिषु चिह्नः सौरोऽपि निगद्यते तज्ज्ञैः ॥

अत्र दर्शादित्यवधौ पञ्चमी नत्वभिविधौ तदा हि मासानां दर्शादित्वे दर्शान्तत्वाद्यादित्वे वा वत्सरे षण्णां मासानां लोपापत्तिः स्यात्।

न चैक एव दर्शः पूर्व्वमाससमापकः परमासारम्भकश्चेति वाच्यम्।

एकस्य द्वयोरवयवत्वविरोधात् मासानां परस्परपरोहार-व्यावस्थानप्रसिद्धिबाधाच्च दर्शे मृतस्य सांवत्सरिकश्राद्धानध्यव-सायाच्च। अतएव विष्णुधर्म्मोत्तरे सन्निकर्षमथारभ्येत्यत्र संनि-कर्षोत्सरकाललक्षणा।

यथा विष्णुधर्म्मोत्तरे—

सन्निकर्षमथारभ्य सन्निकर्षमथापरम।
चन्द्रार्कयोर्बुधैर्मासश्चान्द्र इत्यभिधीयते ॥

* मूलपुस्तके मासस्तु भास्करः।

सावने च तथा मासि त्रिंशत् सूर्य्योदयाः स्मृताः ।
आदित्यराशिभोगेन सौरो मासः प्रकीर्त्तितः ।
सर्व्वर्क्षपरिवर्त्तैश्च नाक्षत्रो मास उच्यते ॥

राजमार्त्तण्डे— मासो रवेः स्यात् प्रतिराशिभोगा-
च्छुक्लादिदर्शान्तमितोऽथ चान्द्रः ।
त्रिंशद्दिनैरप्यथ सावनाख्यो
भानां भवेत्तत्परिवर्त्तनेन* ॥

रत्नमालायाम्—
दर्शावधिं चान्द्रमुशन्ति मासं
सौरं तथा भास्कर राशिभोगात् ।
त्रिंशद्दिनं सावनसंज्ञमार्य्या†
नाक्षत्रमिन्दोर्भगणभ्रमाच्च ॥

सूर्य्यसिद्धान्ते—
नाड़ीषष्ट्या तु नाक्षत्रमहोरात्रं प्रचक्षते ।
तत्त्रिंशता भवेन्मासः सावनोऽर्कोदयैस्तथा ॥
ऐन्दवस्तिथिभिस्तद्वत् संक्रान्त्या सौर उच्यते।

तथा त्रिंशता अर्कोदयैः सावन इत्यर्थः। षष्टिदण्डमात्रेणैव नाक्षत्र-दिनं अर्कोदयैस्तु राशिविशेषवशेन यावन्ति पलानि‡ दिनभोगः स्यात् तदधिकषष्टिदण्डैर्भवति ।

* ग पुस्तके—भवेद्भः परिवर्त्तनेन ।
† ग पुस्तके- आद्यः ।
‡ ख पुस्तके पलविपलानि ।

तच्च तत्रैव—

ग्रहोदयप्राणहता खखाष्टैकोद्धृता १८०० गतिः।

चक्रासवो लब्धयुताः २१६०० स्वाहोरात्रासवः क्रमात्॥

इत्यनेनाहोरात्रमानं वक्ष्यते*। ततश्च सावनसंवत्सरेणैकदिनाधिकवत्सरो नाक्षत्रो भवतीत्यनयोर्भेदः।

अयञ्च नाक्षत्रमासो गणनोपयुक्त एव व्यवहारोपयुक्तस्तु विष्णुधर्म्मोत्तराद्युक्तश्चन्द्रस्य भगणभ्रमणात्मक एव स च प्रागेवोक्त इति।

ऐन्दवस्तिथिभिस्तद्वदिति तद्वत् त्रिंशता तिथिभिश्चान्द्रो मास इत्यर्थः। अत्र यद्यपि सामान्येन त्रिंशता तिथिभिरित्युक्तं तथापि हारीत-ब्रह्मसिद्धान्त-वराहसंहिता-विष्णुधर्म्मोत्तर-राजमार्त्तण्डादीनां पूर्व्वोपन्यस्तवचनैकवाक्यतया शुक्लप्रतिपदादिभिस्त्रिंशता तिथिभिरिति बोध्यम्।

अतएव तत्रैव सूर्य्यसिद्धान्ते त्रयोदशाध्याये—

त्रिंशता तिथिभिर्मासश्चान्द्रः पित्र्यमहः स्मृतम्।

इति पित्र्याहोपसंहारात् तस्य च शुक्लकृष्णपक्षनियतत्वादेतदेव विहतम्।

यथा मनुः—

पित्रे रात्र्यहनी मासः प्रविभागस्तु† पक्षयोः।

कर्म्मचेष्टास्वहः कृष्णः शुक्लः स्वप्नाय शर्व्वरी॥ इति

* ग पुस्तके उक्तम्।

† ख पुस्तके परिभागस्तु।

यच्च—

एकाहेन तु षण्मासा यदा स्युरपि वा त्रिभिः।

न्यूनः संवत्सरश्चैव स्यातां षाण्मासिके तदा॥

इति छन्दोगपरिशिष्टवचने—

मुख्यं श्राद्धं मासि मासि अपर्य्याप्तावृतुं प्रति।

इति मरीचिवचने—

मृताहे प्रतिमासं कुर्य्यात्। इति विष्णुवचने च मासपदं त्रिंशत्तिथिप्रचयमात्रे लाक्षणिकम्।

अतएव पौर्णमास्यन्तेऽपि सुतरामेव लाक्षणिको मासशब्द इति ध्येयम्। एवं मासशब्दस्य नानार्थत्वे सति—

रविणा लङ्घितो मासश्चान्द्रः ख्यातो मलिम्लुचः इति।

आब्दिके पितृकृत्ये च मासश्चान्द्रमसः स्मृतः॥ इति।

मेषगरविसंक्रान्तिः शशिमासे भवति यत्र तच्चैत्रमित्यादौ चान्द्रो-मास इत्यादिसोपाधिप्रयोगः सङ्गच्छते। अन्यथा तदनर्थकं स्यात् इति।

एतेन सौरादिषु त्रिषु रूढं मासपदं चान्द्रे तु माश्चन्द्रस्तस्यायमिति व्युत्पत्त्या त्रिंशत्तिथिप्रचये यौगिकमिति ये वदन्ति तेऽपि निरस्ताः।

हारीताद्यनेकमुनिभिः सौरादिवच्चान्द्रेऽपि सङ्केताभिधानात् अन्यथा तस्य वैयर्थ्यप्रसङ्गात्। नानामुनिवचनेषु चान्द्रो मास इत्यत्र चान्द्रपदस्य पुनरुक्तिवैफल्यप्रसङ्गाच्च मासपदादेव तथा प्रतीतेः॥

इदानीं चैत्रादिपदवाच्यं निरूप्यते ।

अत्र केचित् सौरे चान्द्रे च मास्युभयत्रैव प्रयोगभूयस्त्वदर्शनादुभयत्रैव चैत्रादिपदशक्तिरित्याहुस्तन्न ।

एकत्र लक्षणया सम्भवति प्रयोगनिर्व्वाहे नानार्थकल्पनमन्याय्यं शुक्लादिशब्दवत् गौरवात् तथाच कल्पनातो लक्षणैव श्रेयसीत्यगत्यैव नानार्थताऽङ्गीक्रियते यथाक्षादिषु मुख्यसम्बन्धाभावेन लक्षणानुपपत्त्या विनिगमनाविरहेण च स्वीकृतेति ।

न चात्रापि विनिगमनाविरह इति वाच्यम् ।

चान्द्रमास्येव चैत्रादिपदानां सङ्केतदर्शनात् ।

यथा ब्रह्मगुप्तः—

मेषगरविसंक्रान्तिः शशिमासे यत्र तच्चैत्रं एवं वैशाखाद्या वृषादिसंक्रान्तियोगेन ।

तथाच श्रुतिः—

सा वैशाखस्यामावस्या या रोहिण्या सम्बध्यते । इति

अत्र चामावस्यान्तकाले सूर्य्याचन्द्रमसोः सहावस्थाननियमेन वृषार्क एवामावस्यायां रोहिणीयोगसम्भवात्* श्रुत्यापि ब्रह्मगुप्तलक्षणमेव स्वहस्तितमिति ।

हारीतेनापि—

इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्त्तितः ।
अग्नीषोमौ स्मृतौ मध्य समाप्तौ पितृसोमकौ ॥

---

* ग पुस्तके—मेषार्के चावस्थ(?)ादित्यधिकः ।

यच्च—

एकाहेन तु षण्मासा यदा स्युरपि वा त्रिभिः।

न्यूनः संवत्सरश्चैव स्यातां षाण्मासिके तदा॥

इति छन्दोगपरिशिष्टवचने—

मुख्यं श्राद्धं मासि मासि अपर्य्याप्तावृतुं प्रति।

इति मरीचिवचने—

मृताहे प्रतिमासं कुर्य्यात्। इति विष्णुवचने च मासपदं तत्त्रिंशत्तिथिप्रचयमात्रे लाक्षणिकम्।

अतएव पौर्णमास्यन्तेऽपि सुतरामेव लाक्षणिको मासशब्द इति ध्येयम्। एवं मासशब्दस्य नानार्थत्वे सति—

रविणा लङ्घितो मासश्चान्द्रः ख्यातो मलिम्लुचः इति।

आब्दिके पितृकृत्ये च मासश्चान्द्रमसः स्मृतः॥ इति।

मेषगरविसंक्रान्तिः शशिमासे भवति यत्र तच्चैत्रमित्यादौ चान्द्रो-मास इत्यादिसोपाधिप्रयोगः सङ्गच्छते। अन्यथा तदनर्थकं स्यात् इति।

एतेन सौरादिषु त्रिषु रूढ़ं मासपदं चान्द्रे तु माश्चन्द्र-स्तस्यायमिति व्युत्पत्त्या त्रिंशत्तिथिप्रचये यौगिकमिति ये वदन्ति तेऽपि निरस्ताः।

हारीताद्यनेकमुनिभिः सौरादिवच्चान्द्रेऽपि सङ्केताभिधानात् अन्यथा तस्य वैयर्थ्यप्रसङ्गात्। नानामुनिवचनेषु चान्द्रो मास इत्यत्र चान्द्रपदस्य पुनरुक्तिवैफल्यप्रसङ्गाच्च मासपदादेव तथा प्रतीतेः॥

इदानीं चैत्रादिपदवाच्यं निरूप्यते ।

अत्र केचित् सौरे चान्द्रे च मासयुभयत्रैव प्रयोगभूयस्त्वदर्शनादुभयत्रैव चैत्रादिपदशक्तिरित्याहुस्तन्न ।

एकत्र लक्षणया सम्भवति प्रयोगनिर्व्वाहे नानार्थकल्पनमन्याय्यं शुक्लादिशब्दवत् गौरवात् तथाच कल्पनातो लक्षणैव श्रेयसीत्यगत्यैव नानार्थताऽङ्गीक्रियते यथाक्षादिषु मुख्यसम्बन्धाभावेन लक्षणानुपपत्त्या विनिगमनाविरहेण च स्वीक्रियतेति ।

न चात्रापि विनिगमनाविरह इति वाच्यम् ।

चान्द्रमासस्यैव चैत्रादिपदानां सङ्केतदर्शनात् ।

यथा ब्रह्मगुप्तः—

मेषगरविसंक्रान्तिः शशिमासे यत्र तच्चैत्रं एवं वैशाखाद्या वृषादिसंक्रान्तियोगेन ।

तथाच श्रुतिः—

सा वैशाखस्यामावस्या या रोहिण्या सम्बध्यते । इति

अत्र चामावस्यान्तकाले सूर्य्याचन्द्रमसोः सहावस्थाननियमेन वृषार्के एवामावस्यायां रोहिणीयोगसम्भवात्* श्रुत्यापि ब्रह्मगुप्तलक्षणमेव स्वहस्तितमिति ।

हारीतेनापि—

इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्त्तितः ।
अग्नीषोमौ स्मृतौ मध्ये समाप्तौ पितृसोमकौ ॥

---

* ग पुस्तके—मेषार्के चावस्थानादित्यधिकः ।

इत्यनेन दर्शान्तश्चान्द्रो मास इत्युक्ता—

चक्रवत् परिवर्त्तेत सूर्य्यः कामवशाद्यतः।
अतः सांवत्सरं श्राद्धं कर्त्तव्यं मासचिह्नितम्॥
मासचिह्नन्तु कर्त्तव्यं पौषमाघाद्यमेव हि।
यतस्तत्र विधानेन मासः स परिकीर्त्तितः॥

इत्यनेन सूर्य्यगतेर्मन्दत्वामन्दत्वाभ्यां* तन्मासे कदाचित्तिथिद्वय लाभात् श्राद्धसंशये कदाचिच्च तिथ्यलाभे श्राद्धलोपप्रसङ्गात् सौर-मासचिह्नं विहाय इन्द्राग्नी यत्र हूयेते इत्यनेनोक्तचान्द्रमासस्यैव पौषमाघादिसंज्ञां विधायैतरव्यावर्त्तकेन माघादिमासचिह्नेन निर्व्विवादम् सांवत्सरश्राद्धं कर्त्तव्यमिति वदता चान्द्रमासस्यैव माघादिपदानां शक्तिरुक्ता।

एवञ्च—

माघादि षट्सु† मासेषु शार्ङ्गिणः शयनावधि।
चूड़ाकर्म्म प्रशंसन्ति मुनयो व्रतकर्म्म च॥
द्वौ द्वौ माघादिमासौ स्यादृतुस्तैरयनं त्रिभिः।

इत्यादौ सौरमासि माघादिपदं मकरस्थरव्यारब्धसादृश्याद्गौणं अग्नेर्माणवक इतिवदिति।

एतेन ब्रह्मपुराणादौ बहुप्रयोगदर्शनात् पौर्णमास्यन्तमासे माघादिशक्तिर्दर्शान्ते लक्षणाऽस्त्वित्यपि निरस्तम्।

* क पुस्तके—मन्दत्वशीघ्रत्वाभ्याम्।

† ख पुस्तके—षटक—

पूर्व्वोपन्यस्तश्रुति हारीत-ब्रह्मगुप्तादौ दर्शान्त एव सङ्केतितत्वात् अनुवादकशास्त्रत: सङ्केतशास्त्रस्य बलीयस्त्वाच्च पौर्णमास्यन्तचैत्रादेश्चैत्रपौर्णमास्यन्तत्रिंशत्तिथिप्रचयात्मकादितया लक्षणस्या*वश्यं वाच्यत्वेन दर्शान्तचैत्रसापेक्षत्वाच्च।

एवञ्च दर्शान्ते मासि चैत्रादिप्रयोगे निर्णीते सति।

केचित्-नक्षत्रेण युक्तः कालः सास्मिन् पौर्णमासी-इति पाणिनिस्मरणात् चित्रानक्षत्रयुक्ता पौर्णमासी चैत्री सास्मिन् मासे इति व्युत्पत्त्या पुनरन्प्रत्ययेन यौगिकं चैत्रादिपदमाहुः। तन्न--

अहोरात्र-त्रिरात्र--दशरात्रादिष्वपि चैत्रादिपदप्रसङ्गात्। मासे योगरूढ़मितिचेत् नक्षत्रयोगव्यभिचारेऽपि कार्त्तिकादिपदप्रयोगात्।

तथा ज्योतिषे—

अन्त्योपान्त्यौ त्रिभौ ज्ञेयौ फाल्गुनश्च त्रिभो मतः।
शेषा मासा द्विभा ज्ञेयाः कृत्तिकादिव्यवस्थया॥

पौर्णमास्यां कृत्तिकादिक्रमेण द्विद्विनक्षत्रयोगात् अन्त्योपान्त्ययोराश्विनभाद्रयोः फाल्गुने च त्रिनक्षत्रयोगात् कार्त्तिकादयो द्वादशमासा भवन्तीत्यर्थः।

पाणिनिना† तु प्रायिकयोगमाश्रित्य यथाकथञ्चित् व्युत्पत्तिदर्शितेति।

* ग पुस्तके लक्षणस्य।

† ग पुस्तके पाणिनिमते—

न च कृत्तिकापदेन कृत्तिकारोहिण्योरन्यतरमुपलक्ष्यते एवमन्येष्वपि मासेष्विति वाच्यम्।

'अन्त्योपान्त्यौ त्रिभौ ज्ञेयाविति वचनस्यापि प्रायिकयोगमाश्रित्योक्तत्वादत्रापि व्यभिचारदर्शनात्।

यथा ब्रह्मपुराणे—

आग्नेयन्तु यदा ऋक्षं कार्त्तिक्यां भवति क्वचित्।
महती सा तिथिः प्रोक्ता स्नानदानेषु चोत्तमा॥
यदा याम्यं तु भवति ऋक्षं तस्यां तिथौ क्वचित्।
तिथिः सापि महापुण्या मुनिभिः परिकीर्त्तिता॥
प्राजापत्यं यदा ऋक्षं तिथौ तस्यां नराधिप।
सा महाकार्त्तिकी प्रोक्ता देवानामपि दुर्लभा॥

आग्नेयं कृत्तिका याम्यं भरणी प्राजापत्यं रोहिणीत्यर्थः। अत्र पौर्णमास्यां भरणीयोगेऽपि कार्त्तिकत्वं प्रत्युत भवन्मते आश्विनत्वमेव तस्येति।

तुलार्कस्य षोड़शदिनमारभ्य षड़्विंशतिदिवसाभ्यन्तरे या पौर्णमासी तस्याञ्च तुलार्कारब्धचान्द्रमासान्तर्गतत्वात् कार्त्तिकीत्वेना* व्यभिचारितायामवश्यमेव भरणीयोगः पौर्णमास्यन्तकाले सप्तमराश्यावर्क्काक्रान्तांशसमसंख्यांशे चन्द्रावस्थाननियमात्।

†[ एवञ्च वृश्चिकार्कस्य दशमदिनादूर्द्ध्वं चतुर्द्दशदिवसपर्य्यन्तं

* ग पुस्तके—कार्त्तिकत्वेन।
† ग पुस्तके—[ ] चिह्नितांशः पतितः।

तुलार्कारब्धचान्द्रमासान्तर्गता या कार्त्तिकी पौर्णमासी तस्यामेव रोहिणीयोगो नान्यत्र कार्त्तिक्यामिति। ]

यदा तु वृश्चिकार्कस्य षोड़शदिनमारभ्य अष्टाविंशतिदिनाभ्यन्तरे वर्त्तमानायां पौर्णमास्यां वृश्चिकारब्धचान्द्रमासान्तर्गतत्वादायस्ञायणोक्तेनाव्यभिचारितायां रोहिणीयोगोऽवश्यमेव न कदाचित् मृगशिरायोगः पौर्णमास्यन्तकाले चन्द्रार्कयोरन्योन्येन सप्तमराशौ समांशावस्थाननियमात् तदा च नक्षत्रव्यभिचारात् मार्गशीर्षस्यापि कार्त्तिकत्वं प्रसज्येत। एवमन्येष्वपि मासेषु नक्षत्रव्यभिचारः सुधीभिरूह्य इति।

अन्ये तु — मीनस्थरविप्रारब्धशुक्लप्रतिपदादिदर्शान्तश्चान्द्रो मासश्चैत्र इत्यादिलक्षणं वदन्ति, तदपि न चारु क्षयमासाव्याप्तेः। यथा ज्योतिषे—

असंक्रान्तमासोऽधिमासः स्फुटं स्यात्
द्विसंक्रान्तमासः क्षयाख्यः कदाचित्।
क्षयः कार्त्तिकादित्रये नान्यदा स्यात्
तदा वर्षमध्येऽधिमासद्वयञ्च॥

यथा ज्योतिषे—

यद्वर्षमध्येऽधिकमासयुग्मं
यत्कार्त्तिकादित्रितये क्षयाख्यम्।
मासत्रयं त्याज्यमिदं प्रयत्नात्
विवाहयज्ञोत्सवमङ्गलेषु॥

क्षयमासस्य द्विसंक्रान्तत्वे मध्ये मासैकलोपप्रसङ्गः स्यात्। यथा

शुक्लप्रतिपदि धनुःसञ्चारः अमावस्यायाञ्च मकरसञ्चारः तस्य च मासस्य वृश्चिकस्थरविप्रारब्धत्वेन मार्गशीर्षत्वात् तत्परस्य च मासस्य मकरस्थरविप्रारब्धत्वेन सुतरां माघत्वात् धनुःस्थरवि-प्रारब्धमासाभावात् पौषलोपः स्यात्।

अस्त्वेवमिति चेत् तद्वर्षे तन्मासविहिततिथिकृत्य-सांवत्सरिक-श्राद्धादीनां लोपापत्तिः स्यात्। ततश्च प्रतिसंवत्सरं कुर्य्यादिति विधिबाधः प्रसज्येत।

एतेन मेषस्थरविसमाप्यश्चान्द्रो मासश्चैत्र इत्याद्यपि निरस्तम्। मलमासस्य पूर्व्वमासत्वप्रसङ्गः स्यादिति।

अन्ये तु ब्रह्मगुप्तलक्षणमेव साधु मन्यन्ते।

यदाह ब्रह्मगुप्तः—

मेषगरविसंक्रान्तिः शशिमासे भवति यत्र तच्चैत्रम्।
एवं वैशाखाद्या वृषादिसंक्रान्तियोगेन।

तच्चैत्रमिति चैत्र एव चैत्रं स्वार्थे अन् दैवतादिशब्दवत् क्वचित् स्वार्थिकप्रत्यया लिङ्गमतिवर्त्तन्ते।

एतच्च लक्षणं क्षयमासेऽपि सङ्गतं उभयार्कसञ्चारे उभयस्यापि मासस्योभयसंज्ञासमावेशात्।

किन्त्वत्रापि मलमासाव्याप्तिर्दोषः।

रविणा लङ्घितो मासश्चान्द्रः ख्यातो मलिम्लुचः।

इति वचनात् रविसंक्रान्तिरहितस्यैव मलमासत्वात्। न चानामको मलमास इति वाच्यं न निर्विशेषं सामान्यमिति न्यायेन चैत्रादिसंक्रान्तिरिक्तमासाभावात्;

न नु—

वत्सरान्तर्गतःपापो यज्ञानां फलनाशकृत्।
नैर्ऋतैर्यातुधानैश्च समाक्रान्तो विनामकः॥

इति वचनादिति वाच्यं एतस्यामूलत्वात् समूलत्वेऽपि चैत्रादि-मासविशेषचिह्नितकार्य्याभावात् लाक्षणिकं विनामकपदमिति विनामकैरिति[1] कालमाधवीये पाठः।

अमावस्यामतिक्रम्य कुलीरं याति भास्करः।
द्विराषाढ़ः स विज्ञेयो विष्णुः स्वपिति कर्कटे॥

इति राजमार्त्तण्डादिवचने द्विराषाढ़ादिपदप्रयोगाच्च।

न च द्विराषाढ़ादिप्रयोगो गौण इति वाच्यम्। युगवद्वृत्ति-द्वयविरोधात् मलमासमरणे तन्मासस्यानामकत्वेन सांवत्सरिक-श्राद्धे सपिण्डीकरणे चानध्यवसायाच्च चैत्रादिविशेषचिह्नाभावा-दिति। मलमासेऽपि मृताहे सपिण्डीकरणविधानाच्च तत्तन्माम-विशेषाङ्कितर्तिथिविशेषस्य मृताहशब्दवाच्यत्वादिति।

एकसंज्ञौ यदा मासौ स्यातां संवत्सरे क्वचित्।
तत्राद्ये पितृकार्य्याणि दैवकार्य्याणि चोत्तरे॥

इति राजमार्त्तण्डवचने एकसंज्ञकत्वकथनाच्च। तत्राद्ये पितृ कार्य्याणीति सपिण्डीकरणविषयमिति वक्ष्यते।

[2][सपिण्डीकरणे चैव नाधिमासं विदुर्बुधाः।
इति हारीतवचनात्।]

---

[1] ग पुस्तके—द्विमासक इति।

[2] क ख पुस्तकद्वये चिह्नितांशो नास्ति।

तथा —

रविणा लङ्घितो मासश्चान्द्रः ख्यातो मलिम्लुचः ।

तत्र यद्विहितं कर्म्म उत्तरे मासि कारतेत् ॥

इति भीमपराक्रमवचने तत्र मलमासे वैशाखादिपुरस्कारेण विहितं यत् कर्म्म तदुत्तरे प्रकृतवैशाखादौ मासि कुर्य्यादित्यभिधानान्मलिम्लुचस्य वैशाखादिसंज्ञा स्फुटैवोक्ता अन्यथा मलमासे कर्म्मविधानाभावात्तदसङ्गतं स्यात् ।

यथा ज्योतिषे—

पक्षद्वयेऽपि संक्रान्ति र्यदि न स्यात् सितासिते ।

तदा तन्मासविहितमुत्तरे मासि कारयेत् ॥ इति

तथा—

आद्यो मलिम्लुचो ज्ञेयो द्वितीयः प्रकृतः स्मृतः ।

इति हारीतवचने आद्यं द्वितीयमित्यपि मासयोरेकनामत्वे सत्येव सङ्गच्छते इति ।

वस्तुतस्तु—

सा वैशाख्यामावस्या या रोहिण्या सम्बध्यते ।

इति श्रुत्यनुसारात् लक्षणान्तरमुच्यते ।

मेषगतरविसञ्चाररहित-ससंक्रान्तमासादितरो मीनस्थरविसंयोगी प्रथिमासश्चैत्र इति ।

मीनस्थरविसंयोगी प्रथिमासश्चैत्र इत्युक्ते फाल्गुनेऽतिव्याप्तिवारणाय मेषगतरविसञ्चाररहित-ससंक्रान्तमासादितर इत्युक्तम् ।

फाल्गुनस्तु मेषगतरविसञ्चाररहितात् ससंक्रान्तमासादितरो

न भवत्येवेति। ससंक्रान्तपदन्तु मलमासाव्याप्तिवारणायेति सूर्य्यस्यैव मलमासेषु सर्व्वमासलक्षणातिव्याप्तिवारणाय मीनस्थरविसंयोगी-त्यादिपदम्।

न च प्रतिपत्प्राक्क्षणे* उत्तरराशिसंयोगरूपे रविसञ्चारे सति पूर्व्वमासो मलमास एव उत्तरस्य प्रकृतमासत्वात् तन्नामकता-ऽवश्यं वाच्या तत्र च पूर्व्वराशिस्थरविसंयोगाभावाल्लक्षणाव्याप्तिरिति वाच्यम्।

सूर्य्यमण्डलस्य महत्वादेकदेशेनोत्तरराशिसंयोगे सत्यपि पर-भागेण पूर्व्वराशिसंयोगसत्त्वान्नाव्याप्तिः।

एवञ्च वृषगतरविसञ्चाररहित-ससंक्रान्तमासादितरो मेषस्थ-रविसंयोगी मासो वैशाख इत्यादिलक्षणमितरेषु मासेषूह्यम्।

एतेन एकस्यापि क्षयमासस्योभयार्कसञ्चारेणोभयलक्षण व्याप्त्या उभयमासत्वं सङ्गतमिति।

न च क्षयमासमरणे तन्मासस्योभयसंज्ञकत्वात् सांवत्सरिक-श्राद्धानध्यवसाय इति वाच्यम्—

तिथ्यर्द्धे प्रथमे पूर्व्वो द्वितीयार्द्धे तदुत्तरः।
मासाविति बुधैश्चिन्त्यौ क्षयमासस्य मध्यगौ॥

इति व्यासवचनात् तिथेः पूर्व्वार्द्धमरणे पूर्व्वमासीयतिथिर्ग्राह्या परार्द्धमरणे तु परमासीयतिथिरिति व्यवस्था। न चैतदनाकर-मिति शङ्का कालमाधवीयादिषु पाश्चात्यस्मृतिषु लिखितत्वादिति।

---

* ग पुस्तके—प्रथमक्षणे।

एवं चैत्रादिपदार्थे निर्णीते चैत्रपौर्णमास्यन्तत्रिंशत्तिथिप्रचयो गौणचैत्र इत्यादिलक्षणं ज्ञेयम् ।

न च मीनस्थरविप्रारब्धकृष्णप्रतिपदादिपौर्णमास्यन्तश्चैत्र इत्यादि वाच्यं कुम्भस्थरविप्रारब्धकृष्णप्रतिपदादावव्याप्तेः ।

न च मीनस्थरविसमाप्यकृष्णपक्ष—तदव्यवहितशुक्लपक्षौ गौण-चैत्र इत्यादिलक्षणं वाच्यं क्षयमासाव्याप्तेः ।

## अथ मलमासलक्षणम्।

यथा हारीतः—

इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्त्तितः।
अग्नीषोमौ स्मृतौ मध्ये समाप्तौ पितृसोमकौ॥
तमतिक्रम्य तु रविर्यदा गच्छेत् कथञ्चन।
आद्यो मलिम्लुचो ज्ञेयो द्वितीयः प्रकृतः स्मृतः॥

शुक्लप्रतिपदि इन्द्राग्नियागः कृष्णप्रतिपदि अग्नीषोमीययागः एतौ दर्शपौर्णमास्यन्तर्गतौ। पितृविशिष्टसोमदैवतोऽग्नौकरणहोमः पिण्डपितृयज्ञान्तर्गतो दर्शे विहितः। मासादिः समाप्तावित्यनेन शुक्लप्रतिपदादिदर्शान्तश्चान्द्रो मास इत्युक्तं तन्मासमतिक्रम्य रविर्यदा गच्छेत् तत्र यदि सञ्चारं न करोति तदा स मासो मलिम्लुच इत्यनेन रविसंक्रान्तिशून्यो दर्शान्तश्चान्द्रमासो मलमास इति लक्षणम्। आद्यत्वं द्वितीयत्वञ्च मासद्वयस्य एकनामकत्वधर्मेणेत्यर्थः। प्रकृतः शुद्धः कर्म्मार्ह इत्यर्थः।

तथाच ब्रह्मसिद्धान्ते—

चान्द्रो मासो ह्यसंक्रान्तो मलमासः प्रकीर्त्तितः।

ज्योतिःपराशरः—

रविणा लङ्घितो मासश्चान्द्रः ख्यातो मलिम्लुचः।

तथा ज्योतिषे—

पक्षद्वयेऽपि संक्रान्तिर्यदि न स्यात् सितासितं।
तदा तन्मासविच्छिन्नमुत्तरं मासि कारयेत्॥

मलमासकारणमुक्तं ज्योतिषे—

दिवसस्य हरत्यर्कः षष्टिभागमृतौ ततः।
करोत्येकमहश्छेदं तथैवैकञ्च चन्द्रमाः॥
एवमर्द्धतृतीयानामब्दानामधिमासकम्।
ग्रीष्मे जनयतः पूर्व्वं पञ्चाब्दान्ते तु पश्चिमम्।
तस्मार्को दर्शकश्चैकराशौ दर्शद्वयातिगः॥
अमावस्याद्वयं यत्र रविसंक्रान्तिवर्ज्जितम्।
मलमासः स विज्ञेयो विष्णुः स्वपिति कर्क्कटे॥

दिवसस्य तिथेः षष्टिभागं दण्डमेकं रविः प्रतिदिनमाकर्षति एतेन ऋतौ मासद्वये षष्टिनाड्याकर्षणात् तिथिरेका सूर्य्येणाक्षयते चन्द्रेणाप्येवं एतच्च प्रायिकं गतेर्मन्दत्व-ह्रास-वृद्धिदर्शनात्। तेन द्वाभ्यां प्रतिऋतौ तिथिद्वयकर्षणात् वत्सरेण द्वादशतिथयो वर्द्धन्ते एवं सार्द्धसंवत्सरद्वयेन त्रिंशत्तिथ्याकर्षणान्मलमासो निष्पद्यते। अर्द्धेन तृतीयं अर्द्धतृतीयं सार्द्धसंवत्सरद्वयमित्यर्थः। एतदपि प्रायिकं तिथिवृद्धिह्रासाभ्यां न्यूनाधिकेनाप्यधिमासदर्शनात्।
अतएव विष्णुधर्म्मोत्तरे—

समाद्वये साष्टमासे तस्मान्मासोऽतिरिच्यते।
स चाधिमासकः प्रोक्तः काम्यकर्म्मसु गर्हितः॥ इति

तथा चतुर्द्दशवर्षाधिक-चतुर्द्दशशतशकाब्दे वैशाखो मलमासः। ततःपरं षोड़शाधिक-चतुर्द्दशशतशकाब्दे भाद्रे ऊनविंशन्मासे मलमास इति। ततः परञ्च ऊनविंशाधिक-चतुर्द्दशशतशकाब्दे श्रावणे षट्त्रिंशन्मासे मलमासः। ततः परं द्वाविंशत्यधिकचतुर्द्दश-

शतशकाब्दे ज्यैष्ठे पञ्चत्रिंशद्भागे मलमासः। इत्याद्यनेकशो व्यभिचारो दृश्यते। किञ्चिदं नियतं एकस्मादधिमासादारभ्य यत्तृतीये सौरवर्षेऽधिमासः पततीति।

यच्च—

द्वात्रिंशद्भिर्गतैर्मासैर्दिनैः षोड़शभिस्तथा।
घटिकानां चतुष्केन पतत्येकोऽधिमासकः॥

इति वचनं तच्चतुर्युगानां यावन्तोऽधिमासास्तेषां समविभागकल्पनया गणनप्रासकालप्रदर्शनपरं नत्वसंक्रान्तमलमासनियामकमिति। एवञ्च पञ्चसु वर्षेषु द्वौ द्वावधिमासकौ भवतः।

तथाच विराटपर्व्वणि—

पञ्चमे पञ्चमे वर्षे द्वौ मासावुपचीयतः।
ग्रीष्मे जनयतः पूर्व्वं पञ्चाब्दान्ते तु पश्चिमम्॥ इति।

तत्र चार्द्धतृतीयानां सार्द्धवर्षद्वयानां पूर्व्वं प्रथममधिमासं ग्रीष्मे ग्रीष्मोपलक्षिते उत्तरायणे चन्द्रार्कौ जनयतः, वत्सरस्य प्रक्रतत्वात् पूर्व्वपश्चाद्भावेन द्विधाविभागस्योचितत्वात् फाल्गुनचैत्रयोर्मलमासदर्शनाच्चोत्तरायणं लभ्यते पञ्चाब्दानामन्ते पञ्चमे वर्षे पश्चिमं द्वितीयमधिमासमर्थाद्दक्षिणायने जनयत इत्यर्थः।

कल्पादिसृष्टिमारभ्य सत्ययुगमारभ्य वा पूर्व्वपरव्यवस्था शुक्लप्रतिपदमारभ्य सृष्ट्यारम्भात् सत्ययुगप्रवृत्तेश्च।

न च वैशाखादिषट्क एव मलमासः स्यात्वाच्यस्मेति वाच्यम्—

प्रायशो न शुभः सौम्यो ज्यैष्ठश्चाषाढ़कस्तथा।
मध्यमौ चैत्रवैशाखावधिकोऽन्यः शुभिक्षकृत्॥

इति शाण्डिल्यवचनात् वैशाखादिषट्कव्यतिरेकेणापि मलमासा-
वगमात् सौम्यो मार्गशीर्ष इत्यर्थः ।

तथाच—

चतुर्विंशाधिक-चतुर्द्दशशतशकाब्दे चतुर्द्दश्यां तुला वृश्चिक-धनु-
र्म्मकर-कुम्भसंक्रान्तयः अमावस्याप्रथमपादे मीनसंक्रान्तिः प्रति-
पदो द्वितीयपादे मेषसंक्रान्तिः ततश्च तस्मिन्नब्दे चैत्रो मलमासः ।

तथा—

*सप्तनवत्यधिक त्रयोदशशतशकाब्दे फाल्गुनो मलमासः तथा
त्रयश्चत्वारिंशदधिक-चतुर्द्दशशते शकाब्दे कार्त्तिकोऽसंक्रान्तमास
इति ।

यच्च—

माधवाद्येषु षट्स्वेकमासि दर्शद्वयं यदा ।
द्विराषाढ़ः स विज्ञेयः शेतेऽत्र† श्रावणेऽच्युतः ॥

इति वचनविरोधाशङ्का अस्य वचनस्य इदानीं प्रायशो माधवा-
दिषट्के मलमासपातप्रदर्शनपरत्वम् ।

तथाहि सूर्य्यसिद्धान्ते—

प्राग्गतेः सूर्य्यमन्दस्य कल्पे सप्ताष्टवह्नयः ।

इत्यादिना रवेर्मन्दोच्चसाधनमुक्त्वा तद्दशेन—

देशान्तरगुणा भुक्तिस्तद्वत्तेनोद्धृताः पुनः ।
स्वमन्दपरिधिक्षुण्णा भगणांशोद्धृताः कलाः ॥

* क पुस्तके—सप्तनवतीत्यादि पङ्क्तित्रयमधिकम् ।
† क पुस्तके शेते न ।

कर्क्कादौ तद्बलं तत्र मकरादावृणं स्मृतम्।

इत्यनेन मन्दभुक्तिसाधनञ्चोक्तम्।

तेन चेदानीं मिथुने सूर्य्य-मन्दोच्चस्थितेर्माधवादिषट्के मन्दभोगात् किञ्चिदधिकैकत्रिंशदहोरात्रे रविसञ्चारात् प्रायशो माधवादिषट्के मलमासो दृश्यते तुलादिषट्केषु शीघ्रभोगादूनत्रिंशद्दिवसे रवि-सञ्चारादिदानीं कादाचित्क एव।

यदा तु कालविप्रकर्षात् सूर्य्यमन्दोच्चस्तुलादिषट्के यास्यति तदा तत्रैव रवेर्मन्दभोगात् किञ्चिदधिकैकत्रिंशदहोरात्रे रवि-सञ्चारात् प्रायशस्तुलादिषट्क एव मलमासो भविष्यति माधवादि-षट्के तु शीघ्रभोगात् ऊनत्रिंशद्दिवसे रविसञ्चारात् कदाचिदेव मलमासस्तत्र पतिष्यति ततश्चेदानीन्तनप्रायिकप्रदर्शनपरं माध-वाद्येष्विति वचनं मन्तव्यम्।

अतएव—

यां तिथिं समनुप्राप्य तुलां गच्छति भास्करः।

तयैव सर्व्वसंक्रान्तिर्यावच्छेषं न गच्छति॥

इत्याद्यपि वचनमिदानीन्तनप्रायिकप्रदर्शनार्थमेवेति।

न च शोभे जनयत इति वचनस्य शोभे माधवादित्रिके इति समयप्रकाशव्याख्यानं युक्तं वत्सरस्यैव प्रक्रान्तत्वात् पूर्व्वपश्चाद्भावेन द्विधा विभागस्यैवोचितत्वात्। त्रिके त्रिके इत्यश्रुतकल्पनापत्तेश्च। भवतु वा तादृशं वचनव्याख्यानं तथापि पूर्व्वोक्तशास्त्रवचनात् व्यभिचारदर्शनाच्च सूर्य्यसिद्धान्तमतोक्तयुक्तेश्च प्रायिकप्रदर्शनार्थं वचनं न नियमपरमिति।

एकायनेऽपि कदाचिदुत्पातसूचकं क्रमेणाधिमासद्वयं भवति तथा ज्योतिषे—

एकायने यदि स्यातां क्रमात् द्वावधिमासकौ।
तदा राष्ट्रस्य संक्षोभो नृपतेरपि संशयः॥ इति—

तथाच जनपञ्चाशदधिक-चतुर्द्दशशतशकाब्दे आषाढ़ो मलमासः। ततः परं द्विपञ्चाशधिक-चतुर्द्दशशतशकाब्दे वैशाखो मलमासः। तथा चतुःपञ्चाशदधिक-चतुर्द्दशशतशकाब्दे भाद्रो मलमासः। ततःपरं सप्तपञ्चाशदधिक-चतुर्द्दशशतशकाब्दे श्रावणो मलमासः ततश्च सर्व्वमेवैतत्प्रायिकमेवेति।

तस्यार्क्को दर्शक इति दर्शको व्यापक एकराशौ स्थित्वा दर्शद्वय-क्रोड़ीकृतस्य चान्द्रमासस्यातिक्रामक इत्यर्थः। अतिक्रमं विष्णोति अमावस्याद्वयमिति यत्र काले अमावस्याद्वयं अमावस्याद्वय-क्रोड़ीकृतश्चान्द्रमासो रविसंक्रान्तिशून्यो भवेत् स कालो मलमासो ज्ञेयः।

तथा ज्योतिषे—

अमावस्यापरिच्छिन्नं रविसंक्रान्तिवर्ज्जितम्।
मलमासं विजानीयात् गर्हितं सर्व्वकर्म्मसु॥

ततश्च रवेः सञ्चाराकरणमतिक्रम इत्यर्थः। अथैकस्मिन्नब्दे यदा द्वावसंक्रान्तमासौ स्यातां तदा किं द्वावेव मलमासौ किंवा एकः तत्र पूर्व्वो वा परो वा इति संशयः।

अत्र केचित्—अपवादवचनाविषयत्वे सति असंक्रान्तमासो मलमास इति लक्षणम् कृत्वा एकस्यैव मलमासत्वमङ्गीकुर्व्वन्ति।

तदसत्—

अपवादविषयज्ञानस्य मलमासज्ञानाधीनत्वेनान्योन्याश्रयदोष-ग्रस्तत्वात् पूर्व्वोपन्यस्तहारीतादिनानामुनिवचनैरसंक्रान्तमासमात्रस्यैव मलमासत्वाभ्युपगमाच्च।

वस्तुतस्तु द्वावेव मलमासौ हारीताद्यनेकमुनिलक्षणाक्रान्तत्वात्तत्र च सत्यपि मलमासत्वे एकस्य वचनबलात् मलमास-विषयकनिषेधाविषयत्वं अतएव तस्योपाधिभेदात् नीलघटवत् भानुलङ्घित इति संज्ञाविशेषः।

तथा च वराह-संहितायाम्—

अधिमासे दिनपाते धनुषि रवौ भानुलङ्घिते मासि।

चक्रिणि सुप्ते कुर्य्यान्नो माङ्गल्यं विवाहञ्च॥

इति भेदेन द्वावभिधाय मङ्गल्यमात्रस्य निषेधद्वारा अन्येषां कर्म्मणां प्रतिप्रसव उक्तः।

अतएव कर्म्मणे सम्यक् सर्पतीति संसर्पसंज्ञापि तस्य वक्ष्यते अयञ्च मासः क्षयमासाधिकरणसंवत्सर एव भवति।

अतएव ज्योतिषे—

यदा वक्रातिचाराभ्यां सूर्य्यसंक्रमणं भवेत्।

क्षत्रियाणामसृग्धारा*स्तदा वहति मेदिनी॥ इति

यस्यां तिथावेकः सञ्चारस्तत्परतिथावपरः सञ्चारो यया गत्या भवति सा गतिरतिचारस्तदा चासंक्रान्तमासः, यया तु गत्या प्राक् सञ्चारतिथेः पूर्व्वतिथावपरः सञ्चारः सा गतिर्वक्रा तदा च

* ग पुस्तके—धाराम्।

क्षयाख्यमासः स्यात्, ततस्तत्परः पुनरप्यतिचारगत्याऽसंक्रान्त मासो भवेदित्यर्थः।

तथाच—असंक्रान्तमासोऽधिमासः स्फुटः स्या-
द्विसंक्रान्तमासः क्षयाख्यः कदाचित्।
क्षयः कार्त्तिकादित्रये नान्यदा स्या-
त्तदा वर्षमध्येऽधिमासद्वयञ्च॥

कार्त्तिकादित्रय इति प्रायिकप्रदर्शनं सप्तनवत्यधिकत्रयोदशशत-शकाब्दे माघे क्षयमासदर्शनात्। किन्तु यस्मिन्नब्दे क्षयमासः स्यात् तस्मिन्नब्देऽधिमासद्वयं स्यात् नान्यदेति नियम इति वचनार्थः।

अत्र केचित्—

माधवादिषट्कपतितस्य मलमासत्वं तुलादिषट्कपतितस्य भानुलङ्घितत्वं माधवाद्येषु षट्केष्वित्यादिपूर्व्वोक्तवचनादिति वदन्ति। तन्न—

चतुर्त्रिंशाधिक-चतुर्दशशतशकाब्दे चतुर्द्दश्यां तुला-वृश्चिक-धनु-र्मकर-कुम्भसंक्रान्तयः अमावस्याप्रथमपादे मीनसंक्रान्तिरिति केवलं तस्मिन्नब्दे चैत्र एव क्रमवर्त्तितो मलमासः, वचनन्तु प्रायिकदर्शनार्थमिति प्रागुक्तम्।

नचोभयोरसंक्रान्तयोः सतोरेव तुलादिषट्कपतितस्य भानु-लङ्घितत्वं अन्यस्य मलमासत्वमिति वाच्यं विनिगमनाविरहात्।

घटकन्यागते सूर्य्ये वृश्चिके वाथ धन्विनि।
मकरे वाथ कुम्भे वा नाधिमासं विदुर्बुधाः॥

इति कन्यागतस्याधिमासत्वनिषेधाच्च।

केचित्तु—

दिवसस्य हरत्यर्क इत्यादिना बीजमुक्तम्। तच्च क्रमसञ्चय-रूपं पूर्व्वस्यैव न परस्येति पूर्व्व एव मलमास इत्याहुः। तदसत्—

कारणाभावाच्च कार्य्योत्पत्तिरिति परस्याप्यवश्यं कारणमन्वेष्यं तच्च क्षयमास एव वाच्यं ततश्च वह्नेस्तृणारणिमणिवदस्यापि बीजान्तरत्वसम्भवात् क्रमसञ्चयरूपबीजन्तु वह्नेस्तृणवत् प्रायिक-मवगन्तव्यम्।

अथवा सार्द्धसंवत्सरद्वयेन किञ्चिन्न्यूनमासः सञ्चितस्तस्य यदवशिष्टं तस्य रवेर्मन्दगत्या पूर्व्वासंक्रान्तमासेन सञ्चितस्यापि पुनः सूर्य्यस्य शीघ्रगतिवशात् क्षयमासेन लोपात् पूर्व्वसञ्चित एव किञ्चिन्न्यूनमासः स्थितः तदवशिष्टञ्च परासंक्रान्तमासेन पुनः पूरितमिति परस्यैव क्रमसञ्चयरूपं बीजं तत्क्रमसञ्चयक्षयमासेन लोपात् पूर्व्वसमीकरणादसत्कल्पत्वात्।

अतो न पूर्व्वासंक्रान्तमलमासनिषेधविषयता किन्तु परस्यै-वेति एतन्मूलकान्येव मुनिवचनानि।

यथा कालमाधवीये जावालिः—

एकस्मिन्नेव वर्षे चेत् द्वौ मासावधिमासकौ।
प्रकृतस्तत्र पूर्व्वः स्यादुत्तरस्तु मलिम्लुचः॥

प्रकृतः शुद्धः कर्म्मार्ह इत्यर्थः।

मदनपारिजाते स्मृतिः—

मासद्वयेऽब्दमध्ये तु संक्रान्तिर्न यदा भवेत्।
प्रकृतस्तत्र पूर्व्वः स्यादधिमासस्तथोत्तरः॥

सत्यव्रतः---

मासद्वयेऽपि संक्रान्ति र्न चेत्स्यादंशुमालिनः।

प्रकृतस्तत्र पूर्व्वः स्यादधिमासस्तथोत्तरः॥

भीमपराक्रमे---

एकस्मिन्नपि वर्षे लङ्घितमासयोरुभयोः।

तस्मिन्न परोऽधिमासः स्फुटगत्या भवति चार्केन्द्वोः॥

अर्केन्द्वोः स्फुटगत्या इति—प्रथमासंक्रान्तमासकृतक्षयस्य क्षय-मासेन लोपादुत्तरासंक्रान्तमासेन पुनस्तत्सत्त्वयादित्यर्थः।

कालचिन्तामणौ शातातपः—

त्रयोदशं यच्छति वाथ मासं

चतुर्द्दशः क्वापि न दृष्टपूर्व्वः।

एकत्र मासद्वितयं यदि स्या-

द्वर्षेऽधिकं तत्र परोऽधिमासः॥

अत्र केचित्-पूर्व्ववर्द्धितमासस्य क्षयमासेन समीकरणात् परत्र वार्षिकसङ्ख्याजनको मासो न तु पूर्व्व इति। सिद्धार्थस्यानुवादकं वचनं मलमासस्तु पूर्व्वएव बीजसद्भावादिति व्याचक्षते तदशुद्धं एकत्र वर्षे मासद्वितयमधिकं यदि स्यादित्यादिपदेन विरोधात्।

मलं वदन्ति कालस्य मासं कालविदोऽधिकम्।

निर्हेतान्न विशेषेण्यामन्यथावश्यकादृते॥

इति गृह्यपरिशिष्टेनाधिकसंख्याजनकस्यैव मलमासत्वाभ्युप गमाच्च।

मुनिवचनस्य विधिनिषेधफलकत्वेनैव सार्थकत्वोपपत्तेः।

सिद्धार्थानुवादकत्वेन तु नान्तरीक्षेऽग्निश्चेतव्य इतिवत् वैयर्थ्य-प्रसङ्गाच्च परमासस्यैव मलमासतया कर्म्मप्रतिबन्धकत्वेन सम्भवति सार्थकत्वे वचनस्य वैयर्थ्यकल्पनाया अन्याय्यत्वाच्च परस्मिन् बीजा-भावस्य प्रागुक्तयुक्त्या निराकृतत्वाच्चेत्यलं बहुना।

यच्च नीलाम्बरभट्टेन—

कार्त्तिकादिषु मासेषु यदि स्यातां मलिम्लुचौ।
सर्व्वकर्म्महरः प्रोक्तः पूर्व्वस्तत्र मलिम्लुचः॥

इति वचनं लिखितं तन्मदनपारिजात-हेमाद्रि-कालमाधवीय-कालचिन्तामणिप्रभृतिषु दाक्षिणात्य-पाश्चात्यसंग्रहकारैः लिखित-पूर्व्वोपन्यस्तवचनविरोधात् निर्म्मूलमेव समूलत्वाभिमाने तु प्रागुक्तानेकवचनविरोधात् नो मङ्गल्यं विवाहश्चेति वराहसंहिता-वचनैकवाक्यतया च कर्म्मपदमत्र मङ्गल्यकर्म्मपरम्।

इत्यञ्च तयोर्मलिम्लुचमासयोर्यः पूर्व्वो भानुलङ्घिताख्यो मलिम्लुचमासः सर्व्वमङ्गल्यकर्म्महरः प्रोक्तो मुनिभिरित्यर्थः।

अन्ये तु—कार्त्तिकादिषट्कपतितमलिम्लुचमासद्वयविषयं वचनमिदं व्याचक्षते।

विशारदेन-समूलत्वेऽपि सर्व्वशिष्टसंग्रहेषु बहुतरवचनविरोधात्परस्तत्र मलिम्लुच इत्येव पाठ इत्युक्तम्।

षट्पञ्चाशदधिक-द्वादशशतशाकसंवत्सरे आश्विनो भानुलङ्घितः पौषः क्षयाख्यः फाल्गुनस्तु मलमासः। तथा सप्तनवत्यधिक-त्रयोदशशतशाकसंवत्सरे आश्विनो भानुलङ्घितो माघः क्षयाख्यः फाल्गुनो मलमास इति।

यत्तु—घटकन्यागते सूर्य्ये वृश्चिके वाथ धन्विनि।
मकरे वाथ कुम्भे वा नाधिमासं विदुर्बुधाः॥

इति फाल्गुनस्यापि मलमासत्वनिषेधकं वचनं तदेकस्मिन्नब्दे मलमासपाते पूर्व्वमासविषयं अथवा वृश्चिकादिमासचतुष्टये मलमासे सति घटकन्यागते सूर्य्येऽसंक्रान्तमासं नाधिमासं विदुरिति वचनार्थः। घटस्तुला इत्यर्थः।

यच्च—चैत्रादर्व्वाङ् नाधिमासः परस्तत्राधिको भवेत्।

इति वचनं तदीदानीं प्रायश्चैत्रादारभ्य रवेर्मन्दगतिवशात् कार्त्तिकादारभ्य रवेः शीघ्रगतिवशाच्चासंक्रान्तमासस्य प्रायिकभावाभावप्रदर्शनपरम्। अथवा चैत्रादारभ्योपरितनेषु मासेषु यदि द्वावसंक्रान्तमासौ स्यातां तयोरर्व्वाक् पूर्व्वो नाधिमासः किन्तु तयोः पर एवाधिमासो भवेदित्यर्थः।

किन्त्वेतेषु त्रिष्वेव मासेषु मङ्गल्यकर्म्मनिषेधमाह वृहस्पतिः—

संसर्पांहस्पतौ मासावधिमासश्च निन्दिताः।

इति मलमासनिषिद्धकर्म्मण्यपि संसर्पतीति संसर्पः क्षयमासात् पूर्व्वोऽसंक्रान्तमासः क्षयमासस्य तु विवाहादिमङ्गल्यकर्म्मणि निषिद्धत्वात् अंहस्पतिसंज्ञा तत्परतस्तु असंक्रान्तमासो मलमासः।

तथा वराहसंहितायाम्—

अधिमासे दिनपाते धनुषि रवौ भानुलङ्घिते मासि।
चक्रिणि सुप्ते कुर्य्यान्नो माङ्गल्यं विवाहञ्च॥

भानुलङ्घिते संसर्पे मङ्गल्यं चूडोपनयनादि।

तथाच हेमाद्रि-कालचिन्तामणि कालमाधवीयेषु स्मृतिः—

यद्वर्षमध्येऽधिकमासयुग्मं
यत्कार्त्तिकादित्रितये क्षयाख्यम्।
मासत्रयं त्याज्यमिदं प्रयत्नात्
विवाहयज्ञोत्सवमङ्गलेषु॥

यज्ञोऽग्निष्टोमादिः काम्यः। उत्सवः काम्योत्सव एव यज्ञसाहचर्य्यात्। मङ्गलानि नामकरणाद्युपनयनान्तबालकसंस्कारा एतद्व्यतिरिक्तानि मलमासे निषिद्धानि अग्न्याधान-प्रतिष्ठा महादान-व्रतश्राद्धादीनि संसर्प-क्षयाख्ययोर्मासयोः कार्य्याणि।

यद्यप्यधिकसंज्ञकः संसर्पपरभूतो मासोऽपि प्रकृतोऽस्ति तथापि तत्तन्मासविशेषविहितकर्म्माणि श्राद्धव्रतादीनि प्रथमोपस्थितत्वात् संसर्प एव कार्य्याणि।

अपरे तु—

पक्षद्वयेऽपि संक्रान्ति र्यदि न स्यात् सितासिते।
तदा तन्मासविहितमुत्तरे मासि कारयेत्॥

इति वचनानुसारात् मासविशेषविहितकर्म्माणि प्रकृतमास्येव कार्य्याणि सामान्यानि तु यज्ञ-महादान-प्रतिष्ठादीनि द्वयोरेव कार्य्याणीति वदन्ति।

तथा—एकस्मिन्नपि क्षयमासे मासद्वयलक्षणाक्रान्तत्वात्तत्तन्मासविशेषद्वयविहितकर्म्माणि कर्त्तव्यान्येव।

## अथ मलमासनिषिद्धानि।

गृह्यपरिशिष्टम्—

मलिम्लुचस्तु मासो वै मलिनः पापसम्भवः।
गर्हितः पितृदेवेभ्यः सर्व्वकर्म्मसु तं त्यजेत्॥

मलिनः कालमलत्वात्, पापसम्भव इति निन्दार्थं सर्व्वकर्म्मपदं सम्भवत्कालान्तरकर्म्मपरम्।

तथाच गृह्यपरिशिष्टम्—

मलं वदन्ति कालस्य मासं कालविदोऽधिकम्।
नेहेतात्र विशेषेण्यामन्यत्रावश्यकाद्विधेः॥

विशेषपदार्थं विवृणोति अन्यत्रावश्यकाद्विधेरिति आवश्यकमसम्भवत्कालान्तरकं कर्म्म अहरहःक्रियमाणं गोहिरण्यान्नादिदानं सन्ध्या-पञ्चमहायज्ञादि च उपरागादिविहितस्नानदानादि च। अपाटवादिनिमित्तककालाक्षेपासहिष्णुग्रहशान्त्यादि च तथा कालक्षेपासहिष्णु वृष्टिकामनया कारीरीयागादि।

तथा चावश्यककर्म्मणां प्रतिप्रसवमाह बृहस्पतिः—

नित्यनैमित्तिके कुर्य्यात् प्रयतः सन् मलिम्लुचे।
तीर्थस्नानं गजच्छायां प्रेतश्राद्धं तथैव च॥

नित्यमहरहःक्रियमाणं नैमित्तिकं पुत्त्रजन्मनिमित्तकं श्राद्धम्।

यथा मार्कण्डेयपुराणे—

नैमित्तिकमथो वक्ष्ये श्राद्धमभ्युदयार्थकम्*।
पुत्त्रजन्मनि तत्कार्य्यं जातकर्म्मसमं नरैः॥

* क पुस्तके—अभ्युदयात्मकम्।

अस्याप्यसम्भवत्कालान्तरकत्वात् तीर्थस्नानमावृत्तमेव—

मलमासेऽप्यनावृत्तं तीर्थस्नानमपि त्यजेत् ।

इति ज्योतिःपराशरेण अनावृत्तस्य निषेधात् अस्य तु सावकाशस्यापि वचनात् प्रतिप्रसवः । गजच्छायामुपरागनिमित्तकश्राद्धम् ।

यमः—सैंहिकेयो यदा भानुं ग्रसते पर्व्वसन्धिषु ।

हस्तिच्छाया तु सा प्रोक्ता तत्र श्राद्धं प्रकल्पयेत् ॥

तथा कठब्राह्मणम्—

हस्ती वै भूत्वा स्वर्भानुरंशुभिरादित्यं तमसा पिदधातीति ।

अथवा नैमित्तिकमागन्तुकनिमित्तोपनिपातविहितं उपरागश्राद्धाद्यपाटवप्रतीकारादि गजच्छायाममावस्याश्राद्धम् ।

तथा यमः—वनस्पतिगते सोमे छाया या प्राङ्मुखी भवेत् ।

गजच्छाया तु सा प्रोक्ता पितॄणां दत्तमक्षयम् ॥

प्रेतश्राद्धं प्रेतपदानुष्ठेयश्राद्धम् ।

तथा दक्षः—नैमित्तिकानि काम्यानि निपतन्ति यथा यथा ।

तथा तथैव कार्य्याणि न कालस्तु विधीयते ॥

नैमित्तिकानि आगन्तुकनिमित्तोपनिपातविहितानि अद्भुत दर्शनप्रतीकारादीनि ।

तथा भीमपराक्रमे—

अधिमासके विवाहं चूडां यात्रां तथोपनयनादि ।

कुर्य्यान्न* सावकाशं मङ्गल्यं न च विशेषेण्याम् ॥

सावकाशं यदन्यस्मिन् काले कर्त्तुं शक्यते सम्भवत्कालान्तरक-

---

* ख पुस्तके—नो ।

मित्यर्थः सावकाशमिति पूर्व्वेण सम्बध्यते तेन सावकाशं विवाहं चूड़ां तथान्यदपि सावकाशमुपनयनादिकं मङ्गल्यं न कुर्य्यात् तथा विशेषेण्यां सम्भवत्कालान्तरामिष्यामग्निष्टोमादिकं न कुर्य्या-दित्यर्थः। यात्रा तीर्थयात्रा राज्ञो विजययात्रा च।

यथा लघुयात्रायाम्—

नावमरात्रे यायाद्दोषस्तत्राधिमासके व्यसनम्। इति।

सावकाशविशेषणादुपस्थित–परचक्रादि–भयेनासम्भवत्कालान्तरां यात्रां ऊँभरकाले कन्यारजोयोगप्रात्यत्वादिसम्भावनया चा-सम्भवत्कालान्तरकं विवाहोपनयनादि तथाऽपाटवादिनिमित्तक मसम्भवत्कालान्तरकं ग्रहयज्ञ-कावोर्य्यादिकं मलमासेऽपि कुर्य्या-देवेत्यर्थः।

तथा—अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः।

षष्ठेऽन्नप्राशनं मासि चूड़ा कार्य्या यथाकुलम्॥

इति याज्ञवल्क्येन एकादशाह-चतुर्थ-षष्ठाष्टमेषु विहितत्वान्नाम-करण-निष्क्रमणान्नप्राशनान्यप्यसम्भवत्कालान्तरकाणि तथा कुला-न्तरप्राप्ते षष्ठमासे क्रियमाणं नामकरणञ्च मुख्यकालकरणे कालान्तरस्य संस्काराप्रकर्षप्रयोजकत्वात्।

तथा कालमाधवीयधृत-काठकगृह्ये*—

अनन्यगतिकां नित्यं कुर्य्यान्नैमित्तिकां क्रियाम्।

अनन्यगतिकामसम्भवत्कालान्तरामित्यर्थः॥

एवञ्च जातकर्म्म-जातेष्टि-पुत्रजन्मनिमित्तक-जन्मदिनविहित

* ग पुस्तके—गृह्यवचोऽलिखितम्।

गोहिरण्यादिकदान-सूतिकाषष्ठ्यादिदेवतापूजादीन्यसम्भवत्कालान्तरकाणि कर्त्तव्यान्येव।

तथा आर्द्रास्थरवौ विहितत्वादसम्भवत्कालान्तरकं मन्नोदक श्राद्धमपि कार्य्यम्। तथैकादश्युपवासोऽपि कार्य्यः।

पक्षे पक्षे च कर्त्तव्यमेकादश्यामुपोषणम्।

इत्यादिवचनेन प्रतिपक्षपुरस्कारेण विहितत्वादसम्भवत्कालान्तरत्वात्तदकरणे तत्पक्षीयविधिबाधात्। तथा दर्शश्राद्धमपि मलमासे कार्य्यं प्रतिमासविहितत्वेनासम्भवत्कालान्तरकत्वात्।

यथा कात्यायनः—

श्रद्धान्वितः श्राद्धं कुर्व्वीत शाकेनाप्यपरपक्षं नातिक्रामेत।

मासि मासि वोऽशनमिति श्रुतेः।

आपस्तम्बः—

मासि मास्यपरपक्षस्यापराह्णः श्रेयानिति।

सामान्यमासमात्रपुरस्कारेण विहितस्य दर्शश्राद्धस्य मलमासाकरणे लोप एव स्यात्।

नच—

सपिण्डीकरणादूर्द्ध्वं यत् किञ्चित् श्राद्धिकं भवेत्।

इष्टं वा यथवा पूर्त्तं तन्न कुर्य्यान्मलिम्लुचे॥

इति लघुहारीतेन दर्शश्राद्धमपि सपिण्डनोत्तरश्राद्धत्वात् पर्य्युदस्तमिति वाच्यम्।

अन्यत्वावश्यकाद्विधेरिति वचनेन उपरागश्राद्ध नित्यश्राद्धादिवदस्यापि प्रतिप्रसवात्।

ननु—

षष्ठ्या तु दिवसैर्मासः कथितो बादरायणे* ।

पूर्व्वमर्द्धं परित्यज्य उत्तरार्द्धं प्रशस्यते ॥

इति वचनान्मासैक्येन दर्शश्राद्धस्यापि सकृद्विधानात् सावकाशत्व मिति वाच्यम् ।

मासद्वयस्य नामैक्येन षष्ठ्या दिवसैरेकमासत्वस्य भाक्तत्वात् दर्शान्तत्रिंशत्तिथिपुरस्कारेण विहितं यत् कर्म्म तदुत्तरे प्रकृत-वैशाखादौ मास्येव कुर्य्यात् सावकाशत्वात् नतु मलमास इत्यर्थः।

एवञ्च निरवकाशं दर्शपौर्णमास्यैकादश्युपवासादिकं यथा प्रतिमासं क्रियते तथा दर्शश्राद्धमपीति ।

तथाच ऋष्यशृङ्गः—

अवषट्कारहोमश्च पर्व्व चाग्रयणं तथा ।

मलमासेऽपि कर्त्तव्यं काम्या इष्टीर्विवर्ज्जयेत् ॥

अवषट्कारहोमः सायंप्रातर्होमो† वैश्वदेवश्च पर्व्व दर्शपौर्णमासौ पिण्डपितृयज्ञश्च ।

यद्यपीष्टिसाहचर्य्यात् दर्शश्राद्धं नोच्यते तथापि तुल्यन्यायात् तदपि आग्रयणं नवशस्येष्टिः सान्निकर्त्तव्या ।

यद्यप्याग्रयणं सावकाशं तथापि वचनान्मलमासेऽपि कार्य्यं काम्यास्तु सावकाशा इष्टी विवर्ज्जयेत् निरवकाशास्तु कारीर्य्यादिकाः कर्त्तव्या एवेति प्रागुक्तम् ।

* ग पुस्तके—बादरायणैः ।

† ग पुस्तके—अग्निहोत्रम् ।

तथा हारीतः—

आद्यो मलिम्लुचो ज्ञेयो द्वितीयः प्रकृतः स्मृतः।
तस्मिंस्तु प्रकृते मासि कुर्य्यात् श्राद्धं यथाविधि॥
तथैवाभ्युदयं कार्य्यं नित्यमेकं हि सर्व्वदा।

वैशाखादिमासविशेषपुरस्कारेण विहितं यत् तच्छ्राद्धं मासद्वयस्यैक-मासत्वेनोत्तरे मासि वैशाखादौ सावकाशत्वात् सम्भवत्कालान्तरकं व्रीहियवपाकनिमित्तक-युगाद्याद्ययुक्तृक्षयपक्षादिविहितं अभ्युदयश्च विवाहादि सावकाशं प्रकृतमास एव कार्य्यं न तु मलमासे इति तात्पर्य्यम्।

प्रकृतमासकरणस्य तत्तद्विधिवाक्यैरेव प्राप्तत्वात् नित्य-मावश्यकमसम्भवत्कालान्तरकमित्यर्थः। तच्च केवलं मलमासेऽपि सर्व्वदा कार्य्यम्। एतच्चान्यत्रावश्यकाद्विधेरिति ग्रह्यपरिशिष्ट-वचनेन समानार्थकम्। एवञ्च दर्शश्राद्धैकादश्युपवासकावौर्य्यादिकं सुतरां कर्त्तव्यमित्यायातम्।

तथा सावकाशकर्म्मणां निषेधमाह ज्योतिःपराशरः—

बाले वा यदि वा वृद्धे शुक्रे चास्तमुपागते।
मलमास इवैतानि वर्ज्जयेद्देवदर्शनम्॥
अग्न्याधेयं प्रतिष्ठाञ्च यज्ञ-दान-व्रतानि च।
देवव्रत-वृषोत्सर्ग-चूड़ाकरण-मेखलाः।
माङ्गल्यमभिषेकञ्च मलमासे विवर्ज्जयेत्॥

एतानि वक्ष्यमाणानि अग्न्याधेयादीनि मलमास इव शुक्रास्तादि-ष्वपि व र्जयेत्।

देवदर्शनं प्रथमदेवदर्शनमिति प्रागेवोक्तम्, यज्ञः काम्यो ऽग्निष्टोमादिः नित्योऽपि वसन्तकर्त्तव्यः सोमयागो मासान्तरे सावकाशत्वान्न कर्त्तव्यः, दानञ्चात्र महादानम् ।

वापी-कूप-तड़ागानि प्रतिष्ठा यज्ञकर्म्म च ।
न कुर्य्यान्मलमासे च महादान व्रतानि च ॥

महादानशब्दस्तुलापुरुषादिषु षोड़शसु नामार्थो यामदग्न्यादिषु रामशब्दवदनुगमकधर्म्माभावात् ।

तान्युक्तानि मत्स्यपुराणे यथा—

आद्यं स्यात् सर्व्वदानानां तुलापुरुषसंज्ञितम् ।
हिरण्यगर्भदानञ्च ब्रह्माण्डं तदनन्तरम् ॥
कल्पपादपदानञ्च गोसहस्रञ्च पञ्चमम् ।
हिरण्यकामधेनुश्च हिरण्याश्वस्तथैव च ।
हिरण्याश्वरथस्तद्वत्तद्वद्धेमरथस्तथा ॥
पञ्चमाङ्गलिकं तद्वत् धरादानं तथैव च ।
द्वादशं विश्वचक्राः* स्यात्तद्वत्कल्पलतात्मकम् ॥
सप्तसागरदानञ्च रत्नधेनुस्तथैव च ॥
महाभूतघटस्तद्वत् षोड़शः परिकीर्त्तितः ॥

तथा सुवर्णकृष्णाजिनाचलतिलधेन्वादिदानमपि मलमासे न कार्य्यम् ।

समाहये साष्टमासे तस्मान्मासोऽत्यरिच्यते ।
स चाधिमासकः प्रोक्तः काम्यकर्म्मसु गर्हितः ॥

* ग पुस्तके विश्वचक्रम् ।

इति विष्णुधर्म्मोत्तरेण काम्यकर्म्मनिषेधात्। मुमुक्षुणा त्वनभिसंहितफलं कर्त्तव्यमेवेति।

न च महादानव्रतानि चेति विशेषनिषेधो व्यर्थ इति वाच्यम्। अनभिसंहितफलस्यापि महादानस्य पर्य्युदसनीयत्वेन चरितार्थत्वात्।

केचित्तु—

महादानपदं त्वायोगव्यवच्छेदकं न त्वन्यदानव्युदासकं काम्यकर्म्मसु गर्हित इत्यनेन सर्व्वदानपर्य्युदासादित्याहुः।

देवव्रतं नियमपूर्व्वकवेदपाठः वृषोत्सर्गैकादशाहविहिततरः सपिण्डनोत्तरकर्त्तव्यः कार्त्तिक्यादौ विहितः सावकाशत्वात् पर्य्युदासविषयः। एकादशाहविहितस्तु निरवकाशत्वान्नैमित्तिकत्वाच्च नैपक्षिकश्राद्धवदुपरागनिमित्तकस्नानादिवच्च कर्त्तव्य एवेति प्रागुक्तम्।

मङ्गल्यं प्रतिपादोक्त(?)चूड़ाकरणोपनयनातिरिक्तं नामकरणान्नप्राशविवाहादीनां बलीवर्द्दमानयेत्यादिवत् विशेषदर्शनेन सामान्यशब्दविशेषपरत्वात्।

अभिषेको राज्याभिषेकः। अत्र व्रतस्यारम्भ एव पर्य्युदस्यते सावकाशत्वात्—

ऋक्षैकमन्दिरगतौ यदि जीवभानू
शुक्रोऽस्तगः सुरवरैकगुरुश्च सिंहे।
नारभ्यते व्रत-विवाह-गृहप्रतिष्ठा
चौरादिकर्म्म गमनागमनञ्च धीरैः॥

इति कश्यपवचनेन कालाशौचे व्रतारम्भनिषेधदर्शनात् मल-मासेऽपि तुल्यन्यायाच्च।

आरब्धव्रतन्तु वत्सरं प्रतिमासं कुर्य्यात् इति मासमात्रपुर-स्कारेण विधानात् निरवकाशत्वेन मलमासेऽपि कर्त्तव्यं प्रतिष्ठा तु न कार्य्या कालान्तरे सावकाशत्वात्।

यथा रम्भाहतीयाव्रतं शिवरहस्ये—

मासि मलिम्लुचेऽप्येवं यजेद्देवीं सशङ्कराम्।
किन्तु नोद्यापनं कार्य्यमित्याह भगवान् शिवः॥

यत्र तु व्रते द्वादशसु मासेषु मासविशेषोल्लेखेन कर्म्मविशेष उक्त-स्तदुत्तरे प्रकृते मासि सावकाशत्वान्मलमासे न कर्त्तव्यम्। यथा सर्व्वजयाव्रतादि च।

तथाच लिङ्गपुराणे—

प्रारब्धे तु व्रते पश्चात् संप्राप्ते त्वधिमासके।
पूर्व्वमानेन तं त्यक्ता कार्य्यं द्वादशमासिकम्॥

पूर्व्वमानेन मलमासशून्याब्दमानेन तं मलमासं त्यक्ता द्वादशसु मासेष्वेव कार्य्यमित्यर्थः।

तथा सावकाशकर्म्मणां निषेधमाह ज्योतिषम्—

यदा शशी याति गभस्तिमण्डलं
दिवाकरः संक्रमणं करोत्यधः।
तदाधिमासः कथितो विरिञ्चिना
विवाहयात्रोत्सवयज्ञदूषकः॥

गभस्तिमालिनः सूर्य्यस्य मण्डलं मध्यपदलोपी समासः, यदा

अशौ याति अमावस्यान्तिमक्षण इत्यर्थः। अमावस्यामतिक्रम्याथः प्रतिपत्समये रविः सञ्चारं करोतीत्यर्थः।

कानिचित्तु वचनबलात् मलमासेऽपि सावकाशानि कार्य्याणि। यथा लघुहारीतः—

प्रत्यब्दं द्वादशे मासि कार्य्या पिण्डक्रिया बुधैः।
क्वचित् त्रयोदशे मासि आद्यं मुक्त्वा तु वत्सरम्॥
चक्रवत् परिवर्त्तेत सूर्य्यः कालवशाद्यतः।
अतः सांवत्सरं श्राद्धं कर्त्तव्यं मासचिह्नितम्॥
मासचिह्नन्तु कर्त्तव्यं पौषमाघाद्यमेव हि।
यतस्तत्र विधानेन मासः स परिकीर्त्तितः॥
असंक्रान्तेऽपि कर्त्तव्यमाब्दिकं प्रथमं द्विजैः।
तथैव मासिकं पूर्व्वं सपिण्डीकरणन्तथा॥
गर्भे वार्द्धुषिके भृत्ये मृतानां पिण्डकर्म्मसु।
सपिण्डीकरणे चैव नाधिमासं विदुर्बुधाः।

मृताहे प्रतिसंवत्सरं कुर्य्यादित्यनेन मृताहविहितं सांवत्सरिकं श्राद्धं प्रत्यब्दं मृताहादवधेर्मृताहपर्य्यन्तं मास इति व्यवस्थया द्वादशे मासि कार्य्यमित्युत्सर्गः।

क्वचित्तु—

वत्सरे द्वादशे वा मासि तत्पूर्व्वेषु वा मासेषु मलमासपाते त्रयोदशे मासि कार्य्यं तस्यैव प्रकृतमासत्वात्।

आद्यन्तु सांवत्सरिकं वचनादुत्तरं प्रकृतमासं विहाय द्वादशे मलमास एव सपिण्डनानन्तरं कार्य्यं सांवत्सरिकविधेः सपिण्डनो

त्तरकालप्राप्तत्वात्। मध्याधिमासे तु त्रयोदशे मासि श्राद्धं वक्ष्यते।

ननु सौरत्रयोदशमासस्य सौरमृतमासेतरत्वात् कथन्तत्र श्राद्ध-मित्याह चक्रवत् परिवर्त्ततेति चक्रवत् परिभ्रमणवशेन गतेर्मन्दत्व-शीघ्रत्वाभ्यां कदाचिदेकराशिभोगे तिथिद्वयप्राप्तौ श्राद्धसंशयात् कदाचिद्वा मृततिथेरलाभे श्राद्धलोपापत्तेस्तदा च प्रतिसंवत्सरं कुर्य्यादिति विधिबाधापत्तेः सौरमासचिह्नं विहाय पौषमाघादि-चान्द्रमासचिह्नितं सांवत्सरिकश्राद्धं कार्य्यं यतस्तत्र सांवत्सरिक-श्राद्धे विधानेन शास्त्रेण स माघादिचिह्नितश्चान्द्रो मासः प्रकी-र्त्तितः स च चान्द्रमासो ह्यारीतेनैव इन्द्राग्नी यत्र हूयेते इत्यादि-नाभिहितः।

आद्यं मुक्त्वा तु वत्सरमित्युक्तमेव स्पष्टयति—

असंक्रान्तेऽपि असंक्रान्ते मलमासे प्रथमाब्दिकं सपिण्डनानन्तर-विहितं प्रथमसांवत्सरिकं तथा सपिण्डीकरणात् पूर्व्वं मासिकं द्वादशमासिकं सपिण्डीकरणञ्च प्रकृतमुत्तरमासं विहाय कर्त्तव्यम्।

द्वादशमासिकमिति व्याख्याय सपिण्डीकरणानन्तरक्रियमाणं सांवत्सरिकश्राद्धमनादृत्य प्राचामाचारो दुराचार एवेति वदन्ति। तदशुद्धं मृताहे प्रतिसंवत्सरं कुर्य्यादिति वीप्साबाधापत्तेः। आद्यं मुक्त्वा तु वत्सरमित्यनेन प्रकृते त्रयोदशे मासि निरस्य द्वादश एव मलमासे प्रत्यब्दविहितस्य सांवत्सरिकश्राद्धस्य प्रथम-वत्सरे दर्शितत्वाच्च।

अतःसांवत्सरं श्राद्धमित्यनेन प्रत्यब्दविहितश्राद्धस्यैवोपसंहा-राच्च— तथैव मासिकं पूर्व्वं सपिण्डीकरणन्तथा।
इत्यनेन द्वादशमासिक-सपिण्डीकरणयोः पृथक्प्रतिप्रसवाच्च।

आब्दिकं प्रथमं नरैरित्यत्र प्रथमपदवैयर्थ्याच्च।

मृताहे प्रतिसंवत्सरं कुर्य्यादिति विधिविहितस्यैव सांवत्सरिकस्य हि प्रथमद्वितीयादिव्यवहारो युज्यते न तु द्वादशमासिकस्येति।
न च द्वादशमासिकमेव सांवत्सरिकश्राद्धमिति वाच्यं

मृताहनि तु कर्त्तव्यं प्रतिमासन्तु वत्सरम्।
प्रतिसंवत्सरञ्चैव आद्यमेकादशेऽहनि॥

इति याज्ञवल्क्येन वत्सरं व्याप्य प्रतिमासं कुर्य्यादित्यनेन विहितस्य द्वादशमासिकस्य प्रतिसंवत्सरविध्यगोचरत्वात्।

यच्चान्यदुक्तमाधुनिकैः—

प्रतिमासन्तु वत्सरं प्रतिसंवत्सरञ्चैव-इत्यनेन सामान्यविशेष न्यायात् पदाहवनीयवत् प्रथमाब्देतरप्रत्यब्दे* विधीयमानं कथं प्रथमाब्दे प्रसज्जेततेति। तदतीवाशुद्धम्।

सामान्यविशेषन्यायस्यैकविषयकत्वनियमात् अन्यथातिप्रसङ्गात्।

न चात्र प्रतिमासं कुर्य्यात् प्रतिसंवत्सरञ्च कुर्य्यादिति विधि-द्वयस्यैकविषयकताऽस्ति अन्यथामावस्यायां पितृभ्यो दद्यादित्य-स्य मृताहे प्रतिसंवत्सरं कुर्य्यादित्यस्य सामान्यविशेषन्याया-दमावस्येतरपरत्वमस्तु।

* ग पुस्तके—चिह्नितांशः पतितः।

न च वत्सराधिकरणतासम्प्रदायैकविषयता वाच्या मासिक-श्राद्धविधेर्वत्सरान्तर्गतमासा एवाधिकरणानि प्रत्यब्दविधेस्तु वत्सर इति कथमेकविषयता।

किञ्च—

प्रत्यब्द-प्रतिमासविध्योर्व्याप्यव्यापकभावाभावेन स्वातन्त्र्यात् सामान्यविशेषभावस्य कः प्रसङ्गः-उभयोरविशेषत्वादिति।

नच—

पदेषु जुहोतीत्यस्यापि वाक्यस्य पदहोमविधौ अग्न्याधानस्याशक्यत्वादग्नौ जुहोतीति विधेः सङ्कोचवदत्रापि सङ्कोचोऽस्त्विति वाच्यम्। हेत्वभावात् समानविषयत्वाभावाच्च।

किञ्च आद्यं मुक्ता तु वत्सरमित्यनेन हारीतेन कथं प्रक्रान्तत्रयोदशमासं विहाय द्वादश एव मासे प्रथमाब्दे प्रथमाब्दिकश्राद्धं विहितम्।

यच्च—

ब्राह्मणाय दधि दीयतां तक्रं कौण्डिन्यायेतिवत् प्रतिमासञ्च वत्सरं प्रतिसंवत्सरञ्चेत्यत्रोक्तिबाधया प्रथमवत्सरेतरपरत्वं प्रति-संवत्सरविधेरिति तेरुक्तम्। तदप्यतीवायुक्तम्—

उक्तिबाधाया अपि समानविषयकत्वनियमात्।

अतएव चैत्रो भुङ्क्ते मैत्रो व्रजतीत्यत्र नोक्तिबाधा॥

किञ्च यदि पूर्व्वोक्तसामान्यविधिमपेक्ष्य उत्तरस्य विशेषविधेः प्रवृत्तिः स्यात् तदा सामान्यविधिरुक्तिबाधाविषयः स्यात्। नच प्रत्यब्दविधिमपेक्ष्य प्रतिमासविधिः, न वा सामान्यविशेषभावो

व्याप्यव्यापकभावाभावात्। नवा प्रत्यब्दविधिः पूर्व्वः प्रत्युत याज्ञवल्क्यवचने प्रत्यब्दविधिः पर एव श्रूयते इत्युक्तबाधायाः कः प्रसङ्गः।

किञ्च हारीतेन प्रथमाब्देऽपि सांवत्सरिकश्राद्धविधानमसङ्गतं स्यात्।

न च द्वादशमासिकश्राद्धे तन्त्रेणैव सांवत्सरिकं सिद्धमिति वाच्यं वाक्ये उभयोरुल्लेखप्रसङ्गाद्द्वादशमासिके प्रेतपदवत्त्वेन देवतात्वं सांवत्सरिके तु पितृपदवत्त्वेन देवतात्वमिति देवताभेदेन तन्त्रतावगमाच्च फलभेदेन प्रयोगभेदाच्च द्वादशमासिकस्य प्रेतत्वपरोक्षारः फलं सांवत्सरिकस्य तु पितृतृप्तिरिति।

एतेनानुषङ्गोऽपि निरस्तः प्रतिसांवत्सरिकविधेः सपिण्डनोत्तरकालविहितत्वेन कालभेदाच्च।

न च सपिण्डनश्राद्धमेव सांवत्सरिकश्राद्धमिति वाच्यं विधिभेदेन फलभेदेन च श्राद्धभेदात् सपिण्डनस्य पार्व्वणैकोद्दिष्टाङ्गतया द्वाङ्गकत्वेन सांवत्सरिकेतरत्वाच्च हारीतेन पृथग्विहितत्वाच्चेति।

अतएवापराह्ले क्रियमाणसपिण्डनानन्तरमपराह्ल एव मृताहे प्रथमसांवत्सरिकमवश्यमेव प्राच्चः कुर्व्वन्ति। रात्रिसायाह्नतरस्यैव श्राद्धयोग्यकालत्वादिति।

अस्यैव श्राद्धस्य प्रतिग्रहे एकाहः पुनराब्दिक इति वचनेन प्रायश्चित्तमुपदिश्यते॰। पुनराब्दिकं प्रथमप्रत्याब्दिकं इत्यर्थः।

यत्तु —

पूर्व्वंत्रुवार्षिकं श्राद्धं परंतु: पुनराब्दिकम्।

इति शङ्खनाम्ना वचनं पठन्ति तदमूलं तत्संहितायामदृष्टत्वात्

समूलत्वेऽपि पूर्व्वदिने अपराह्णानुरोधे कृते सपिण्डीकरणे परदिने यदि मृततिथेर्मध्याह्ने लाभः स्यात्तदा परेद्युरपि पुनराब्दिकं श्राद्धं कार्य्यं न तु सपिण्डनसाहचर्य्यात् पूर्व्वदिन एवेति नियम इति वचनार्थः।

अतः प्रथमसंवत्सरेऽपि सांवत्सरिकमवश्यं कार्य्यमिति सिद्धम्। ततश्चापकृष्य कृते सपिण्डीकरणे सांवत्सरिकस्यापकर्षविधानाभावात् पूर्णे संवत्सरे तदवश्यं सुतरामेव कार्य्यम्।

तदस्तु प्रकृतमनुसरामः।

गर्भे वार्द्धुषिके कृत्येचेति—

गर्भे गर्भकृत्ये-गर्भाधान-पुंसवन-सीमन्तोन्नयने वार्द्धुषिके कृत्ये धनवृद्धिग्रहणे मृतानां पिण्डकर्म्मसु दशाहिकपिण्डदानाद्यश्राद्धमासिकादिषु सपिण्डीकरणे च नाधिमासदोषं विदुस्तान्यधिमासे तु कर्त्तव्यानीत्यर्थः।

मृतानां पिण्डकर्म्मस्विति प्रेतश्राद्धं तथैव चेति वृहस्पतिवचनसमानार्थं सपिण्डीकरणन्तथेति पूर्व्वोक्तेऽपि प्रतिप्रसवे पुनः सपिण्डीकरणपदं सपिण्डनापकर्षार्थम्।

ननु मलमासपाते त्रयोदशेऽपि सपिण्डनमाह विष्णुधर्म्मोत्तरं-

संवत्सरस्य मध्ये तु यदि स्यादधिमासकः।
तदा त्रयोदशे मासि क्रिया प्रेतस्य वार्षिकी॥

तथा सत्यव्रतः—

संवत्सरस्य मध्ये च यदि स्यादधिमासकः।
तदा त्रयोदशे श्राद्धं कार्य्यं तदधिकं भवेत्॥

विष्णुः—मासिकार्थवत् द्वादशाहं श्राद्धानि कृत्वा त्रयोदशेऽह्नि वा कुर्य्यात्* संवत्सरस्य मध्ये यद्यधिमासो भवेत् तदा मासिकार्थे दिनमेकं वर्द्धयेत्।

अस्यार्थः—अशौचापगमे द्वादशसु दिनेषु द्वादशमासिकानि कृत्वा त्रयोदशेऽह्नि सपिण्डनापकर्षं कुर्य्यात् यदि तद्वत्सरमध्येऽधिमासः स्यात्तदा श्राद्धदिनमेकं वर्द्धयेत्।

तेन त्रयोदशदिनेषु त्रयोदशमासिकानि कृत्वा चतुर्द्दशाहे सपिण्डनमिति।

विष्णुधर्म्मोत्तरे—

मध्ये चेदधिमासः स्यात् कुर्य्यादभ्यधिकं ततः।

सत्यं—एतेषां वचनानां मध्यपदश्रुतेर्मध्याधिमासविषयत्वं हारीतवचनस्त्वन्त्याधिमासविषयमिति न विरोधः।

एतुश्चात मध्याधिमासे द्वादशे मासि सपिण्डीकरणस्यासम्भवो मृतमासीयमृताहाप्राप्तेरेवमाद्याधिमासेऽपि। अन्त्याधिमासे तु मासद्वयस्यैकनामत्वात् मृतमासीयतिथिलाभः।

एतेनैतदुक्तं भवति द्वादशमासेऽधिमासपाते तत्रैव सपिण्डनं सांवत्सरिकं कार्य्यम्।

यदा त्वन्येष्वेकादशसु मासेषु अधिमासः स्यात् तदा त्रयोदशसु त्रयोदशश्राद्धानि कृत्वा त्रयोदशे मासि सपिण्डनं सांवत्सरिकञ्च कार्य्यमिति।

* [illegible] पुस्तके अधिक पाठ अन्तर्गतं हि [illegible]।

चयमासस्य पूर्व्वमासमरणे तु मध्येऽधिमासपातेऽपि द्वादश-मास्येव सपिण्डनं तत्रैव मृतमासीयप्राप्तेः—न तु त्रयोदशमासे वचनानां युक्तिमूलत्वात् चयमासस्योत्तरमासमरणे तु त्रयोदशमास्येव निर्व्विवादं तत्रैव मृताहलाभादिति ध्येयम् ।

अमावस्यामृतस्य तु मध्ये मलमासपातेऽपि न तत्र मासिकं किन्तु तिथ्यन्तरमृतस्यैव ।

यथा समयप्रकाशधृता कुथुमिः—

अब्दमम्बुघटं दद्यादन्नञ्चामिषसंयुतम् ।
संवत्सरे विवृद्धेऽपि प्रतिमासस्य मासिकम् ॥
संवत्सरातिरेको वै मासस्यैव त्रयोदश ।
तस्मिंस्त्रयोदशे श्राद्धं न कुर्य्यादिन्दुसंचये ॥

संवत्सरे विवृद्धे मलमासपातेन मासाधिक्यादित्यर्थः । किन्त्वत्रापि त्रयोदश एव मासि सपिण्डनं सांवत्सरिकञ्च तत्रैव मृतमासीय-तिथिप्राप्तेः ।

यत्तु—संवत्सरातिरेको वै मासस्यैव त्रयोदश ।
*तस्मात्त्रयोदशं श्राद्धं न कुर्य्यान्नोपतिष्ठते ॥

इति ऋष्यशृङ्गवचनं तदन्याधिमासविषयममावस्यामृतविषयं वा ।

यच्च—जातकर्म्मणि यच्छ्राद्धं नवश्राद्धं तथैव च ।
प्रतिसंवत्सरश्राद्धं मलमासेऽपि तत् स्मृतम् ॥

इति सत्यव्रतवचनम्—

* न पुस्तके तदा त्रयोदशम् ।

यच्च —

वर्षे वर्षे च कर्त्तव्यं मातापित्रोर्मृताहनि।
मलिम्लुचेऽपि कर्त्तव्यं व्याघ्रस्य वचनं यथा॥

इति व्याघ्रवचनम्—

यच्च —

न कुर्य्यान्मलमासे तु काम्यं कर्म्म कथञ्चन।
त्यक्त्वा नैमित्तिकं श्राद्धं तद्धि तत्रैव कीर्त्तितम्॥
एकोद्दिष्टन्तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते।

इति प्रजापतिवचनं तत् यदि साकरं स्यात्तदा तत् सर्व्वमस्याधिमासविषयं हारीतवचनसमानार्थं वर्णनीयम्। वर्षे वर्षे च यच्छ्राद्धं प्रत्याब्दिकश्राद्धमित्यर्थः

अथवा—

मलमासमृतानाञ्च श्राद्धं यत्प्रतिवत्सरम्।
मलमासेऽपि कर्त्तव्यं नान्येषान्तु कदाचन।

इति पैठीनसिवचनैकवाक्यतया मलमासविषयम्।

तथा चोशनाः—

मलमासमृतानान्तु यच्छ्राद्धं प्रतिवत्सरम्।
मलमासे तु तत्कार्य्यं नान्येषामिति निश्चयः॥

ज्योतिषे—

न यात्रां न विवाहञ्च न च वास्तुनिवेशनम्।
न परीक्षां न प्रतिष्ठां कुर्य्यात् प्रासादभूरुहाम्॥
न हिरण्यं न वासांसि धारयेन्मलमासके।

वास्तुनिवेशनं वास्त्वारम्भम्।

तथा

उद्यानविद्यागृहकर्णवेध--

प्रासादशङ्काद्युपभोगयात्राः।

कुर्य्यान्नरो नैव गृहप्रवेशं

मलिम्लुचे मासि तथैव मङ्गलम्॥

श्रीगोविन्दपदद्वन्द्वध्यानदीपाभिदीपिता।

प्रेक्षावतां प्रेक्षणीया कालशुद्धिर्निरूपिता* ॥

(क) पुस्तके--विवेचिता।

## अथोदकशुद्धिः ।

एवं कालशुद्धिं निरूप्येदानीं जलादीनां शुद्धिर्निरूप्यते ।

मनुः—

आपः शुद्धा भूमिगता वैतृष्ण्यं यासु गोर्भवेत् ।
अव्याप्ताश्चेदमेध्येन गन्धवर्णरसान्विताः ॥

प्रशस्तगन्ध-रूप-रसान्विताः । दुर्गन्धा निन्दितरूपा दुष्टरसाश्च वर्ज्जनीया इत्यर्थः । तत्रापां शुक्लरूप-मधुररसौ स्वाभाविकौ, गन्धस्तु यद्यपि स्वाभाविको नास्ति तथापि सांक्रामिक एव प्रशस्तो ग्राह्यः, तेन प्रशस्तगन्धान्विता गन्धहीनाश्चापः शुद्धा इत्यर्थः ।

तथा च शङ्खः,—

भूमिष्ठमुदकं शुद्धं तद्वदेव* शिलागतम् ।
गन्धवर्णरसैर्दुष्टैर्वर्ज्जितं यदि तद्भवेत् ॥

यमः—

अजा गावो महिष्यश्च ब्राह्मणी च प्रसूतिका ।
दशरात्रेण शुध्यन्ति भूमिष्ठञ्च नवोदकम् ॥

हारीतः—

मत्स्य कङ्कर शम्बूक शङ्ख शुक्ति कपर्द्दकैः ।
पीत्वा नवोदकञ्चैव पञ्चगव्येन शुध्यति ॥

---

* (ग) तथा तद्वच्छुचि ।

मत्स्याद्यस्थिनिर्म्मितपात्रैर्ज्जलं शौत्वेत्यर्थः।

अक्षोभ्याणामपां नास्ति प्रस्रुतानाञ्च दूषणम्।
स्तोकानामुद्धृतानाञ्च दोषैर्दुष्टत्वमिष्यते॥
उद्धृताश्चापि शुध्यन्ति शुद्धैः पात्रैः समुद्धृताः।
एकरात्रोषितास्तास्तु त्याज्या मेध्या अपि प्रियाः॥

प्रस्रुतानां स्रोतोजलानां, दोषैः श्लेष्म‥‥गोषादिभिः।

योगियाज्ञवल्क्यः—

अग्राह्या आगता आपो नद्याः प्रथमवेगिताः।
अक्षोभिताश्च केनापि याश्च तीर्थाद्विनिःसृताः॥

शुष्कनद्याः प्रथमवेगागता आपः, तीर्थाद्विनिःसृताः गङ्गादिप्रवाहात् पृथग्भूय विनिर्गता इत्यर्थः।

व्यासः—

त्यजेत् पर्य्युषितं पुष्पं त्यजेत् पर्य्युषितं पयः।
न त्यजेज्जाह्नवीतोयं तुलसीविल्वपङ्कजम्॥

उशनाः—

नद्यः कूपतड़ागानि सरांसि सरितस्तथा।
असद्भूतान्यदोषानि मनुः स्वायम्भुवोऽब्रवीत्॥
मृतपञ्चनखात् कूपादत्यन्तोपहतात्तथा।
अपः समुद्धरेत्सर्व्वाः शेषं शास्त्रेण शोधयेत्॥

सरितः प्रसरणशीला निर्झरा इत्यर्थः, कूपादिति संहृतोदकोपलक्षणं, शास्त्रेण शास्त्रविधिनेत्यर्थः।

अत्यन्तोपहतत्वमाह आपस्तम्बः—

शिरोरुहाणि विण्मूत्रं स्त्रीरजो मद्यमेव च।
एभिश्च दूषिते कूपे कुम्भानां शतमुद्धरेत्॥

एवञ्च कुम्भशतोद्धरणे यत्र मर्य्यादारी भवति तत्रैव मर्य्यादारः। अधिकजले तु घटशतोद्धरणं कृत्वा शोधयेत्।

शोधनमाह बृहस्पतिः—

वापीकूपतड़ागेषु दूषितेषु विशोधनम्।
घटानां शतमुद्धृत्य नदीतोयं ततः क्षिपेत्॥
पञ्चगव्यं ततः क्षिप्त्वा ब्राह्मणान् स्वस्ति वाचयेत्॥

स्वस्ति वाचयेत् ब्राह्मणेभ्यः किञ्चिद्देयमित्यर्थः। अतिमहत्सु तड़ागादिषु दोषाभाव इत्युक्तमेव।

तथाच बृहद्विष्णुः—

जलाशयेष्वथाल्पेषु स्थावरेषु महीतले।
कूपवत् कथिता शुद्धिर्महत्सु न तु दूषणम्॥

स्थावरेषु स्थिरतरेषु।

अङ्गिराः—कूपे विण्मूत्रसंसृष्टे पीत्वा तोयं द्विजोत्तमः।
त्रिरात्रेण विशुध्येत कुम्भे सान्तपनञ्चरेत्॥
यस्तु कूपे पिबेत्तोयं ब्राह्मणः शवदूषिते।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति॥

देवलः* —क्लिन्नो भिन्नः शवश्चैव कूपस्थो यदि दृश्यते।
पयः पीत्वा त्रिरात्रन्तु मानुषे द्विगुणं स्मृतम्॥

(*) पुस्तके देवलवचनं शोधितम्।

आपस्तम्बः—

अन्त्यजैः खनिताः कूपा स्तड़ागानि तथैव च।
एषु स्नात्वा च पीत्वा च पञ्चगव्येन शुध्यति॥

अन्त्यजाः कैवर्त्तादयः।

अङ्गिराः—

चाण्डालखातकूपेषु यद्यज्ञानाज्जलं पिवेत्।
चरेत् सान्तपनं विप्रः प्राजापत्यञ्च भूमिपः॥
तदर्द्धन्तु चरेद्वैश्यः पादं शूद्रस्य स्नापयेत्*॥

अङ्गिराः—

चाण्डालभाण्डसंस्पृष्टं पिवेद् यः कूपतो जलम्।
गोमूत्रयावकाहारस्त्रिरात्रेण विशुध्यति॥

शूद्रस्वामिकजलपाने तु विशेषमाह शातातपः—

यदि विप्रः प्रमादेन शूद्रस्य तु जलं पिवेत्।
उपोष्य विल्वपत्राणां पलाशस्य कुशस्य च॥
एतेषामुदकं पीत्वा तेन शुद्धिमवाप्नुयात्॥

* ग पुस्तके—दापयेत्।

## अथ भूमिशुद्धिः ।

भूमिस्तावदशुद्धा त्रिविधा भवति, अमेध्या दुष्टा मलिना च ।

यथा देवलः—

प्रसूते गर्भिणी यत्र म्रियते यत्र मानुषः ।
चाण्डालैरुषितं यत्र यत्र वा दह्यते शवः ॥
विण्मूत्रोपहतं यत्र कुणपो यत्र दृश्यते ।
एवं कश्मलभूयिष्ठा भूरमेध्येति कथ्यते ॥

चाण्डालैरुषितं चाण्डालवसतिस्थानं, विण्मूत्रोपहतं प्रत्यहं विण्मूत्र-करणेनोपघातः, कुणपः शवः ।

दुष्टामाह स एव—

(क्रि) कृमि कीटपदक्षेपैर्दूषिता यत्र मेदिनी ।
तप्सापकर्षणैः छिन्नैर्वान्तैर्वा दुष्टतां व्रजेत् ॥

तप्समघनीभूतं अपकर्षणं श्लेष्मादि ।

मलिनामाह—

नख-दन्त तनूज त्वक् तुष-पांशु-रजोमलैः ।
भस्म-पङ्क-तृणै र्वापि मन्त्रना मलिना भवेत् ॥

तनूजं लोम ।

शुद्धिमाह देवलः —

दहनं खननं भूमेरुपलेपन-वापनं ।
पर्जन्यवर्षणञ्चेति शौचं पञ्चविधं स्मृतम् ॥
पञ्चधा वा चतुर्धा वा भूरमेध्या विशुध्यति ।
द्विधा त्रिधा वा दुष्टा तु शुध्यते मलिनैकधा ॥

वापनं मृदन्तरेण पूरणं, उपघातभूयस्त्वाल्पत्वाभ्यां दहनादिभिः पञ्चभिर्वापनान्तैश्चतुर्भि र्वा भूरमेध्या विशुध्यति। दुष्टा तु दहनादिभिस्त्रिभि र्दहनलेपनाभ्यां वा। मलिना तूपलेपनमात्रेण शुध्यतीत्यर्थः।

याज्ञवल्क्यः—

भूशुद्धिर्मार्ज्जनाद्दाहात् कालाद्गोक्रमणादपि।
सेकादुल्लेखनाल्लेपाद् गृहं मार्ज्जनलेपनात्॥

मार्ज्जनमवकरनिरसनं, यावता कालेन गन्धलेपक्षयो भवति स एवात्र कालः, सेको जलक्षालनं, उल्लेखनं स्तक्षणम्। अत्र च उपघातभूयस्त्वाल्पत्वापेक्षया समुदायेन प्रत्येकेन शुद्धिरिति व्यवस्था। गृहस्य पृथगुपादानं मार्ज्जन--लेपनयोः प्रतिदिनप्राप्त्यर्थम्।

*अङ्गिराः---

यावत्यां† वापिता नीली तावती चाशुचिर्मही।
यावद् द्वादशवर्षाणि परतस्तु शुचिर्भवेत्॥
नील्या चोपहृतं क्षेत्रे धान्यं ‡यत्परिरोहति।
अभोज्यं तद्द्विजातीनां भुक्त्वा चान्द्रायणञ्चरेत्॥

सुमन्तुः—नीलीप्ररोहणं क्षेत्रं तथा वै शौण्डिकालयः।
तस्य शुद्धिः समाख्याता वर्षैर्द्वादशभिर्बुधैः॥

---

* क पुस्तके—आपस्तम्बः।
† ख पुस्तके पाठः—वापिता यत्र नीली स्यात्तावद्भूस्यशुचिर्भवेत्।
‡ ग पुस्तके—यत्तु प्ररोहति।

मरीचिः—

गृहेष्वजातिसंवेशे शुद्धिः स्यादुपलेपनात्।

संवासो यदि जायेत दाहलेपं विनिर्द्दिशेत्॥

अजातिश्चण्डालादिः, संवेशः स्वापः, संवासोऽवस्थितिः।

बौधायनः—

अनेकीदृवाह्यं दारुशिलं मार्ज्जनादुल्लेखनात् चालनाच्च शुद्धे इष्टकाः सङ्कीर्णीभूताः।

सङ्कीर्णीभूताः परस्परं ग्रथिता इत्यर्थः।

देवलः—

मार्ज्जनात् चालनाच्छुद्धिरश्मनः क्षोभितस्य च॥

यमः—

द्विजस्य मरणे वेश्म विशुध्येत दिनत्रयात्।

श्व-शूद्र-पतितास्त्वन्त्या मृताश्चेद् द्विजवेश्मनि॥

शौचं तत्र प्रवक्ष्यामि मनुना भाषितं यथा।

दशरात्राच्छुनि प्रेते मासाच्छूद्रे भवेच्छुचि॥

द्वाभ्यान्तु पतिते गेहमन्त्ये मासचतुष्टयात्।

अत्यन्त्ये वर्ज्जयेद्गेहमित्येवं मनुरब्रवीत्॥

अत्यन्त्ये पुनः पुनर्दोषोपस्थितौ।

यथोक्तकालानन्तरमपि विशेषमाह सम्वर्त्तः—

गृहशुद्धिं प्रवक्ष्यामि अन्त्यस्थशवदूषणे।

प्रोत्सृज्य मृण्मयं भाण्डं सिद्धमन्नं तथैव च॥

गृहादपास्य तत्सर्व्वं गोमयेनोपलेपयेत्।
ब्राह्मणैर्मन्त्रपूतैश्च हिरण्यकुशवारिभिः॥
सर्व्वमभ्युक्षयेद्वेश्म ततः शुध्येदसंशयम्॥

याज्ञवल्क्यः—

पन्थानस्तु विशुध्यन्ति सोमसूर्य्यांशुमारुतैः॥

निर्लेपविषयमेतत्।

तथा यमः—

रथ्याकर्द्दमतोयानि स्पृष्टान्यन्त्यश्ववायसैः।
मारुतेनैव* शुध्यन्ति पक्वेष्टकचितानि च॥

पराशरः—रथ्याकर्द्दमतोयानि नावः पन्थास्तृणानि च।
स्पर्शनान्न प्रदूष्यन्ति† पक्वेष्टकचितानि च॥

स्पर्शनादन्त्यजातीनामित्यर्थः।

यमः— ब्राह्मणावसथे भूमिं देवागारे तथैव च।
मेध्यां चैव सदा मन्येद् गवां गोष्ठे तथैव च॥

अनुपहतविषयञ्चैतत्।

मार्कण्डेयपुराणे—

रथ्यागतञ्च चेलादि तात! वाताच्छुचि स्मृतम्॥

* ग पुस्तके—मारुतार्केण।

† ग पुस्तके—मरुतार्केण शुध्यन्ति।

## अथ तैजसादिद्रव्यशुद्धिः ।

मनुः —

निर्लेपं काञ्चनं भाण्डमद्भिरेव विशुध्यति ।

अजमश्ममयञ्चैव राजतञ्चानुपस्कृतम् ॥

अजं शङ्खशुक्त्यादि, चकारात् काचपात्रञ्च, अनुपस्कृतं रेखादि-गुणान्तराधानरहितम् ।

सलेपस्य तु विशेषमाह स एव—

तैजसानां मणीनाञ्च सर्व्वस्याश्ममयस्य च ।

भस्मनाद्भिर्मृदा चैव शुद्धिरुक्ता मनीषिभिः ॥

ताम्रायःकांस्यरैत्यानां त्रपुणः शीसकस्य च ।

शौचं यथार्हं कर्त्तव्यं क्षाराम्लोदकवारिभिः ॥

यथार्हं लेपमलाद्यपकर्षानुसारेण क्षारो भस्म, अम्लोदकं जम्बीरादिरसः, अम्लोदकं ताम्ररैत्यानां सम्बध्यते, अन्येषु क्षारोदकं पश्चाज्जलेनेति सर्व्वत्र सम्बन्धः ।

शङ्खः—

क्षारेण शुद्धिं कांस्यस्य लोहस्य* च विनिर्द्दिशेत् ॥

मार्कण्डेयपुराणे—

औडुम्बराणामम्लेन क्षारेण त्रपुसीसयोः ।

भस्माम्बुभिश्च कांस्यानां शुद्धिः प्लावो द्रवस्य च ॥

---

*:न पुस्तके लौहस्यापि ।

बृहस्पतिः—

अम्भसा हेमरूप्यायः कांस्यं शुध्यति भस्मना।
अम्लाम्भसा ताम्ररैत्ये पुनर्दाहेन मृण्मयम्॥

पुनर्दाहेन मृण्मयमिति चाण्डालादिस्पर्शविषयम्।

शोणितोच्छिष्टादिस्पर्शे परित्यागमाह मनुः—

*प्रोक्षणात्तृणकाष्ठञ्च पलालञ्च विशुध्यति।
मार्ज्जनीपाञ्जने वेंश्म पुनःपाकेन मृण्मयम्॥
मद्यैर्मूत्रैः पुरीषैश्च ष्ठीवनैः पूयशोणितैः।
संस्पृष्टं नैव शुध्येत पुनःपाकेन मृण्मयम्॥

बृहद्यमः -

मणिमुक्ताप्रवालानां शङ्खानामुपलस्य च।
अजानाञ्चैव सर्व्वेषामद्भिः शौचं विशोधनम्॥

उपहतविषये काश्यपः—

सिकताभि र्दारु-दन्त-शृङ्गाश्म-शङ्ख-शुक्तीनाम्॥

सिकताभिर्जलमिश्रवालुकाभिः।

तक्षणं दारुशृङ्गास्थ्नामिति याज्ञवल्क्योक्तवचनमत्यन्तोपहत-विषयम्।

व्यासः -

मृदाद्भिः शुध्यते दारु तक्षणेनातिदूषितम्।
मार्त्तिकञ्च पुनःपाकात् त्याज्यं मूत्रादिदूषितम्॥

* ग पुस्तके पङ्क्तिरियमधिका।

अङ्गिराः—

गवाघ्रातानि कांस्यानि शूद्रोच्छिष्टहतानि च* ।
शुध्यन्ति दशभिः क्षारैः श्वकाकोपहतानि च ॥
गण्डूषं पादशौचञ्च यत्कृतं कांस्यभाजने ।
भूमौ निक्षिप्य षण्मासान् पुनर्भस्म समादिशेत् ॥

यदित्यव्ययं यस्मिन्नित्यर्थः ।

आपस्तम्बः—

भस्मना शुध्यते कांस्यं सुरया चेन्न लिप्यते ।
सुरा-विण्मूत्र-संसृष्टं शुध्यते दाहलेखनैः ॥
शूद्राणां भाजने भुक्त्वा भुक्त्वा वा भिन्नभाजने ।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥

बौधायनः—

भिन्नकांस्ये तु योऽश्नीयात् नद्यां स्नात्वा द्विजोत्तमः ।
गायत्र्यष्टसहस्रन्तु एकभक्तस्ततः शुचिः ॥

देवलः—

ताम्र-रजत-सुवर्ण-शङ्ख-शुक्ति-स्फटिकानां भिन्नमिति न दोषः† ।

बौधायनः—

तैजसानां पात्राणां मूत्र पुरीष शुक्रासृक्कुणपमद्यैरत्यन्ता— संसर्गे परिलेखनं गोमूत्रे वा सप्तरात्रं स्थापनं महानद्यां वा ।

महानदी गङ्गा ।

* ख पुस्तके—शूद्रोच्छिष्टानि यानि तु ।

† ग पुस्तके भिन्नमभिन्नम् ।

चिरकालसंसर्गे तु बृहद्विष्णुः*—

अत्यन्तोपहतं सर्व्वं लौहभाण्डमग्नौ प्रक्षिप्तं शुध्येत्। मणिमय-मश्ममयं वा सर्व्वमाजं सप्तरात्रं महीतले निखनेत्।

लौहभाण्डं सुवर्णादितैजसभाण्डम्।

ब्रह्मपुराणे—

सुवर्णं रूप्य शङ्खाश्म शुक्तिरत्नमयानि च।
कांस्यायस्ताम्र रैत्यानि त्रपुसीसमयानि च॥
सूतिकाशवविण्मूत्र रजस्वलाहतानि तु।
प्रक्षेप्यानि चैवाग्नौ यच्च यावत् सहेदपि॥

रत्नमयं स्फटिकादिमयं, सूतिकारजस्वलोपहतत्वं भोजनद्वारा, यत्पात्रं यावत्कालमग्निं सहते तावदग्नौ योजयेदित्यर्थः।

अतिचिरकालसंसर्गे बौधायनः—

तैजसानां मूत्र-पुरीषासृक्-कुणपमद्यैरधिवासितानामग्निना-वर्त्तनमतैजसानामुत्सर्गः।

शातातपः—

संहतानान्तु पात्राणां यद्येकमुपहन्यते।
तस्यैव शोधनं प्रोक्तं न तु तत्स्पर्शिनामपि॥

न तु तस्योपहतपात्रस्य स्पर्शवतामन्येषां पात्राणामित्यर्थः।

याज्ञवल्क्यः—

तक्षणं दारुशृङ्गास्थ्नां गोबालैः फलसम्भुवाम्॥

* न पुस्तके विष्णुः।

फलसम्भुशामलाबुप्रभृतीनां गोबालजलघर्षणैः शुद्धिः. उपहत-विषयश्चैतदन्यथा क्षालनेनेति ।

तथा तत्रैव—

यतिपात्राणि मृद्वेणुदार्व्वलाबुमयानि च ।
सलिलैः शुद्धिरेतेषां गोबालैश्चापि घर्षणात्* ॥

* ग पुस्तके—अश्वघर्षणात् ।

## अथ प्रोक्षणादिशुद्धिः ।

शङ्खः—

निर्य्यासानां गुड़ानाञ्च लवणानां तथैव च ।
*मूलानां कुसुमानाञ्च ऊर्णाकार्पासयोस्तथा ॥
प्रोक्षणात् कथिता शुद्धिरित्याह भगवान् यमः ॥

अत्यन्तोपहतानां गुड़ादीनां परित्यागमाह देवलः—

सर्व्वद्रवाणां मूलानां लवणस्य गुड़स्य च ।
नान्यत् शौचं परित्यागादशुद्धानामिति स्थितिः ॥

विष्णुः—

गुड़ादीनामिक्षुविकाराणां प्रभूतानां पुनः पाकेन स्नेहलवणानाञ्च† [ वार्य्यग्निदानेन ] प्रोक्षणेन तु पुस्तकानाम् ।

मनुः—

मार्ज्जनं यज्ञपात्राणां पाणिना यज्ञकर्म्मणि ।
चमसानां ग्रहाणाञ्च शुद्धिः प्रक्षालनेन तु ॥
चरूणां स्रुक्स्रुवाणाञ्च शुद्धिरुष्णेन वारिणा ।
स्फ्यशूर्पशकटानाञ्च मुषलोदूखलस्य च ॥
अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससाम् ।
प्रक्षालनेन‡ स्वल्पानामद्भिरेव§ विधीयते ॥

* ग पुस्तके कुसुम्भकुसुमानाञ्च ।
† क पुस्तके [ ] चिह्नितांशः पतितः ।
‡ क पुस्तके स्वल्पानाम् ।
§ ग पुस्तके अद्भिः शौचम् ।

चेलवच्चर्म्मणां शुद्धिं वैदलानान्तथैव च।
शाकमूलफलानाञ्च धान्यवत् शुद्धिरिष्यते ॥
प्रोक्षणात् तृणकाष्ठञ्च पलालञ्च विशुध्यति ॥

ग्रहो यज्ञपात्रविशेषः, चरूणां चरुसंसक्तानां, स्रुक्स्रुवादिपात्राणां स्नेहाक्तानामित्यर्थः, स्फ्यं यज्ञकर्म्मणि दर्व्वीविशेषः, वैदलानां वेणुवादिदलनिर्म्मितानां चेलवत् धान्यवदिति बहूनां प्रोक्षणेन स्वल्पानां क्षालनेनेत्यर्थः।

लोकाक्षिः —(लौगाक्षिः)

द्वाभ्यामूर्द्ध्वं सरक्तानि वस्त्राणि प्रोक्षणेन तु।
दशारभ्य विचित्राणि सितान्यारभ्य विंशतेः ॥

अङ्गिराः —

संहतानि च वस्त्राणि पटकुट्याविकानि च।
कामाच्चाण्डालसंस्पर्शे प्रोक्षणाच्छुद्धिरिष्यते ॥

संहतानि प्रच्छदपटादीनि, पटकुटी वस्त्रगृहं आविकं कम्बलः।

देवलः—

तूलिकामुपधानञ्च पुष्परक्ताञ्चितानि च।
शोषयित्वातपे किञ्चित्करैर्न्मार्ज्जयेन्मुहुः ॥
पश्चाच्च वारिणा प्रोक्ष्य विनियुञ्जीत कर्म्मसु।
तन्तु कौशेय-कुतप-पट्ट-क्षौम दुकूलजाः ॥
अल्पशौचा भवन्त्येते शोषणप्रोक्षणादिभिः।
तान्येवामेध्ययुक्तानि निर्णिज्याद्गौरसर्षपैः ॥

पुष्परक्तानि कुसुम्भपुष्पादिना रञ्जितानीत्यर्थः।

याज्ञवल्क्यः —

क्षौमैरुदकगोमूत्रैः शुध्यत्याविककौषिकम्।

सश्रीफलैरंशुपट्टं सारिष्टैः कुतपस्तथा॥

ऊषः क्षारमृत्तिका, आविकं कम्बलः, कौषिकं कृमिकोषोत्थं अंशुपट्टं पट्टशाटकः, कुतपो नेपालकम्बलः, अरिष्टं गौरसर्षपः, उदकगोमूत्रैरिति सर्व्वत्र सम्बध्यते, एतच्चात्यन्तोपहतविषयं पूर्व्ववचनात्।

बौधायनः—

वासोवत् वल्कलतृणाजिनानां शुद्धिरिति शेषः॥

विष्णुः—

अत्यन्तोपहतस्य वस्त्रस्य प्रक्षालितं यत्र विरज्यते तच्छिन्द्यात्॥

न विरज्यते उपरि कृतरागविशिष्टं न स्यादित्यर्थः।

ब्रह्मपुराणे—

प्रत्यहं क्षालयेद्वस्त्रं दैवे पैत्रे च कर्म्मणि।

शुध्येद्विण्मूत्रशुक्रासृग्दूषितन्तु मृदम्बुभिः॥

विष्णुः—न प्रक्षालितं पूर्व्वधृतं वा वासो बिभृयात्॥

आचारः—

शूद्रधौतं स्त्रिया धौतं तथा रजकधावितम्।

प्रत्यग्याम्यदशाशुष्कमधौतं मनुरब्रवीत्॥

बौधायनः—

काषायवासाः कुरुते जपहोमप्रतिग्रहान्।

न भवेत्तस्य न स्याच्च हव्यकव्येष्वथो हविः॥

अङ्गिराः—

स्नानं दानं जपो होमः स्वाध्यायः पितृतर्पणम्।
वृथा तस्य महायज्ञा नीलीवस्त्रस्य धारणात्॥
नीलीरक्तं यदा वासो ब्राह्मणोऽङ्गेन * धारयेत्।
अहोरात्रमुपोषित्वा पञ्चगव्येन शुध्यति॥

नरसिंहपुराणे—

न रक्तमुल्वणं वासो न नीलञ्च प्रशस्यते।
मलाक्तञ्च दशाहीनं वर्ज्जयेदम्बरं बुधः॥

उल्वणमुद्भटं सर्व्वतो रक्तमित्यर्थः, एकदेशरक्तन्तु न दुष्टमित्यर्थः।

कालिकापुराणे,-

निर्दशं मलिनं जीर्णं तथा गात्रावलम्बितम्।
परकीयं ह्यग्निदग्धं सूचीविद्धं तथासितम्॥
उपकीटमधौतञ्च श्लेष्मरक्तादिदूषितम्।
नालीरक्तमाखुजग्धं दैवे पैत्रे च वर्ज्जयेत॥

जावालिः

नार्द्रमेकञ्च वसनं परिदध्यात्कदाचन॥

मनुः -

उपानहौ च वासश्च धृतमन्यैर्न धारयेत्।
उपवीतमलङ्कारं स्रजं करकमेव च॥

करकं कमण्डलुम्।

* पुस्तके—अङ्गेषु।

## अथान्नशुद्धिः ।

वशिष्ठः—

गृहदाहे समुत्पन्ने विनष्टे पशुमानुषे ।
अभोज्यस्तद्गतो व्रीहिर्धातुद्रव्यस्य संग्रहः ॥

बृहद्विष्णुः—

असिद्धान्नस्य यन्मात्रमुपहतं तन्मात्रं परित्यज्य कण्डनप्रक्षालने कुर्य्यात् ॥

असिद्धान्नस्य तण्डुलस्य ।

तथा हारीतः*—

कण्डन-विमर्दन-क्षालनैःफलीकृतानामवह . . . . . . . . . .

गोधूमानाम् ।

फलीकृतानां तण्डुलानाम् ।

मनुः—

पक्षिजग्धं गवाघ्रातमवधूतमवक्षुतम् ।
दूषितं केशकीटैश्च मृत्प्रक्षेपेण शुध्यति ॥

भक्ष्यपक्षिजग्धमिति कुल्लूकभट्टः । अवधूतं निश्वासोपहतं अवक्षुतं क्षुपरिक्षिप्तम् ।

याज्ञवल्क्यः—

गोघ्रातेऽन्ने तथा केशमक्षिकाकीटदूषिते ।
सलिलं भस्ममृद्वारि प्रक्षेप्तव्यं विशुद्धये ॥

---

* न पुस्तके— हारीतवचनं नोद्धृतम् ।

केवलजलं भस्मजलं मृज्जलं चेत्यर्थः। केशकीटादिदूषित इति--उपरि मृतमक्षिकाकेशादिपाते बोद्धव्यम्।

यथा यमः—

मक्षिकाकेशमक्षेषु पतितं यत्र दृश्यते।
मूषिकस्य पुरीषं वा घृतं यच्चाविधूनितम्॥
भस्मना स्पृश्य चाश्नीयादभ्युक्ष्य सलिलेन च॥

जीवन्मक्षिकास्पर्शे तु न दोषः।

यथा याज्ञवल्क्यः --

विप्रुषो मक्षिकाः स्पर्शे वत्सः प्रस्नवणे शुचिः॥

मक्षिकाकेशादिभिः सहपाकेन दूषितान्नन्तु वर्ज्जयेदेव यथा न भुञ्जीतेत्यनुवृत्तौ मनुः—

केशकीटावपन्नञ्च पदा स्पृष्टञ्च कामतः॥

अवपन्नं सहपक्वमित्यर्थः।

देवलः—

विशुद्धमपि चाहारं मक्षिका-क्रिमि-जन्तुभिः।
केशकीटनखैर्वापि दूषितं परिवर्ज्जयेत्॥
शूद्रभुक्तावशिष्टञ्च चिरपर्य्युषितञ्च यत्।
दम्पत्योर्भुक्तशिष्टञ्च तन्न भुञ्जीत कर्हिचित्॥

शूद्रभोजनावशिष्टं स्थालीस्थितमित्यर्थः।

शातातपः—

केशकीटाद्युपहतं श्ववायसनिरीक्षितम्।
क्लीवाभिशस्तपतितैः सूतिकोदक्यनास्तिकैः॥

दृष्टं वा स्याद् यदन्नन्तु तस्य निष्कृतिरुच्यते ।
अभ्युक्ष्य किञ्चिदुद्धृत्य सुवर्णरजतोदकैः ॥
भस्मना वापि संस्पृश्य भुञ्जीताप्यविशङ्कितः ॥

उपरि केशादिपातेनोपहतमित्यर्थः ।

यम्च—

केशकीटगवाघ्रातं वायसोपहतञ्च यत् ।
क्लीवाभिशस्तपतितैरुदक्यासूतिनास्तिकैः ॥
दृष्टं वा यदि वा स्पृष्टमन्नमाघ्रातमेव वा ।
भुक्त्वोत्ताय्य तु तद्द्रव्यं स्नातव्यं विमले जले ॥
तदहः क्षपयित्वा तु घृतं प्राश्य विशुध्यति ।
नोत्तारयति चेत्सर्व्वमुपोष्यैव विशुध्यति ॥

इत्यङ्गिरोवचनं तत् श्ववायसक्लीवादीनां निरीक्षणे मृज्जलप्रक्षेपादि शुद्धिव्यतिरेकेण भोजनप्रायश्चित्तविधायकम् । श्ववायसक्लीवादीनां स्पर्शनाघ्राणयोस्तु मृज्जलादिप्रक्षेपेणापि न शुद्धिर्वचनाभावात् ।

यमः—

उदक्यया श्वभिः स्पृष्टं गवाघ्रातञ्च यद्भवेत् ।
काककुक्कुटसंस्पृष्टं शुक्तं वा कृमिसंयुतम् ॥
अभोज्यञ्च द्विजातीनां धर्म्मराजवचो यथा ॥

मनुः—

विडालकाकाखूच्छिष्टं भुक्त्वा श्व-नकुलस्य च ।
केशकीटावपन्नञ्च पिवेद् ब्रह्मसुवर्च्चलाम् ॥

ब्रह्मसुवर्च्चला पीतपुष्पसूर्य्यावर्त्तः ।

वशिष्ठः —

देवद्रोण्यां विवाहे च यज्ञेषु प्रततेषु च।
काकैः श्वभिश्च यत् स्पृष्टं तदन्नं नैव दूष्यति॥
तावन्मात्रं समुद्धृत्य शेषं संस्कारमर्हति॥

देवद्रोण्यां देवतायतने, यावन्मात्रमुपहत, संस्कारो मृज्जला-भ्युक्षणं घृतप्रक्षेपः।

बृहद्विष्णुः—

द्रोणाधिकं सिद्धमन्नमुपहतं नैव दुष्येत्, तस्योपहतमात्र-मपास्य गायत्र्याभिमन्त्रितं सुवर्णाम्भ क्षिपेत् सूर्य्यस्य दर्शये-दग्नेश्च॥

मनुः—

उच्छिष्टेन तु संस्पृष्टो द्रव्यहस्तः कथञ्चन।
अनिधायैव तद्द्रव्यमाचान्तः शुचितामियात्॥

स्थानान्तरे तद्द्रव्यमनिधाय स्वाङ्ग एव स्थापयित्वा कृताचमनः शुचिः स्यात्, द्रव्यमपि शुद्धं भवेत्। द्रव्यमत्रान्नव्यञ्जनादि-व्यतिरिक्तं द्रव्यं। दुग्धमेवेति रत्नाकरः।

बृहस्पतिः

अरण्येऽनुदके रात्रौ चौरव्याघ्राकुले पथि।
कृत्वा मूत्रं पुरीषञ्च द्रव्यहस्तो न दूष्यति॥
शौचञ्च कुर्य्यात् प्रथमं पादौ प्रक्षालयेत्ततः।
उपस्पृश्य तदभ्युक्ष्य गृहीतं शुचितामियात्॥

देवलः— अभोज्यं प्राहुराहारं शुक्तं पर्य्युषितञ्च यत् ।

अन्यत्र दधिसर्पिर्भ्यामौषधान्मधुनो गुड़ात् ॥

शुक्तं स्वभावमधुरमम्लतां गतं एव प्रतिप्रसवात् शुक्तगुड़स्य भक्ष्यत्वेऽपि शुक्तगुड़पक्वस्य निषेधमाह ।

शङ्खः—

केवलानि च शुक्तानि तथा पर्य्युषितानि* च ।

गुड़पक्वञ्च भुक्त्वा वै त्रिरात्रं व्रतमादिशेत् ॥

केवलानि अन्यद्रव्यामिश्रितानीत्यर्थः । शुक्तगुड़पक्वस्य मिश्रितत्वेऽपि वचनान्निषेधः ।

यमः—

दधि भक्ष्यञ्च शुक्तेषु सर्व्वञ्च दधिसम्भवम् ॥

याज्ञवल्क्यः—

अन्नं पर्य्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितम् ।

अस्नेहा अपि गोधूम-यव-गोरसविक्रियाः ॥

अन्यदपि चिरसंस्थितं स्नेहाक्तं कृत्वा भोज्यमित्यर्थः ।

यमः—

आममांसं घृतं क्षौद्रं तैलं स्नेहाः फलोद्भवाः ।

अन्त्यभाण्डस्थिता द्रव्या निष्क्रान्ताः शुचयो मताः ॥

"शुद्धिः प्लावो द्रवस्य च" इति याज्ञवल्क्यवचनमनुपहतविषयम् । प्लावो वस्त्रादिना विमलीकरणम् ।

* ग पुस्तके केवलानि तथाक्तानि......त्रिरात्रञ्च व्रती भवेत् ।

शातातपः—

तापनं घृततैलानां प्लावनं गोरसस्य च।

तन्मात्रमुद्धृतं शुध्येत् कठिनं यत् पयो दधि॥

तन्मात्रं यन्मात्रमुपहतम्।

हारीतः—

दधि-सर्पिः-पयः-क्षौद्रे भाण्डदोषो न विद्यते॥

वसिष्ठः—

पयोदधिविकारादि शुचि पात्रान्तरस्थितम्।

प्लावनेन द्रवं यच्च घनस्य प्रोक्षणेन च॥

पात्रान्तरं कृत्वा वस्य प्लावनेन, घनस्य च प्रोक्षणेन शुद्धिरित्यर्थः।

यत्तु

भाण्डस्थितमभोज्यानामपो दधि पयः पिबेत्।

ब्रह्मकूर्चोपवासेन द्विजातीनाञ्च निष्कृतिः॥

शूद्रस्य* तूपवासेन दद्याद्दानञ्च शक्तितः॥

इति पराशरवचनं तदन्त्यजभाण्डस्थस्य पयसः पानविषयं पात्रान्तरकरणे तु वशिष्ठादिभिः शुद्धिविधानात्।

बृहस्पतिः—

ताम्बूलपात्रे यत्तोयं चूर्णं यच्चापि गोरसे।

क्षौद्रे तैले गुडे चैव न दोषः शाकटायनः॥

---

* ग पुस्तके — शूद्रस्य नोपवासः स्यात्शूद्रो दानेन शुध्यति।

शातातपः —

घृतं दधि तथा क्षीरं तथैवेक्षुरसो गुड़ः ।
शूद्रभाण्डगतं तक्रं तथा मधु न दुष्यति ॥

मनुः —

"नाद्यात् शूद्रस्य पक्वान्नम्" ॥

हारीतः —

कन्दुपक्वं स्नेहपक्वं पायसं दधिशक्तवः ।
एतान्यशूद्रान्नभुजां भोज्यानि मनुरब्रवीत् ॥

कन्दुपक्वं उखापक्वं चिपीटकलाजादि, पायसं पयोविकारः आमिक्षादीति रत्नाकरः । अशूद्रान्नभुजां द्विजानां शूद्रपक्वान्यप्येतानि भोज्यानीत्यर्थः ॥

हरिद्रा गोरसश्चूर्णं धान्यं काषायमैक्षवम् ।
न चैषां पाकदोषोऽस्ति तैलस्य लवणस्य च ॥

इति गौड़पठितवचनात्

हैमन्तिकं सितास्विन्नं धान्यं मुद्गास्तिला यवाः ॥

इति पूर्व्वलिखितशातातपवचने हविर्द्रव्यकथने धान्यस्यास्विन्नताविशेषणस्वरसाच्च स्विन्नधान्योदनं गौड़ो भुञ्जीत तदन्ये न मन्यन्ते सर्व्वसंग्रहेष्वलिखितत्वेन "हरिद्रेत्यादि वचनस्यामूलत्वात्, शातातपवचने च अस्विन्नपदं होमादौ स्विन्नधान्यस्यावर्त्तकं, अन्यथा धान्यत्वाविशेषात्तेनापि होमादिप्रसङ्गात् ।

पाश्चात्यास्तु सिताश्विन्यमिति पठित्वा आश्विनमाससम्भवो ब्रीहिरिति व्याचक्षते ।

वस्तुतस्तु नानामुनिवचनेषु द्विःखिन्ननिषेधात् खिन्नतण्डुल-भक्षणं यद्यपि निषिद्धं तथापि वक्ष्यमाणवशिष्ठवचने घृतदधि-मिश्रणप्रतिप्रसवाद् गौड़शिष्टानां तत्र प्रवृत्तिः।
यथा शङ्खलिखितौ—

न द्विःपक्वं न शुक्तञ्च न च पर्य्युषितं तथा॥

मार्कण्डेयपुराणे—

भिन्नभाण्डगतं दुष्टं मुखवातोपशामितम्।
अग्न्युष्णपक्वं द्विःखिन्नमवकीटमसंस्कृतम्॥

मुखवातेनोपशामितं फुत्कारेण त्याजितोष्णाभावं, यद्द्रव्यं अग्नेरु-ष्णणा धूमेन पक्वं कदलश्रीफलादि, अवकीटं कीटावपन्नं, सर्व्वत्र दुष्टमिति सम्बन्धः।
आद्यादित्यनुवृत्तौ वशिष्ठः—

अन्नं पर्य्युषितं भावदुष्टं पुनःखिन्नमामक्षौषपक्वं, कामन्तु दध्ना घृतेन वाभिस्रावित*मुपभुञ्जीत॥

पुनःखिन्नं निष्पन्नोदनं काठिन्यादिनिमित्तं पुनर्ज्जलादिना कृतपाकं, यच्च खिन्नधान्यतण्डुलानामोदनं तदपि पुनःखिन्नं एतेन अन्नं निष्पाद्य तदन्नं दुग्धेन सह पुनःपाकेन पायसं क्रियत इति केषाञ्चिदाचारो दुराचार एव।

दाक्षिणात्यास्तु—खिन्नावतारितं व्यञ्जनं पुनर्घृतादिपाकेन संस्कृतमपि द्विःखिन्नमाहुः। अतएव प्रथमतो घृतादिसंस्कारेण

---

* न पुस्तके—अभिघारितम्।

तत्रैव घृतादिप्रक्षेपेण वा व्यञ्जनं पचन्ति। [अन्ये तु अभीष्ट-निष्पत्तिपर्य्यन्तं पाकपदार्थमाहुः।]

आममिति निषेधोऽयं खिन्नधान्यतण्डुलविषयः पुनःसिन्न-सान्निध्यात्। न चामं तण्डुलमुद्गादीति कल्पतरुव्याख्यानं युक्तं प्रकृतत्वादन्नस्य विशेषणात्। न चादनीयमात्रेऽन्नशब्दो यौगिकः-प्रतीते क्तप्रत्ययविधानात्। न चात्र तदवगमः किन्तु ओदन-शब्दवाच्ये धान्यविकारविशेषे योगरूढ़ एव।

अतएव

भिःसा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री स दीदिविः।

इत्यमरकोषः।

एवञ्चामविशेषणात् सकारणे तण्डुले लाक्षणिकमन्नपदं, अतो नाममुद्गादिनिषेधः।

किञ्च तण्डुलमात्रस्य भक्ष्यत्वे आमान्नेन श्राद्धवैश्वदेवादि-विधानमसङ्गतं स्यात्।

आपस्तम्बेनापि—

सर्व्वं पर्य्युषितमनाद्यं फाणित-पृथुक-धाना तण्डुल-करम्भ-तक्र-शाक-मांस मधुक्षीरविकारौषधि मूलवर्ज्जम्॥

इति प्रतिप्रसूय पर्य्युषितस्यापि तण्डुलस्य भक्ष्यत्वं विहितम्। अविगानेन सर्व्वदेशीयशिष्टप्रवृत्तिश्च दृश्यते। तस्मात् सान्निध्यात् खिन्नतण्डुलविषय एव निषेधो युक्तः।

---

न पुस्तके—[ ] चिह्नितांशो नास्ति।

अजीर्णपक्कानुक्तं ब्रह्मपुराणे—

भूमेरन्तर्गतं कृत्वा सन्निधाप्याच्छादितञ्च यत्।

पक्वमांसमजीर्णञ्च प्रयत्नात्तन्न भक्षयेत्॥

उक्तानां पर्य्युषितानां सर्व्वेषां प्रतिप्रसवमाह कामन्त्विति।

अतो गौड़मिष्टानां पर्य्युषितान्नवत् घृतमिश्रणात् स्निग्धतण्डुलान्न-

भक्षणम्। * एतन्मूलक एव साधारणो गौड़ाचार इति प्रतीमः॥

हारीतः—माहिषं गव्यमाजञ्च भक्ष्यं क्षीरेषु निर्द्दिशेत्॥

मनुः— अनिर्द्दशाया गोः क्षीरमौष्ट्रमैकशफन्तथा।

आविकं सन्धिनीक्षीरं विवत्सायाश्च गोः पयः॥

आरण्यानाञ्च सर्व्वेषां मृगाणां माहिषं विना।

स्त्रीक्षीरञ्चैव वर्ज्ज्यानि सर्व्वशुक्तानि चैव हि॥

एकशफा अश्वादयः, सन्धिनी वृषाक्रान्ता।

बौधायनः—स्यन्दिनीक्षीरमपेयममेध्यभुजश्च॥

स्यन्दिनी स्वयंस्रवत्क्षीरा, अमेध्यभुजः स्वविष्ठादिभुजः।

आपस्तम्बः—

क्षत्त्रियश्चैव वृत्तिस्थो वैश्यः शूद्रोऽथवा पुनः।

यः पिबेत्कापिलं क्षीरं न ततोऽन्योऽस्त्यपुण्यकृत्॥

वृषसहितोत्सृष्टवत्सतरीदुग्धादिपाननिषेधमाह अग्निपुराणे—

यो वाहयति षण्डञ्च पिबेत् क्षीरञ्च तद्गवाम्।

यावन्ति तस्य लोमानि तावद् वर्षाण्यधोगतिः॥

तासां न चाज्यं पातव्यं शाश्वतीं गतिमिच्छता॥

---

## अथ स्नानशुद्धिः ।

अनुद्धृतैरुद्धृतैर्वा जलैः स्नानं समाचरेत् ॥

इति पद्मपुराणवचनादुद्धृतोदकेनापि स्नानानुष्ठाने उष्णोदकेन काम्यस्नानं शुचिस्नानञ्च न कार्य्यमित्याह वराहपुराणे—

स्नातस्य वह्नितप्तेन तथैव परवारिणा ।

शरीरशुद्धिर्विज्ञेया न तु स्नानफलं भवेत् ॥

मृते जन्मनि संक्रान्त्यां ग्रहणे चन्द्रसूर्य्ययोः ।

अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणा ॥

स्नानफलं काम्यस्नानफलं न लभेदित्यर्थः, जन्मनि पुत्रजन्मनि, एतञ्च गङ्गाजलव्यतिरिक्तविषयम् ।

यमः— क्षेत्रस्थमुद्धृतं वारि शीतमुष्णमथापि वा ।

सद्यः पुनाति गाङ्गेयं पापमामरणान्तिकम् ॥

याज्ञवल्क्यः—

पञ्च पिण्डाननुद्धृत्य न स्नायात्परवारिषु ॥

प्रतिष्ठितजलाशये परकीयत्वाभावेऽपि परज्ञतत्वेन पञ्चपिण्डो-द्धरणपूर्व्वकं स्नानमप्रतिष्ठिते तु परकीयत्वेन सर्व्वदैव स्नाना-भावः ।

यथा मनुः—

*परकीयनिपानेषु न स्नायाद्धि कदाचन ।

---

* ग पुस्तके—पारक्येषु

निपानकर्त्तुः स्नात्वा तु दुष्कृतांशेन लिप्यते ॥

अत्र कदाचनेति सर्व्वथैव निषेधात् तदीयत्वेनैव तत्पापभागित्वाच्च। तथाच "अनुत्सृष्टन्तु मूत्रवदिति" "कूपाच्च त्रीन् घटांस्तथेति बौधायनवचनात् कूपजले घटत्रयोद्धारणम्। जलाशयप्रतिष्ठा तु दानकौमुद्यां प्रतिपादिताऽस्माभिः।

योगियाज्ञवल्क्यः--

प्रभूते विद्यमाने तु विमले सुमनोहरे।
नाल्पोदके द्विजः स्नायान्नदीञ्चोत्सृज्य कृत्रिमे ॥

छन्दोगपरिशिष्टम्--

यव्यहयं श्रावणादि सर्व्वा नद्यो रजस्वलाः।
आसु स्नानं न कर्त्तव्यं वर्ज्जयित्वा समुद्रगाम् ॥
उपाकर्म्मणि चोत्सर्गे प्रेतस्नाने तथैव च।
चन्द्रसूर्य्यग्रहे चैव रजोदोषो न विद्यते ॥

रात्र्यादिदोषस्तु शुद्धिस्नाने।

यथा यमः—

चण्डाल-श्वपचैः स्पृष्टे निशि स्नानं विधीयते।
न वसेत्तत्र रात्रौ च सद्यःस्नानेन शुध्यति ॥
अथ तत्र वसेद्रात्रावज्ञानादविचक्षणः।
तदा तस्य तु यत्पापं शतधा परिवर्द्धते ॥

श्वपचश्चाण्डालभेदः। एतच्चास्पृश्यस्पर्शोपलक्षणम्। सद्यःस्नानेन न तु परदिनस्नानेन।

व्यासः—स्नानार्हस्तु यदा स्नानमकृत्वाश्नाति वै द्विजः।

अहोरात्रोषितः स्नात्वा पञ्चगव्येन शुध्यति॥

देवलः— दिवाहृतैर्जलैः स्नानं निशि कुर्य्यान्निमित्ततः॥

पराशरः—

स्नानमाचमनं प्रोक्तं दिवोद्धृतजलेन तु॥

हारीतः—

न रात्रावपो गृह्णीयाद् धाम्नो धाम्न इत्यग्निमुपविश्य त्वापश्चेद् गृह्णीयात्॥

*मन्त्रस्तु।

ॐ मापोमोषधीर्हिंसीर्धाम्नोधाम्नो राजं स्ततोवरुणनोमुञ्च।

अत्र तु शुचिस्नाने तर्पणं नास्ति केवलं मज्जनमात्रम्।

यथा जाबालः—

अस्पृश्यस्पर्शने वान्ते अश्रुपाते भगे क्षुरे।

स्नानं शुध्यर्थकं प्रोक्तं दैवपैत्रविवर्जितम्॥

एवं वक्ष्यमाणनिमित्तेष्वपि बोद्धव्यम्। क्षुरे क्षुरकर्मणि, भगे मैथुने, ऋतुकाल एवेति वक्ष्यते।

शङ्खः—चाण्डालेन सहाध्वगमने सचेलस्नानम्॥

अङ्गिराः—

यस्तु च्छायां श्वपाकस्य ब्राह्मणो ह्यधितिष्ठति।

सचेलो जलमाविश्य घृतं प्राश्य विशुध्यति॥

---

* ग पुस्तके—मन्त्रो नोद्धृतः।

अधिष्ठायाक्रम्य तिष्ठतीत्यर्थः। कदाचिच्छायास्पर्शे त्वाचमनमात्रम्।

परामरः—

चैत्यवृक्षश्चितिर्यूपश्चाण्डालः सोमविक्रयी।

एतांस्तु ब्राह्मणः स्पृष्ट्वा सचेलो जलमाविशेत्॥

चैत्यवृक्षो ग्राममध्ये देवपूजावृक्षः, यूपोऽत्रेष्टिकर्म्मयूपश्चिति-सन्निधानात्।

मनुः—

दिवाकीर्त्तिमुदक्याञ्च पतितं सूतिकां तथा।

शवं तत्स्पृष्टिनं चैव स्पृष्ट्वा स्नानेन शुध्यति॥

दिवाकीर्त्तिश्चण्डालः।

तथा चामरकोषः—

चण्डाल-श्वपच मातङ्ग-दिवाकीर्त्ति-प्लवङ्गमाः। इति

उदक्या रजस्वला, तत्-स्पृष्टिनं शवस्पृष्टिनं, सन्निधानात् शव-स्यैवानुषङ्गो न सर्व्वेषाम्।

उदक्याशौचिभिः स्नायात् संस्पृष्टस्तैरुपस्पृशेत्।

तैरुदक्याशौचिस्पृष्टैः संस्पृष्टस्तु उपस्पृशेदाचामेदिति याज्ञवल्क्येन-मोदक्योपस्पर्शे आचमनमात्रविधानात्।

एवञ्च—

उपस्पृश्याशुचिस्पृष्टं तृतीयं वापि मानवः।

हस्तौ पादौ च तोयेन प्रक्षाल्याचम्य शुध्यति॥

इति देवलवचनं शवोपस्पर्शेतरोपस्पर्शविषयम्।

एकशाखाद्याक्रमणे तु स्नानमाह आपस्तम्बः—

एकशाखां समारूढश्चाण्डालादिर्यदा भवेत् ।
ब्राह्मणस्तत्र चानश्नन् स्नानेन शुचितामियात् ॥

एकशाखामिति एकदण्डादेरुपलक्षणं, तदुपोपस्पर्शे त्वाचमनमात्रम् । उदक्याशौचिभिः स्नायादिति याज्ञवल्क्यवचनेनाशौचिस्पर्शे यत्स्नानं विहितं तदङ्गास्पृश्यत्वपर्य्यन्तमेव बोद्धव्यं, तदूर्द्ध्वन्त्वाचमनमात्रम् ।

च्यवनः—

श्वपाकं, प्रेतधूमं, देवद्रव्योपजीविनं, ग्रामयाजकं, यूपं, चितिकाष्ठं, मद्यं, मद्यभाण्डं, सस्नेहं मानुषास्थि, शवस्पृष्टं, रजस्वलां महापातकिनं शवञ्च स्पृष्ट्वा सचेलमम्भोऽवगाह्य उत्तीर्य्याग्निमुपस्पृशेत्, गायत्र्यष्टशतं जपेत्, घृतं प्राश्य त्रिराचामेत् ।

अग्निस्पर्शनादिकन्तु शवस्पर्श एव, अन्येषान्तु असकृत् कामतः* स्पर्शे ज्ञेयं स्मृत्यन्तरे स्नानमात्रविधानात् ।

तथाच बृहस्पतिः--

पतितं सूतिकोदक्यामन्त्यं† स्पृष्ट्वा तु कामतः ।
स्नात्वा सचेलं स्पृष्ट्वाग्निं घृतं प्राश्य विशुध्यति ॥

मदिरास्पर्शे तु विशेषः--

जान्वधः स्नानमात्रं स्यादानाभेरेकरात्रकम् ।
ऊर्द्ध्वं नाभेस्त्रिरात्रं स्यान्मदिरास्पर्शने विधिः ॥

---

* ग पुस्तके—मद्यं पदं नास्ति ।

† क पुस्तके—कामकृतस्पर्शे ।

मनुः—

नारं स्पृष्ट्वास्थि सस्नेहं स्नात्वा विप्रो विशुध्यति।

आचम्यैव तु निःस्नेहं गामालभ्यार्कमीक्ष्य वा॥

गामालभ्य स्पृष्ट्वेत्यर्थः।

[असकृत् कामकृते तु निःस्नेहास्थिस्पर्शे स्नानमाह ब्रह्मपुराणे:—

मानुषास्थि तु संस्पृश्य स्निग्धमस्निग्धमेव वा।

स्नायाच्चां संस्पृशेत् सूर्यं पश्येद्विष्णुमनुस्मरेत्॥]

यत्तु मानुषास्थि स्पृष्ट्वा स्निग्धं त्रिरात्रमशौचं अस्निग्धे त्वेकरात्रमिति वसिष्ठवचनं तदपकृष्टजातीयास्थिस्पर्शविषयम्। मनुवचनन्तु सजातीयस्योत्कृष्टजातीयस्यास्थिस्पर्शविषयमिति वा व्यवस्था।

शवानुगमनस्नानन्तु सपिण्डाद्यशौचप्रवेशे लिखितम्।

देवलः—मानुषास्थि वसां विष्ठामार्त्तवं मूत्ररेतसम्।

मज्जानं शोणितं वापि परस्य यदि संस्पृशेत्॥

स्नात्वापमृज्य लेपादीनाचम्य स शुचिर्भवेत्।

तान्येव स्वानि संस्पृश्य पूतः स्यात् परिमार्ज्जनात्॥

आर्त्तवं स्त्रीशोणितं अपमृज्य स्नात्वेति क्रमः। मार्ज्जनानन्तरमाचमनञ्च।

तथा च पैठीनसिः—

उच्छिष्टरेतो विण्मूत्रं संस्पृश्योन्मृज्य प्रक्षाल्य तं देशमाचम्य प्रयतो भवति।

---

ग पुस्तके—[ ] चिह्नितांशः पतितः।

व्यासः—

भास वानर मार्ज्जार खरोष्ट्राणां शुनान्तथा।

शूकराणाममेध्यञ्च स्पृष्ट्वा स्नायात् सचेलकम्॥

भासो वनकुक्कुटः गृध्र इति केचित् काकस्य तुल्यतया सर्व्वत्राभि-धानात् काकविष्ठास्पर्शेऽपि स्नानम्।

ब्रह्मपुराणे—

उच्छिष्टेनाथ विप्रेण विप्रः स्पृष्टस्तु तादृशः।

उभौ स्नानं प्रकुरुतः सद्य एव समाहितौ॥

तादृश उच्छिष्टः।

अनुच्छिष्टेन उच्छिष्टस्पर्शे आचमनमाह देवलः—

उच्छिष्टं मानवं स्पृष्ट्वा भोज्यं वापि तथाविधम्।

तथैव हस्तौ पादौ च प्रक्षाल्याचम्य शुध्यति॥

तथाविधमुच्छिष्टमेतच्च सवर्णविषयम्।

लघुहारीतः—

श्वविष्ठां काकविष्ठां वा कङ्कगृध्रनरस्य च।

अधोच्छिष्टस्तु संस्पृश्य सचेलो जलमाविशेत्॥

ऊर्द्ध्वोच्छिष्टस्तु संस्पृश्य* प्रायश्चित्तं समाचरेत्।

उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति॥

अधोच्छिष्टो मूत्रपुरीषोत्सर्गेणाशुद्धः ऊर्द्ध्वोच्छिष्टो भोजनोच्छिष्टः।

---

* क पुस्तके—संस्पृष्टः।

पैठीनसिः—अनुदकमूत्रपुरीषकरणे सचेलं स्नानम् ।
उदकव्यतिरेकेण मूत्रपुरीषानन्तरं शौचविलम्बे शौचं कृत्वा-स्नानम् ।

मनुः—वान्तो विविक्तः स्नात्वा तु घृतप्राशनमाचरेत् ।

आचामेदेव भुक्त्वान्नं स्नानं मैथुनिनः स्मृतम् ॥

विविक्तो जाताधिकविरेचनः, अन्नं भुक्त्वा सद्योवमने तु आचमन-मात्रमित्यर्थः । मैथुनिनः स्नानमृताविति शेषः ।

तथाच शातातपः—

ऋतौ तु गर्भशङ्कित्वात् स्नानं मैथुनिनः स्मृतम् ।

अनृतौ तु सदा कार्य्यं शौचं मूत्रवदेव तु* ॥

हारीतः—श्मश्रुकर्म्मायोनि-पशु-दिवामैथुने च ।

अयोनिर्योनिव्यतिरिक्तमङ्गं पशुर्गवादिः ।

शातातपः—

रजकश्चर्म्मकारश्च व्याधजालोपजीविनौ ।
चेलनिर्णेजकश्चैव नटः शैलूषकस्तथा ॥
मुखे भगस्तथा श्वा च वनिता सर्व्ववर्णगा ।
चक्री ध्वजी वध्यघाती ग्राम्यकुक्कुटशूकरौ ॥
एभिर्यदङ्गं संस्पृष्टं शिरोवर्ज्जं द्विजातिषु ।
तोयेन क्षालनं कृत्वा आचान्तः शुचितामियात् ॥

रजको वस्त्रादिरञ्जनकारी चक्री तैलिकः, ध्वजी शौण्डिको

* पुस्तके मूत्र पुरीषवत् ।

वध्यघाती राज्ञा वधार्थं हनने नियुक्तः एभिः शिरःस्पर्शे तु स्नान मित्यर्थः । अत्र शिरःशब्देन नाभेरूर्द्धं लक्ष्यते ।

अतएवाङ्गिराः—

ऊर्द्धं नाभेः करौ मुक्त्वा यदङ्गमुपहन्यते ।
तत्र स्नानमधस्तात्तु क्षालनेनैव शुध्यति ॥

एतांस्तु यदि येन केनचिदङ्गेन स्वयं स्पृशति तदापि स्नानमेव ।

तथाच यमः—श्वकुक्कुटवराहांश्च ग्राम्यान् स्पृष्ट्वाथ मानवः ।
सचेलः सशिरः स्नात्वा तत्क्षणादेव शुध्यति ॥

मार्कण्डेयपुराणे—

सूयिका सूतिका षण्ड मार्ज्जारा‌खु श्वकुक्कुटान् ।
पतितापविद्ध-चण्डाल-मृतहारांश्च धर्म्मवित् ॥
संस्पृश्य शुध्यति स्नानात् उदक्या ग्रामशूकरौ ।

सूयिका प्रसवकारिणी* । अपविद्धः परिवादग्रस्तः, मूल्येन मृतकहारकानित्यर्थः । संस्पृश्येत्यभिधानात् मार्ज्जारकर्म्मके स्पर्शे स्नानं मार्ज्जारकर्त्तृके तु जलस्पर्शः ।

तथाच छन्दोगपरिशिष्टम्—

मार्ज्जार-मूषिकस्पर्शे आक्रुष्टे क्रोधसम्भवे ।
निमित्तेषु च सर्व्वेषु कर्म्म कुर्व्वन्नपः स्पृशेत् ॥

यमः—शिशुर्दर्व्वी च वायुश्च मार्ज्जारश्च सदा शुचिः ।

अतो मार्ज्जारेण पाकस्थालीस्पर्शे दोषाभाव इति ।

---

* न तुलने—धात्रीति अधिकः ।

योगियाज्ञवल्क्यः—

चाण्डाल पुक्कश म्लेच्छभिल्लपारसिकादिकान्।
महापातकिनश्चैव स्पृष्ट्वा स्नायात्सचेलकम्॥

पारसिका यवनाः।

कालिकापुराणे—

स्पृष्ट्वा रुद्रस्य निर्म्माल्यं सवासा आप्लुत शुचिः।

अत्र निर्म्माल्यमपनीतमित्याचारादर्शः।

स्नानाशक्तावाह यमः—

आतुरे स्नानसंप्राप्ते दशकृत्वस्त्वनातुरः*।
स्नात्वा स्नात्वा स्पृशेत् चिप्रं ततः शुध्येत् स आतुरः॥

यमः—

देवयात्राविवाहेषु यज्ञेषु प्रततेषु च।
उत्सवेषु च सर्व्वेषु स्पृष्टास्पृष्टिर्न दुष्यति॥

बृहस्पतिः—

तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे।
नगरग्रामदाहे च स्पृष्टास्पृष्टिर्न दुष्यति॥

स्पृष्टोऽस्पृष्टिरस्पृश्यो येन स तथा।

---

* ग पुस्तके—क्वचो ह्यनातुरः ...स्पृशेत्तन्तु।

## अथ मृज्जलशुद्धिः ।

पुरीषोत्सर्गे याज्ञवल्क्यः—

> गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः ।
> गन्धलेपक्षयकरं शौचं कुर्य्यादतन्द्रितः ॥

उत्थाय अन्यतो गत्वा उद्धृतैरिति न जलाशये इत्यर्थः । अतन्द्रितो निरलसः । अतएव मुन्यन्तरोक्तसंख्यया शौचे कृतेऽपि गन्धलेपाद्यपेक्षया भावशुद्ध्यपेक्षया चाधिकमपि शौचं कुर्य्यादित्यर्थः ।

यथा दक्षः—

> शौचञ्च द्विविधं प्रोक्तं बाह्यमाभ्यन्तरन्तथा ।
> मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिः* तथान्तरम् ॥
> उभयेन† शुचिर्यस्तु स शुचिर्नेतरः स्मृतः ।

तथा— ‡न्यूनाधिकं न कर्त्तव्यं शौचं शुद्धिमभीप्सता ।
प्रायश्चित्तेन युज्येत विहितातिक्रमे कृते ॥

मनुः— एका लिङ्गे गुदे तिस्रस्तथैकत्र करे दश§ ।
उभयोः सप्त दातव्या मृदः शुद्धिमभीप्सता ॥

एकत्र वामे ।

---

* ग पुस्तके—भावशुद्धिः ।

† ग पुस्तके—उभाभ्याञ्च ।

‡ ख पुस्तके—उनाधिकम् ।

§ ख पुस्तके दश वामकरे तथा ।

यमः— तिस्रस्तु पादयोर्देयाः शुद्धिकामेन नित्यशः।

एतच्च प्रतिपादम्।

शङ्खः—

मृत्तिका तु समुद्दिष्टा त्रिपर्व्वी पूर्य्यते यया।

इदञ्च मृत्तिकाप्रमाणं शुद्धं विज्ञार्थं।

तत्र तु दक्षः—

अर्द्धप्रसृतिमात्रा तु प्रथमा मृत्तिका स्मृता।

द्वितीया च तृतीया च तदर्द्धार्द्धा प्रकीर्त्तिता* ॥

शातातपः—

शुचौ देशे मृदो ग्राह्याः शर्करास्थ्यादिवर्ज्जिताः।

नाखूत्करान्न वल्मीकात् पांशुलान्न च कर्द्दमात् ॥

न मार्गान्नोषराच्चैव शौचशिष्टाः परस्य च।

विष्णुपुराणे—

शौचावशिष्टां गेहाच्च नादद्याल्लेपसम्भवाम्।

अन्तःप्राण्यवपन्नाच्च हलोत्खाताच्च वर्ज्जयेत्† ॥

गृहे कुड्यादिलेपसम्भवाम् अन्तःप्राण्यवपन्नां सकीटामित्यर्थः।

मूत्रशौचे दक्षः—

एका लिङ्गे करे सव्ये त्रिरुभयोर्द्वयं स्मृतम्।

मूत्रशौचं समाख्यातमिति।

---

* क पुस्तके—तदर्द्धं परिकीर्त्तितम्।

† ग पुस्तके—न चाहरेत्।

बौधायनः—

मूत्रवद्रेतउत्सर्गे ऋतुकालगमने तु स्नानं पूर्व्वोक्तमेव।

ब्रह्मपुराणे—

न यावदुपनीयेत द्विजः शूद्रस्तथाङ्गना।

गन्धलेपक्षयकरं शौचं तेषां विधीयते॥

सच्छूद्रस्य तु अर्द्धशौचम्।

एतच्छौचं द्विजातीनामर्द्धं शूद्रे विनिर्द्दिशेत्।

आपस्तम्बः—

यच्छौचं यथा प्रोक्तं निष्पद्येन्तु तदिष्यते।

पथि पादस्तु विज्ञेय आर्त्तः कुर्य्यादयथाबलम्।

पथीति यत्र मार्गे विलम्बे सति चौरादितोऽनिष्टाशङ्का तत्परम्।

मनुः—

एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम्।

त्रिगुणन्तु वनस्थानां यतीनां तच्चतुर्गुणम्॥

शातातपः—

न मृदं नोदकं वापि न निशायान्तु गोमयम्।

देवलः—

धर्म्मविद्दक्षिणं हस्तमधःशौचे न योजयेत्।

तथैव वामहस्तेन नाभेरूर्द्ध्वं न शोधयेत्॥

कश्यपशृङ्गः—

यस्मिन् स्थाने कृतं शौचं वारिणा तत्तु शोधयेत्।

शौचानन्तरं हारीतः—

गोमयेन मृदा वा कमण्डलुं परिमृज्य पूर्व्ववदाचम्यादित्यं सोममग्निं वा निरीक्षेत।

अत्र दिवा आदित्यं रात्रौ सोमं उभयोरभावे अग्निमिति व्यवस्था।

ब्रह्मपुराणे—

द्विराचम्य ततः शुद्धः स्मृत्वा विष्णुं स[illegible]।

---

## अथाचमनशुद्धिः ।

देवलः—

प्रथमं प्राङ्मुखः स्थित्वा पादौ प्रक्षालयेच्छनैः ।
उदङ्मुखो वा दैवत्ये पैतृके दक्षिणामुखः ॥
शिखां बद्धा वसित्वा द्वे निर्णिक्ते वाससी शुभे ।

आचामेदिति शेषः ।

दैवपैत्रातिरिक्तस्थले तु प्रत्यङ्मुखेन पादप्रक्षालनम् कार्य्यम् ।

यथा आपस्तम्बः—

प्रत्यक् पादावसेचनमिति ।

तत्र ब्राह्मणस्यादौ दक्षिणपादप्रक्षालनम् ।

यथा पारस्करः—

सव्यं पादं प्रक्षाल्य दक्षिणं प्रक्षालयति ब्राह्मणश्चेद्दक्षिणं प्रथमम् ।

एतच्च पारस्करोक्तत्वाद्वाजसनेयिनामेव सामगानान्तु प्रथ वामपादप्रक्षालनम् । गोभिलेन सव्यं पादमवनेनिजे इत्यने प्रथमं वामपादप्रक्षालनस्योक्तत्वात् ।

हारीतः—

आगुल्फात् क्षालयेत् पादौ ।

अध्वगमनादिना तु प्रत्यक्षोपहते जानुपर्य्यन्तं क्षालयेत् ।

आपस्तम्बः—

इत्येवमङ्घ्रिराजानु प्रक्षाल्य चरणौ पृथक् ।
हस्तौ च मणिबन्धाभ्यां पश्चादासीत वाग्यतः ॥

मनुः —

न पादौ धावयेत्कांस्ये कदाचिदपि भाजने ।

याज्ञवल्क्यः —

अन्तर्जानु शुचौ देशे उपविष्ट उदङ्मुखः ।

प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् ॥

अन्तर्जानुर्जानुमध्यस्थितकरद्वयः । प्राग्वा प्राङ्मुखो वेत्यर्थः । उपस्पृशेदाचामेत् ।

मनुः—

शौचेप्सुः सर्व्वदाचामेदेकान्ते प्रागुदङ्मुखः ।

हारीतः—

अन्तर्व्वोररत्नी कृत्वा त्रिरपोऽशब्दं पिबेत् ।

मनुः —

ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत् ।

काय-त्रैदशिकाभ्यां वा न पित्र्येण कदाचन ॥

कायं प्राजापत्यं त्रैदशिकं दैवं नित्यकालमित्यनेन ब्राह्मतीर्थेना-सम्भवे दैवप्राजापत्याभ्यामाचमनं नेच्छयेत्यर्थः ।

तीर्थान्याह याज्ञवल्क्यः—

कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च ।

प्रजापति-पितृ-ब्रह्म-देवतीर्थानीति क्रमात् ॥

गोभिलीयः—

वामहस्तस्थितैर्द्दर्भैर्द्दक्षिणेनोदकं पिबेत् ।

रुधिरं तद्भवेत्तोयं पीत्वा चान्द्रायणं चरेत् ॥

सपवित्रेण हस्तेन आचामन्ति द्विजाश्च ये।

सोमपानं भवेत्तेषामर्थञ्च क्रतुमादिशेत्॥

केवलवामहस्तस्थैर्दर्भैर्दक्षिणेन दर्भशून्येनेत्यर्थः। पवित्रेण भोजनमपि क्रतुतुल्यफलम्।

हारीतः—

आचामेत्प्रयतो नित्यं पवित्रेण द्विजोत्तमः।

नोच्छिष्टन्तु भवेत्तच्च भुक्तशेषञ्च वर्ज्जयेत्॥

तत्पवित्रं नोच्छिष्टं भवेत् भुक्तशेषजलं वर्ज्जयेत्कर्म्मकाले पवित्रधारणविधानात्कर्म्माङ्गाचमनमेव पवित्रेण विधाय तस्यैवानुच्छिष्टता प्रतिपाद्यते। किन्त्वन्यकाले पवित्रं विनाप्याचमनमिति शिष्टाचारः।

सुमन्तुः—ग्रन्थिर्यस्मिन् पवित्रे तु न तेनाचमनञ्चरेत्।

आचामेद्यस्तु मोहान्धो यथा भोक्ता तथैव सः॥

यथा भोक्ता उच्छिष्टः स्यात्तथा सोऽपीत्यर्थः।

शङ्खः—विना यज्ञोपवीतेन तथा मुक्तशिखोऽपि वा।

अप्रक्षालितपादो वाप्याचान्तोऽप्यशुचिर्भवेत्॥

बौधायनः—

पादप्रक्षालनशेषेण नाचामेत् यद्याचामेत् भूमौ स्रावयित्वाचामेत्।

आपस्तम्बः—

न वर्षधाराभिराचामेत् न तप्ताभिश्चाकारणात्।

रोगादिकारणे तु तप्ताभिरपि आचामेदित्यर्थः।

शङ्खलिखितौ—

न शूद्राशुच्येकपाण्यावर्ज्जिताभिः ।

शूद्रेणाशुचिना च अन्येन चैकपाणिना दत्ताभिरद्भिर्नाचामेत् ।

याज्ञवल्क्यः—

अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः ।
हृत्कण्ठतालुगाभिश्च यथासंख्यं द्विजातयः ॥
शुध्येरन् स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः ।

प्रकृतिस्थाभिर्दुष्टगन्धवर्णरसहीनाभिः । शङ्खमनुवचनैकवाक्यतया दुष्टगन्धहीनेन सुवासितेनापि जलेनाचमनं कार्य्यमन्यथा कल्पनागौरवात् ।

यथा शङ्खः—

भूमिष्ठमुदकं शुद्धं तथा यच्च *शिलागतम् ।
गन्धवर्णरसैर्दुष्टैर्वर्ज्जितं यदि तद्भवेत् ॥

मनुः—आपः शुद्धा भूमिगता वैतृष्ण्यं यासु गोर्भवेत् ।
अव्याप्ताश्चेदमेध्येन गन्धवर्णरसान्विताः ॥

अपां स्वभाविकगन्धाभावात् प्रशस्तगन्धान्विता इत्यर्थः ।

अन्यथा—शुचि गोतृप्तिकृत्तोयं प्रकृतिस्थं महीगतम् ।

इति याज्ञवल्क्यपरवचनात् वासितजलस्याशुचित्वप्रसङ्गः । एवञ्च लवणस्य समुद्रजलस्योत्पत्तिकाले तथात्वात् प्रकृतिस्थता अन्यथा समुद्रस्नानविधिविरोधः । अन्तत ओष्ठप्रान्तेनेत्यर्थः ।

* ग पुस्तके—शुनिर्गिनागतम् ।

एतच्च ब्राह्मणादिशुश्रूषारहितस्य सच्छूद्रस्य ।

शुश्रूषापराणाञ्चाह बौधायनः—

शूद्राणामार्य्याधिष्ठितानां वैश्यवदाचमनकल्पः ।

असत्शूद्राणाञ्चाह गोतमः—

आचमनार्थे पाणिपादप्रक्षालनमेवैके ।

नरसिंहपुराणे—

दक्षिणन्तु करं कृत्वा गोकर्णाकृतिमत्पुरः ।
दक्षं प्रक्षाल्य पादौ च त्रिः पिबेदम्बु वीक्षितम् ॥
संहृत्याङ्गुष्ठमूलेन द्विःप्रमृज्यात्ततो मुखम् ।
संहत्य तिसृभिः पूर्व्वमास्यमेवमुपस्पृशेत् ॥
अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरम् ।
अङ्गुष्ठानामिकाभ्याञ्च चक्षुःश्रोत्रे पुनः पुनः ॥
नाभिं कनिष्ठाङ्गुष्ठेन हृदयन्तु तलेन वै ।
सर्व्वाभिश्च शिरः पश्चाद्बाहू चाग्रेण संस्पृशेत् ॥

वीक्षितमिति फेनबुद्बुदादिदोषापनयनार्थम् ।

*[ यत्तु गोतमेन—

यज्ञोपवीत्यामणिबन्धात् पाणी प्रक्षाल्य
त्रिश्चतुर्वाचामेदित्युक्तम् ।

तत् श्रमादिभिरपां हृत्तलाभावे चतुर्वेति ज्ञेयम् ।]

संहृत्य मुखमिति शेषः । एवमिति मुखं संहृत्येत्यर्थः तिसृभि-

* ग पुस्तके—[ ] चिह्नितांशः पतितः ।

स्तर्जनीमध्यमानामिकाभिः संहताभिर्मिलिताभिरास्यमुप समीपे स्पृशेत् नवलोमकस्थाने "ओष्ठौ च संस्पृश्य यत्रालोमकाविति" वशिष्ठेन पुनराचमनविधानात् एवमित्यनेन मुखसंवरणाभिधाना च्चेति। पश्चाद्घ्राणं स्पृशेत् अनन्तरं चक्षुः-श्रोत्रे स्पृशेदित्यन्वयः॥

अत्र घ्राण-चक्षुः-श्रोत्राणां गोलोकद्वयापेक्षया पुनः पुनरिति मन्तव्यं नतु प्रत्येकं वारद्वयं गौरवात्।

यथा शङ्खः—

तर्ज्जन्यङ्गुष्ठयोगेन स्पृशेन्नासापुटद्वयम्।

अङ्गुष्ठानामिकायोगात् स्पृशेन्नेत्रद्वयन्ततः

अङ्गुष्ठस्यानामिकायायोगेन श्रवणे स्पृशेत्।

बाहुस्पर्शनञ्चांसदेशे--

आस्यनासाक्षिकर्णांश नाभि-वक्षः-शिरोऽंसकान्।

इति छन्दोगपरिशिष्टवचनात्।

खानि चैव स्पृशेदद्भिरात्मानं शिर एव च।

इति मनुवचनात् जलार्द्रहस्तेनैवाङ्गस्पर्शनम्॥

अविरोधात्तुल्याकाङ्क्षितत्वात् मच्छूद्राणामपि यथोक्ततीर्थेनाचमन माम्याद्यङ्गस्पर्शनञ्च।

देवलः—ततः कृत्वाङ्गुलिस्पर्शं दृग्घ्राण श्रोत्र नाभिषु।

मूर्द्धानं चरणौ चाद्भिः संप्रोक्ष्यार्थं शुचिर्भवेत्॥

भविष्ये—यद्भूमावुदकं वीर समुत्सृजति मानवः।

वासुकिप्रमुखा नागास्तेन प्रीणन्त्यसंशयम्॥

---

## अथाचमनपात्राणि ।

सुमन्तुः—

चर्म्म तैजस पाषाण काचेन्धनगतं जलम् ।

उच्छिष्टः स्वयमादाय समाचान्तो विशुध्यति ॥

इन्धनं काष्ठम् ।

आपस्तम्बः—

अलांवूताम्रवंशस्थं करङ्कस्थञ्च यत्पयः ।

आचम्य स्वयमानीय शुद्धो भवति मानवः ॥

उशनाः—

कांस्यायसेन पात्रेण त्रपुसीसकपित्तलैः ।

आचान्तः शतकृत्वोऽपि न कदाचिच्छुचिर्भवेत् ॥

---

## अथाचमने निषिद्धा व्यवस्था।

देवलः—

सोपानत्को जलस्थो वा मुक्तकच्छोऽपि वा द्विजः।
उष्णीषी वापि नाचामेत् वस्त्रेणावेष्ट्य वा शिरः॥
न गच्छन्न शयानश्च न चलन्न परामृशन्।
न हसन्नैव संजल्पन् नात्मानमवलोकयन्॥
केशान् नीवीमधः कायं न स्पृशन् धरणीमपि।
यदि स्पृशति चैतानि भूयः प्रक्षालयेत् करम्॥

आत्मानं हृदयं अधःकायं नाभेरधः।

मरीचिः—

न बहिर्जानुरुत्ववया नासनस्थो न चोत्थितः।
न पादुकास्थो नान्यचित्तः शुचिः प्रयतमानसः॥
भुञ्जासनस्थोऽप्याचामेन्नान्यकाले कथञ्चन।

गोभिलः—

जानुभ्यामूर्द्ध्वमावद्य जले तिष्ठन् न दुष्यति।

तिष्ठन्नुत्थित इत्यर्थः।

तेन न चोत्थित इति निषेधो जलेतरविषयः।

यमः—

जानूर्द्ध्वं जले तिष्ठन्नाचान्तः शुचितामियात्।
अधस्ताच्छतकृत्वोऽपि समाचान्तो न शुध्यति॥

गोभिलीयः—

उदक एवोदकस्थः स्थलगस्तु स्थले शुचिः ।

पादौ कृत्वोभयत्रैव आचम्योभयतः शुचिः ॥

उभयत्र जले चैकं स्थले चैकं पादं कृत्वाचम्य उभयतो जले स्थले च कर्म्म कुर्व्वन् शुचिः स्यात् ।

व्यासः— अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत् ।

विष्णुपुराणे—

मुक्तकच्छस्तु नाचामेत् देवाद्यर्च्चां च वर्ज्जयेत् ॥

होमदेवार्च्चनाद्यासु क्रियास्वाचमने तथा ।

नैकवस्त्रः प्रवर्त्तेत द्विजो वाचनिके जपे ॥

गोभिलीयः—

नान्तरीयैकदेशेन कल्पयित्वोत्तरीयकम् ।

अन्तरीयं परीधानवासः ।

शात्यायनः—

दानमाचमनं होमं भोजनं देवतार्च्चनम् ।

प्रौढ़पादो न कुर्व्वीत स्वाध्यायं पितृतर्पणम् ॥

आसनारूढ़पादस्तु जान्वोर्व्वा जङ्घयोः स्थितः ।

कृतावसक्थिको यश्च प्रौढ़पादः स उच्यते ।

ऊर्द्ध्वीकृतं जानुजङ्घाद्वयमालम्ब्य स्थितो यश्चासनारूढ़पादो यश्च भित्त्यादौ कृतावसक्थिकः । स त्रिविधः प्रौढ़पाद इत्यर्थः ।

## अथाचमननिमित्तानि।

उच्छिष्टं मानवं स्पृष्ट्वा भोज्यं वापि तथाविधम्।
तथैव हस्तौ पादौ च प्रक्षाल्याचम्य शुध्यति॥

एतच्च सवर्णोत्तमजातीयस्पर्शे ज्ञेयम्।

बौधायनः—

दैहिकानां च्युतानां मलानां स्पर्शे नीवीं विस्रस्याचम्य परिधा चोपस्पृशेत्।

दैहिकानां श्लेष्मादीनाम्।

मनुः—वसाशुक्रमसृङ्मज्जा मूत्रविट्कर्णविन्नखाः।
श्लेष्माश्रु दूषिका स्वेदो द्वादशैते नृणां मलाः॥

बौधायनः—

आददीत मृदोऽपश्च षट्सु पूर्वेषु शुद्धये।
उत्तरेषु च षट्स्वद्भिः केवलाभिर्विशुध्यति॥

अत्र प्रक्षालनोत्तरमाचमनम्।

देवलः—शौचाम्भःस्तिमितां भूमिं स्पृष्ट्वाचामेत् प्रयत्नतः।

विष्णुः—

पञ्चनखास्थि निस्नेहं स्पृष्ट्वाचामेच्चाण्डालम्लेच्छसम्भाषणे च।

देवलः—

कामतस्तु निरीक्ष्यैव रेतोविण्मूत्रमेव च।
देवाभिगमकाले च द्विजो नित्यमुपस्पृशेत्॥

देवाभिगमकाले देवदर्शनेच्छायाम्।

दैवात् सकृद्दर्शने विशेषमाह यमः—

*प्रत्यादित्यं न मेहेत न पश्येदात्मनः शकृत्।
दृष्ट्वा सूर्य्यं निरीक्षेत गामग्निं ब्राह्मणांश्च वा॥

दैवात् परशकृद्दर्शने तु याज्ञवल्क्यः—

गायत्रीमशुची दृष्टे चापले चानृतेऽपि च।

गायत्रीं जपेदिति पूर्व्वेणान्वयः।

हारीतः—

नोत्तरेदनुपस्पृश्य।

जलपारगमनपूर्व्वमाचामेदित्यर्थः।

सम्वर्त्तः—चर्म्मारं रजकं वेणुं धीवरं नटमेव च।
एतान् स्पृष्ट्वा नरो मोहादाचामेत् प्रयतोऽपि सन्॥

वायुपुराणे—

निष्ठीविते तथाभ्यङ्गे तथा पादावसेचने।
उच्छिष्टस्य तु सम्भाषे अशुच्यपहतस्य च॥
सन्देहेषु च सर्व्वेषु शिखां मुक्त्वा तथैव च।
विना यज्ञोपवीतेन नित्यमेवमुपस्पृशेत्॥
उष्ट्रवायससंस्पर्शे दर्शने चान्त्यजन्मनः।

निष्ठीवने मुखेन श्लेष्मत्यागे। आचमननिमित्तसन्देहेष्वित्यर्थः।
यज्ञोपवीतं विना स्थित्वेत्यर्थः।

---

* क पुस्तके—अथादित्यं न पश्येत।

## अथ द्विराचमननिमित्तानि ।

याज्ञवल्क्यः—

स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे ।

आचान्तः पुनराचामेत् वासो विपरिधाय च ॥

मद्यादिकं पीत्वा न तु जलमिति कश्चित् तन्न सामान्येन विधानात् ।

तथाच मनुः—

सुप्त्वा क्षुत्वा च भुक्त्वा च निष्ठीव्योक्त्वानृतानि च ।

पीत्वापोऽध्येष्यमाणश्च आचामेत् प्रयतोऽपि सन् ॥

अध्येष्यमाणो अध्ययनं चिकीर्षन् ।

आपस्तम्बः—

भोक्ष्यमाणस्तु प्रयतोऽपि द्विराचामेत्

वशिष्ठः—

आचान्तः पुनराचामेत् वासः परिधाय ओष्ठौ च संस्पृश्य यत्रालोमकौ* ॥

शङ्खलिखितौ—

मूत्र पुरीष निष्ठीवनादिषु शुक्लवाक्याभिधाने च द्विराचामेत्। शुक्लं परुषम् ।

आपस्तम्बः—

स्वप्ने क्षुतथौ सिंहानिकायायालम्भे लोहितस्य अग्नेर्गवां ब्राह्मणस्य-

* गं पुस्तके यात्रलोमकौ ।

स्त्रियाश्चालम्भेऽमेध्यस्योपस्पृश्यप्रयतश्च मनुष्यं नीवीञ्च परिधायोप-स्पृशेत्।

' तुरथुः कालः सिंहानिका श्लेष्मा लोहितं रक्तं अमेध्यिता चण्डालादिसम्बन्धिनो निषिद्धस्य।

गवां प्रसूतानां दशरात्रान्तः, ब्राह्मणस्य उदक्याशौचिस्पृष्टस्य याज्ञवल्क्यवचनात् अन्यदाग्निगोब्राह्मणानां मेध्यत्वकथनादन्य शोधकत्वाच्च।

यथा मनुः—मक्षिका विप्रुषश्छाया गौरश्वः सूर्य्यरश्मयः।

रजो भूर्वायुरग्निश्च स्पर्शे मेध्यानि निर्दिशेत्॥

मत्स्यपुराणे—

एवं सूर्य्यं नमस्कृत्य त्रिः कृत्वाथ प्रदक्षिणम्।

द्विजं गां काञ्चनं स्पृष्ट्वा ततो विष्णुगृहं व्रजेत्॥

स्त्रियास्तु चतुर्थदिवसस्नातायाः—

भर्त्तुः शुद्धा चतुर्थेऽह्नीति वचने भर्त्तुरेव स्पर्शे शुद्धिविधानात्।

पैठीनसिः—

कलिल-कास-श्वासमेव रथ्याचत्वरश्मशानानि चक्रम्याचान्तः पुनराचामेत्।

कलिलः कठिनश्लेष्मा श्वासो विज्ञतः चत्वरोऽङ्गनम्।

काशीखण्डे—

स्नात्वा भुक्त्वा पयः पीत्वा प्रारम्भे शुभकर्म्मणाम्।

सुप्त्वा वासः परीधाय तथा दृष्ट्वाप्यमङ्गलम्॥

प्रमादादशुचिं स्पृष्ट्वा द्विराचान्तः शुचिर्भवेत्।

अत्र शुभकर्म्मपदं वैदिककर्म्मपरम्—तेन

य: क्रियां कुरुते मोहादनाचम्यैव नास्तिक: ।
भवन्ति हि वृथा तस्य क्रिया: सर्व्वा न संशय: ॥

इति वायुपुराणवचनेन प्रतिकर्म्मादौ यत्कर्म्माङ्गाचमनं विहितं तद्द्विराचमनं मन्तव्यम् ।

---

## अथाचमनानुकल्पः ।

मार्कण्डेयपुराणे—

कुर्य्यादाचमने स्पर्शं गोपृष्ठस्यार्कदर्शनम् ।
कुर्व्वीतालम्भनञ्चैव दक्षिणश्रवणस्य च ॥
यथासम्भवतो ह्येतत् पूर्व्वाभावे परम्परम् ।

'आचमने आचमनस्थाने इत्यर्थः ।

विष्णुः—

आर्द्रं तृणं गोमयमास्पृशेत् ।

शातातपः—

वातकर्म्मणि निष्ठीव्य दन्तश्लिष्टे तथानृते ।
क्षुते पतितसम्भाषे दक्षिणं श्रवणं स्पृशेत् ।

## अथाचमनापवादः ।

मनुः—नोच्छिष्टं कुर्व्वते मुख्या विप्रुषोऽङ्गे पतन्ति याः ।

न श्मश्रूणि गतान्यास्यं न दन्तान्तरविष्ठितम्* ॥

मुख्या मुखोद्भवाः, दन्तान्तरविष्ठितं दन्तमध्यप्रविष्टम् ।

देवलः—

भोजने दन्तलग्नानि निर्हृत्याचमनञ्चरेत् ।

दन्तलग्नमसंहार्य्यं लेपं मन्येत दन्तवत् ॥

न तत्र बहुशः कुर्य्याद्यत्नमुद्धरणे पुनः ।

भवेदाशुच्यमत्यन्तं व्रणवेधाद्व्रणे कृते ॥

पैठीनसिः—

मुखच्युता भूमिगता बिन्दवः परामृष्टाः शुद्धाः ।

मनुः—स्पृशन्ति बिन्दवः पादौ य आचामयतः परान् ।

भौमिकैस्ते समा ज्ञेया न तैरप्रयतो भवेत् ॥

शातातपः—

दन्तलग्ने फले मूले भक्ष्ये स्नेहे तथैव च ।

ताम्बूले चेक्षुदण्डे च नोच्छिष्टो भवति द्विजः ॥

फले कटुतिक्तकषाये हरीतक्यादौ भक्ष्ये कटुकषाये ।

यथा हारीतः—

कटौ कषाये ताम्बूले भक्ष्ये स्नेहानुलेपने ।

मधुपर्के च सोमे च नोच्छिष्टं मनुरब्रवीत् ॥

---

* क पुस्तके -भिष्ठितम् ।

यमः—

लवणादि तु यद्द्रव्यं वृक्षाणां त्वक् फलन्तथा।
कटुतिक्तकषायञ्च नोच्छिष्टं मुनयो जगुः॥

अत्रिः—

मधुपर्के च सोमे च अप्सु प्राणाहुतिषु च।
नोच्छिष्टस्तु भवेद्विप्रो यथात्रेर्वचनन्तथा॥

अप्सु—

आपोशानक्रियायां प्राणाहुतिषु पञ्चग्रास्याम्।

---

## अथ स्वभावशुद्धानि ।

शातातपः—

गोकुले कन्दुशालायां तैलयन्त्रेक्षुयन्त्रयोः ।
अमीमांस्यानि शौचानि स्त्रीषु बालातुरेषु च ॥

कन्दुशाला चोपीटकलाजाद्युपकरणस्थानम् ।
बालः पञ्चवर्षाभ्यन्तरवयस्कः अमीमांस्यानि शुद्धशुद्धिभागितया न विचारणीयानीत्यर्थः ।

वशिष्ठः—

बालेन च समाक्रान्तं स्त्रीभिराचरितञ्च यत् ।
प्रसारितञ्च यत् पण्यं न दोषस्तत्र तत्र च ॥

मनुः—

नित्यं शुद्धः कारुहस्तः पण्यं यच्च प्रसारितम् ।
ब्रह्मचारिगतं भैक्ष्यं नित्यं मेध्यमिति स्थितिः ॥

नित्यं शुद्धः प्रक्षालनव्यतिरेकेणैव कारुनिर्म्मितं द्रव्यं व्यवहार्य्य-मित्यर्थः कारुः शिल्पी पण्यं विक्रेयद्रव्यं क्रयदेशे प्रसारितं तच्च सिद्धान्नव्यतिरिक्तम् ।

तथा—नित्यमास्यं शुचि स्त्रीणां शकुनिः फलपातने ।
प्रस्रवे च शुचिर्वत्सः श्वा मृगग्रहणे शुचिः ॥

चुम्बनादौ स्त्रीणां मुखं शुचीत्यर्थः ।

तथाच वशिष्ठः—

स्त्रीमुखं रतिसंसर्गे इति ।

तथा मनुः—

श्वभिर्हतस्य यन्मांसं शुचि तन्मनुरब्रवीत्।

क्रव्याद्भिश्च हतस्यापि चाण्डालाद्यैश्च दस्युभिः॥

मार्कण्डेयपुराणे—

अतिप्रभूतं वान्तञ्च तृषातुरविचेष्टितम्।

कर्म्मान्ताङ्गारशालाश्च स्तनन्धययुताः स्त्रियः॥

रथ्यागतमविज्ञातं दासवर्गाहृतञ्च यत्।

वाक्प्रशस्तं चिरातीतमनेकान्तरितं शुचि॥

कर्म्मणामन्तः परिणामो यत्र कर्म्मान्तशाला शिल्पशाला अङ्गारशाला पाकशाला तत्र निष्पन्नस्य शुद्धाशुद्धान्वेषणं न कार्य्यमित्यर्थः।

तथाचापस्तम्बः—

नानौषधिः कराः स्त्रीणां पाकशाला प्रियामुखम्।

एतानि नित्यशुद्धानि गृहस्थस्यैव पञ्चमः॥

नानाप्रकार ओषधि व्रीहिमुद्गादिः श्वकाकचाण्डालादिस्पर्शेऽपि शुद्धः स्त्रीणां करः शुद्धः स्त्रीभिः करेण शुद्धाशुद्धिर्वा यत् संक्रियते तच्छुचीत्यर्थः। पाकशालायां निष्पन्नं शुचि गृहस्थस्यातिथिभ्यो नित्यं शुद्ध इत्यर्थः।

वामनपुराणे—

चेष्टितं बालवृद्धानां बालस्य च मुखं शु

कर्म्मान्ताङ्गारशालाश्च स्तनन्धययुताः स्त्रियः॥

वाग्विप्रुषो द्विजातीनामाचान्तस्याम्बुबिन्दवः।
रथ्याकर्द्दमतोयानि नावः पन्थाः* तृणानि च॥
मारुतेनैव शुध्यन्ति पक्वेष्टकचितानि च।

वशिष्ठः—

अमेध्यभूस्था ये वृक्षा पत्रपुष्पफलोपगाः।
तेषां नैव प्रदुष्यन्ति पत्रं पुष्पं फलानि च॥

अत्रिः—

मक्षिका सन्ततिर्धारा भूमिस्तोयं हुताशनः*।
मार्जारश्चैव दर्व्वी च नकुलश्च सदा शुचिः॥

सन्ततिः शिशुः पञ्चवर्षाभ्यन्तरवयस्कः धारा तु पतन्ती।
मार्जारकर्त्तृकस्पर्शे तु स्नानमुक्तं मार्कण्डेयपुराणे—

सूयिका सूतिका-षण्ड मार्जाराखुश्वकुक्कुटान्।
पतितापविद्ध चाण्डाल मृतहारांश्च धर्म्मवित्॥
संस्पृश्य शुध्यति स्नानादुदक्याग्रामशूकरौ।

अपविद्धः परिवादग्रस्तः।

हारीतः—

दधि-सर्पिः-पयः-क्षौद्रे भाण्डदोषो न विद्यते।
शिशुर्दर्व्वी च वायुश्च मार्जारश्च सदा शुचिः॥

अतो मार्जारेण पाकस्थाल्यादिस्पर्शे दोषाभाव इति। दर्व्वी च काष्ठादिनिर्म्मिता मार्ज्जनादिना लेपाद्यभावे शुचिरित्यर्थः।

---

* न पुस्तके -र्पाय।

शङ्खः—

शुद्धं नदीगतं तोयं सर्व्व एव तथाकराः।

मुखवर्ज्जन्तु गौः शुद्धा मार्ज्जारः क्रमणे शुचिः॥

सर्व्व एवाकरा धान्यादिमर्द्दनस्थानानि तथा अन्नलाजादि-निष्पत्तिस्थानानि चेत्यर्थः।

मनुः—मक्षिका विप्रुषश्छाया गौरश्वःसूर्य्यरश्मयः।

रजो भूर्वायुरग्निश्च स्पर्शे मेध्यानि निर्द्दिशेत्॥

छाया तु चाण्डालादन्यस्य—

चाण्डालपतितच्छायास्पर्शे दुष्टा तनुर्भवेत्।

इति ब्रह्मपुराणवचनात्।

गौः प्रसूतेतरा। भूश्चामेध्यलेपरहिता अग्निश्च चण्डालादि-सम्बन्धीतरः।

यथा देवलः—

चाण्डालाग्नेरमेध्याग्नेः सूतिकाग्नेश्च कर्हिचित्।

पतिताग्नेश्चिताग्नेश्च न शिष्टैर्ग्रहणं स्मृतम्॥

शातातपः—

रेणवः शुचयः सर्व्वे वायुना समुदीरिताः।

अन्यत्र रासभाजानां समूहन्याश्च वाससाम्॥

रासभो गर्द्दभः समूहनी सम्मार्ज्जनी।

नारदीयपुराणे—

अजारजः खररजस्तथा सम्मार्ज्जनीरजः।

स्त्रियाः पादरजो नित्यं शक्रादपि हरेत् शुचि॥

बृहस्पतिः—

*पादौ शुची ब्राह्मणानामजाश्वानाम् मुखं शुचि।

शङ्खः—

गोपुरीषञ्च मूत्रञ्च नित्यं मेध्यमिति स्थितिः।

देवलः—

गोशकृच्छुष्कदेशस्थं श्मशानादुद्धृतं शुचि।

तेन यावत् श्मशानस्थितं तावदेवाशुचीत्यर्थः।

मनुः—

त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन्।
अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते॥
ऊर्द्धं नाभेर्यानि खानि तानि मेध्यानि नित्यशः।
यान्यधस्तान्यमेध्यानि देहाच्चैव च्युता मलाः॥

ब्राह्मणानामिति चातुर्व्वर्ण्योपलक्षणम्। अदृष्टमपवित्रतया स्वयमज्ञातं निर्णिक्तं प्रक्षालितम्। खानि छिद्राणि मेध्यानि स्पृश्यानि अमेध्यान्यस्पृश्यानि देहच्युता मला नखादयोऽमेध्याऽस्पृश्या इत्यर्थः।

व्यभिचाराद्दृतौ शुद्धिरिति—न स्त्री दुष्यति जारेण—
इत्यादि याज्ञवल्क्यादिवचनं रजसा स्त्री मनोदुष्टा इति मनुवचनं मनोग्रहणवैयर्थ्यभयेन तदेकवाक्यतया मानसव्यभिचारपरम्।

---

* ग पुस्तके—अधिकः पाठः।
नवां पुराणि मेध्यानि सर्व्वगात्राणि योषिताम्।

अथवा—

कायिकव्यभिचारस्थले सर्व्वत्रैव सकलमुनिभिः प्रायश्चित्तोपदेशाद्यथाविधिकृतप्रायश्चित्ताया अपि रजोयोगानन्तरमेव शुद्धिनियमविधायकम्। रजसा स्त्री मनोदुष्टेति मनुवचनन्तु मनोदोषे तस्मात्तच्छुद्ध्यर्थमिति ध्येयम्।

मनुः—

अद्भिर्गात्राणि शुध्यन्ति विद्वांसो दानेनाकार्य्यकारिणः।
प्रच्छन्नपापा जप्येन नदी वेगेन शुध्यति॥

मरीचिः—

येषु स्थानेषु यच्छौचं धर्म्माचारश्च यादृशः।
तत्र तं नावमन्येत धर्म्मस्तत्रैव तादृशः॥
गणपतिभट्टतनूजो गोविन्दानन्दपण्डितः श्रीमान्
समकृत सन्तोषार्थं सुधियां श्रीशुद्धिकौमुदीमेताम्॥
सर्व्वान्तर्य्यामिने तस्मै गोविन्दाय नमो नमः।
यत्रानुरागं धास्यन्ति यत्कृपाभिर्विपश्चितः॥

इति श्रीगोविन्दानन्दकविकङ्कणाचार्य्य
विरचिता शुद्धिकौमुदी
समाप्ता।



# विषयसूची


| | पृ: | प० |
|---|---|---|
| अघवृद्धिमदशौचम् ... ... ... | ४० | १ |
| अधिकारिनिरूपणम् ... ... ... | ८६ | १ |
| अन्नशुद्धिः ... ... ... ... | ३१४ | १ |
| अशुभचन्द्रनिर्णयः ... ... ... | १९९ | ३ |
| अशौचकालनिरूपणम् ... ... | ६ | १ |
| अशौचसङ्करः ... ... ... | ३८ | १ |
| अशौचे विधिनिषेधौ ... ... ... | १३ | १ |
| अशौचिकर्तव्यता ... ... ... | १४० | १ |
| अस्थिसञ्चयनम् ... ... ... | १४४ | १ |
| अस्थिसञ्चयनप्रयोगः ... ... ... | १४८ | १ |
| अधम-ब्राह्मस्पर्शनिरूपणम् ... ... | २१२ | १६ |
| आचमनपात्राणि ... ... ... | ३४४ | १ |
| आचमनशुद्धिः ... ... ... | ३३८ | १ |
| आचमनानुकल्पः ... ... ... | ३५२ | १ |
| आचमनापवादः ... ... ... | ३५३ | १ |
| आचमने निमित्तव्यवस्था ... ... | ३४५ | १ |
| आचमननिमित्तानि ... ... ... | ३४७ | १ |
| उत्पातनिरूपणम् ... ... ... | २१६ | ६ |
| उदकदानादिः ... ... ... | १२२ | १ |
| उदकशुद्धिः ... ... ... | २९७ | १ |
| एकादशाहकृत्यम् ... ... ... | १५५ | १ |

| | पृ: | प० |
|---|---|---|
| कालाशुद्धिनिरूपणम् ... ... | १८० | १२ |
| गर्भस्रावाशौचम् ... ... ... | ४३ | १ |
| गुरुशुद्धिनिर्णयः ... ... ... | २०५ | १० |
| चन्द्रशुद्धिप्रशंसा ... ... ... | १९८ | ५ |
| जननाशौचम् ... ... ... | ९ | १ |
| तैजसादिद्रव्यशुद्धिः ... ... ... | ३०५ | १ |
| ताराशुद्धिनिर्णयः ... ... ... | २०३ | २ |
| दशाहकृत्यम् ... ... ... | १५१ | १ |
| द्विराचमननिमित्तानि ... ... | ३४९ | १ |
| पुंसवनादिकालनिर्णयः ... ... | २३९ | १ |
| प्रकृतानुसरणम् ... ... ... | ५४ | १ |
| प्रेतकृत्यविवेचनम् ... ... ... | १०६ | १ |
| प्रेतपिण्डदानविधिः ... ... ... | १२८ | १ |
| प्रेतपिण्डदानप्रयोगः ... ... ... | १३४ | १ |
| प्रोक्षणादिशुद्धिः ... ... ... | ३१० | १ |
| बालत्वादिकालनिर्णयत्व ... ... | २२६ | ७ |
| बालाद्यशौचनिर्णयः ... ... ... | २१ | १ |
| भूमिशुद्धिः ... ... ... | ३०१ | १ |
| मूज्जलशुद्धिः ... ... ... | ३३४ | १ |
| मङ्गलाचरणम् ... ... ... | १ | १ |
| मलमासलक्षणम् ... ... ... | २६५ | १ |
| मासपदार्थनिरूपणम् ... ... | २५० | १ |

| | | |
|---|---|---|
| | पृ: | प० |
| मलमासादिनिषिद्धानि ... ... | २७० | १३ |
| योजनसाधनप्रकार: ... ... ... | २११ | २१ |
| रविशुद्धिनिर्णय: ... ... ... | २०५ | ५ |
| राहुदर्शने शुभाशुभनिरूपणम् ... ... | २१७ | ८ |
| रक्तपाताशौचादिषु कर्म्मनिषेधनम् ... | १८७ | ११ |
| वारप्रवृत्तिनिर्णय: ... ... ... | २११ | ६ |
| विवाहे विद्धनचत्रवर्ज्जनम् ... ... | २०६ | १५ |
| विष्टिनिरूपणम् ... ... ... | २०७ | १५ |
| विदेशस्थाशौचम् ... ... ... | ३४ | १ |
| विवाहे मासशुद्धि: ... ... ... | २३१ | १२ |
| विवाहे वर्षशुद्धि: ... ... ... | २३० | १२ |
| व्यतीपातादिवर्ज्जनम् ... ... ... | २०८ | ६ |
| शय्यादानादिप्रयोग: ... ... ... | १७४ | १ |
| शुद्धिस्वरूपनिरूपणम् ... ... | १ | ८ |
| सद्य:शौचादि ... ... ... | ६६ | १ |
| सद्य:शौचशब्दार्थविवेचनम् ... | ७३ | ६ |
| सपिण्डनाधिकारिण: ... ... | १०३ | १ |
| सर्व्वकाले गङ्गास्नानविधि: ... ... | १८७ | १२ |
| स्त्र्यशौचम् ... ... ... | २८ | १ |
| स्नानशुद्धि: ... ... ... | ३२४ | १ |
| स्वभावशुद्धानि ... ... ... | ३५५ | १ |

## ऋषिनामानि।


अङ्गिरा: ७,७।२४,१५। २५,१४। २७,४।४६,१५।४७,१५।५५,१६।
६०,१।८३,१४।८४,१३।१४२,१२।

अत्रि: ४७,४।२५४,४।२५७,७।

आपस्तम्ब: २४३,१५। २८१,१२। ३३८,७-१८। ३४०,२०।३४४,५।
३५६,१२।

आश्वलायन: १२३,१०।१२७,५।१४०,१।

उशना: १७२,१८।३४४,७।

ऋष्यशृङ्ग: ४,६। १४,१७। २५,१। २७-४। ३१,५।९०,३।९२,९।
१३०१७।२८२,११।

कश्यप: २२२,९।

कात्यायन: १४१,११।१४४,१३।२४८,१०।२८१,९।

काश्यप: ६,८।७७,१६।

गोतम: ७,१५।३५,१०।३६,५।८२,१।८४,५।९४,१९।१२६,१०।

गोभिल: १७८,२२।

छागलेय: ७५,१५।

जावाल: १३,२। ५६,१६। ५८,१४। ६७,१७। ८०,१५। ११९,९।
१९३,१७।

जावालि: २७३,१६।

दक्ष: ५,९। ६,१६।६४,८। ६६,१४।७४,३।१५६,७।१६७,१५।१८२,
८।१९०,८।१९२,१०।१९५,५।

देवव्रत: १६४,२०।

देवल: ८,९ । ३४,८। ३५,२।३६,१७।१११,१८।१५५,३।१९५,१२ ।
२१९,१२।३००,१ । ३०१,२-१७।३०३,८।३०७,१५। ३१०,१६।
३११,१५।३१५,१३। ३१८,१।३२८,१।३४५,१।३४७,१५।३५३,४।
३५९,५।

नारद: ९२,१३ ।

पराशर: १०,१-६ ।६१,४।७१,-१ । ७२,१४ । ११७,५ । २२०,१६।
३०३,१०।३१९,१५।

पारस्कर: २१,१३ । २२,१४।२४,१३।६४,४ । १९४,११ । १२३,२१।
१३०,१० । १३३,६।१३८,१४ । १३९,११।१७८,११।२३८,१५।
२४३,१२।३३८,१०।

पितामह: ७१,६।२४२,१।२४४,८।२४६,५।

पैठीनसि: १०,१६। २४,६। ३२,१०। १०३,१४।१२५,१५। १५५,७।
१९२,१६।२४६,८।२९५,१५।३५०,१५'३५३,९।

प्रचेता: ९,१०।११६,६।११७,१।११९,२१।१२८,२।१३२,१७।

प्रजापति: २९५,८।

बृहद्गार्ग्य: ७६,१८।

बृहद्यम: ३०६.१०।

बृहद्विष्णु: २९९,१२।३०८,१।३१४,५।३१७,६।

बृहन्मनु: २१,८।४१,१०।७९,७।

बृहस्पति: ७,१।३४,२।४८,६।४९,२।७१,१५ ।७४,२।८३,२।८६,१०।
८९,३।९१,१४।९२,९।१४२,९।१६७,१९।१७८,१८। १८३,१८।
२७६,१३।२७८,१५।२९९,६।३०६,१।३१७,१६।३१९,१७।३५९,१।

**बैजवाप:** १३८,७।

**बौधायन:** १३३,६। १८८,१०। १९३,१२। ३०३,५। ३०७,१२। ३१८,१२।३१२,७।३४०,१७।३४२,२।३४७,५।

**भरद्वाज:** ८४,१०।९३,७।९५,१०।

**भोजराज:** १८,१३।

**मनु:** ३,६-१५।६,२। ९,५।२८,९। ३०,४।३३,१७। ३४,११। ३६,१०। ४६,८।४७,३।४८,३।५२,४।५५,९।५६,७।५९,४।६३,४।७०,१५। ७१,९।७३,५।११। ८०,५९। ८६,१४।९२,४। ९३,४।१००,१०। १०३,९।१११,५ १४२,३।१५४,१।१९४,१७।१९७,३।२१८,१८। २४०,२२। २४१,९। २४८,७। २५३,१८। ३०५,२। ३०६,५। ३१०,१२। ३१३,१७। ३१४,१३। ३१६,१९। ३१७,१०।३२०,४। ३३९,१८।३४१,१५।३५३,१।३५६,१।३५८,६।३६०,६।

**मरीचि:** ४४,२०।६२,१।८६,२।१२८,१८। २५४,६।३०३,१।३४५,९। ३६०,९।

**यम:** ९,१४।१२,१६। २०,३। ४१,१८। ५५,६। ६७,५। ७३,१।८२,७। ९५,१२।१०५,१।१११,१३। १२६,११।१५०,८।१९४,३।१९६,१६। २१९,१०।२७९,५।३०३,११।३०४,७।३०५,१।३१५,३।३१६,१५। ३१८,११।३४५,१७।३४८,१।३५४,१।

**याज्ञवल्क्य:** ३,१३। २३,१-१५। २६,१४। २७,१२।३०,१२। ५६,१८। ६२,१४। ६६,१०।७२,६।७७,९।७९,१३।८०,१।९०,६।१२१,११। १२२,१७। १२६,१६।१२७,७। १३८,१९। १३९,१४। १६४,१५। १७९,५।२३९,५।२४०,७।२४१,३। २४३,९।२८०,१४।२८८,११।

३०२,५। ३०४,४। ३०८,१९। ३१२,१। ३१४,१८। ३१५,८।
३१८,१२।३३९,३-१७।३४१,५।३४९,१।

लघुहारीतः १६,१६। १७,६। १८,७। ८६,१७। ८९,१३। ९९,१२।
१०३,१३।१०४,३८।१७२,५।१७६,१०।१८४,६।२८१,१९।२८७,४।

व्याघ्रः २९५,४।

योगियाज्ञवल्क्यः २९७,७।

लौगाक्षिः ३११,८।

वशिष्ठः ४७,९।५३,१।६३,१। १४१,१७।२००,१। ३१४,२। ३१७,१।
३१९,१७।३४९,१३।३५५,७-१९।३५७,४।

वाल्मीकिः ८८,२।

विष्णुः २९,१८। ३४,४। ३५,१२। ३८,१२। ४८,१। ५४,१६।६७,७।
७४,१९। ७९,१८।९०,१९। १११,८। ११९,१४। १४९,१२।
१५२,१३। १९६,१। २१९,१५। २५४,७। २९३,१। ३१०,१९।
३१२,९।३५२,७।

व्यासः ३२,१६।३३,१४।४०,७।५४,७।७८,१०।८३,८।८४,६।८८,१९।
२४५,२२।२९८,११।३०६,१८।३४६,६।

शङ्खः ४,९।१३,१८। १५,३। २२,७। २५,७।२६,१७। ३७, ३।४०,१५।
६५,३।७३,१४।७९,४। ८९,६।९२,१६।९४,१६। ९५,१८।९९,६।
१९०,५। १९७,११। २६३,१८। ३०५,१४। ३१०,२। ३१८,६।
३४०,१५।३४१,१२।३५९,३।

शाट्यायनः १७३,१।३४६,१४।

शङ्खलिखितौ २४,९।५०,६।१२३,१५।१३९,४।

शातातप: ४६,१९।१४०,१२।१७९,१२।१८१,८।१९१,१९।२१९,७।
२७४,९।३००,१४।३०८,१५।३१५,१९।३१९,१।३२०;१।३५२,९।
३५५,१।

शाण्डिल्य: २६८,१।

शुनःपुच्छ: १२८,११।१३२;७।

सत्यव्रत: २४५,१९।२७४,१।२९२,२०।

सम्बर्त्त: ८,३।१०,१३।२०,६।१४४,११।३०३,१९।३४८,१०।

सुमन्तु: ५१,१४।११९,१९।३०२,१८।३४०,१२।३४४,१।

हारीत: १६,११।४५,१३।४६,१२।५७,१२।७४,१४।१०५,६।११२,१।
१३८,१६।१४३,१।१५३,१७।१७९,१७।१८३,१४।१९७,१८।
२४४,१४।२५०,५।२५४,२०।२५५,१८।२६१,२०।२६२,१३।
२६५,२।२८३,१।२९१,४।३१४,९।३१९,५।३२०,१६।३३७,१।
३३८,१५।३३९,१०।३४०,५।

## पुराणनामानि ।

अग्निपुराणम् १०७,८।१६०,१५।१८१,१२।१८५,१८।
आदिपर्व्व १९७,१ ।
आदिपुराणम् ९,१६ । ११, १८ । १९, ४-१५ । २८, १ । २९,२। ३३,१-२०।४०,७।४३,२। ४४,१६।४५, १५। ५२,१९।५६,१३। ५८,४ । ६१,१-१२ ।६३,१५। ६७,१३ । ६८,५,१८ । ६९,१६। ७०,१० । ७२,८। ७५,५। ७६,५।७७,५।७८,१२ ।८१,१।८७,१८। ९१,२ । ९४,७ । ९५,३।९६,५।१०६,९।११०,१५ । ११२,११। ११५,१।११६,३,१४।११९,१।१२१,३,१३। १२३,१८।१२४,१६। १२८,५। १२९,९ । १३२,८-१९। १४३,४ । १४४,२। १४५,८। १४९,१३।१५१,१४।१७२,३।१८०,१५।१८७,१२।१८८,१८।
कालिकापुराणम् २,१८। ७४,१३। १७२,३। १८०,१५। १८७,१२। १८८,१८।२४७,१।३१३,१०।
कूर्म्मपुराणम् ८,१।९,८।१३,७।१९,८।२१,२। २२,३।२३,१९।२४,३। ३०,८। ३२,१६। ३८,२। ३९,१४। ४१,७। ४३,११।५४,२-१३। ५६,१। ५९,१४-१८। ६०,५-१३-१८। ६२,७। ७६,१। १५४,६। १५९,१९।१८७,१ ।
गरुड़पुराणम् १९६,५ ।
नरसिंहपुराणम् ३१३,६।३४२,६।
नारदीयपुराणम् ३५८,२०।

पद्मपुराणम् १२०,१२।

बृहन्नारदीयपुराणम् ८३,५।१९६,१०।

ब्रह्मपुराणम् ११,१५। २६,७। ५२,१०। ५५,१५ । ७६,१०। ७८,६।
८९,१७।९१,१९।९३,१४।९९,२०।१००,१३।२४३,२२।२४८,९।
२५६,१९।२५८,५।३०८,५।३१२,१२।३३७,६।३५८,१०।

ब्रह्माण्डपुराणम् ५,१३।१९७,१२।

भविष्यपुराणम् ३,१९।५६,४।१९७,१५।२४३,२०।

भागवतम् ८५,१२।१०९,१६।१३३,८।२२१,८।

मत्स्यपुराणम् ४९,१२ । ७४,१७ । १२८,८ । १३९,१९ । १६३,४।
१६५,१२। १६७,८। १६९,३ । १७२,१५ । १७७,४ । १७८,३।
१८२,१९। १८३,१२। १८४,१४। १९४,९। २४३,१७। २८४,८।
३५०,१०।

महाभारतम् १२७,१।१४३,११।

मार्कण्डेयपुराणम् ११,१२। ९८,१३। १०३,२। १४३,७। २७८,१९।
३०३,१८।३०५,१७।३५२,२।३५६,४।३५७,११।

वराहपुराणम् १०७,१।१०९,३।११०,१।१७१,६।१७७,११।

वामनपुराणम् ७०,१।१८२,११।३५६,१९।

वायुपुराणम् ११९,१६।२४८,४।३४८,१३।३५८,४।

वाराहम् १०९,११।

विराटपर्व्व २६७,१०।

विष्णुपुराणम् ५७,९ । ९२,१५ । ९६, ११ । १०५,४ । १०६,१९।
१४२,१६।१८९,१५।२३५,१९।२४८,१३।३४६,७।

११

| | |
|---|---|
| विष्णुरहस्यम् | २१४,११। |
| रामायणम् | ८८,२।१२४,२२।१२६,६।१६७,६। |
| लिङ्गपुराणम् | २८६,१२। |
| शिवरहस्यम् | २८६,६। |
| स्कान्दपुराणम् | १५३,१। |

# अन्यान्यग्रन्थनामानि ।


अगस्त्यसंहिता १४१,१।

अमरकोष: २४८,१५।२४९,२।

आश्वलायनगृह्यम् १३१,३।

उपनिषत् ३३,९।

कठब्राह्मणम् २७९,७।

काठकगृह्यम् २८०,१८।

कात्यायनगृह्यम् १४६,२२।

काशीखण्ड ३५०,१९।

कुथुमि: २९४,७।

गृह्यपरिशिष्टम् १६,१३-१९।११८,१२।२२२,१।२४७,१२।२४७,२०।
२७८,२१ ।

छन्दोगपरिशिष्टम् ७,१४ । १३,१२ । ६७,२० । १०९,१९ । १११,१।
११२,५ । ११३, ८ । ११८,४ । १२२,११ । १२५, ७। १४६,२२।
१४७,१।१५६,२१।१६५,६।१८०,६।२४३,२०।२५४,४।३४३,१३।

परिशिष्टम् ९४,१४।१३९,२।१४५,३।

पाणिनि: २५७,१८।

बैजवापगृह्यम् ७४,१५।

बौधायनसूत्रम् ३८,२१।

भूरिप्रयोगकोष: १९१,१५।

विष्णुधर्म्म: १२,७ ।

विष्णुधर्म्मोत्तरम् ११,९ । १८४,३ । २३८,१ । २४१,१४ । २४५,९।
२४७,१९।२५१,१९।२६६,१६ २९२,१७।२९३,१०।

श्रुति: २३६,५।२५५,१२।

स्मृति: २७३,२०।२७७,१।

## संग्रहकारनामानि ।


| | |
|---|---|
| अनिरुद्धः | १३२;३। |
| अभियुक्तः | १०१,५। |
| आधुनिकः | १००,३। |
| गङ्गावाक्यावलीकारः | २१७,१७। |
| गौड़वृद्धः | ९९,१०। |
| नीलाम्बरभट्टः | २७५,५। |
| ब्रह्मगुप्तः | २५५,१०।२६०,११। |
| वृद्धः | १०३,१७। |
| भोजराजः | १८,१३।२१५,१५। |
| रुद्रधरः | ५३,१४।७८,१७। |
| वाचस्पतिमिश्रः | ३३,११।८७,९। |
| विशारदः | ८७,९।१४५,५।२७५,१४। |
| श्राद्धविवेककारः | १५,१८। |
| षट्त्रिंशन्मुनिः | ६३,१३।६८,१३। |
| हेमाद्रिः | २७५,८।२७७,१। |

# संग्रहग्रन्थनामानि ।

कल्पतरुः ३३,१४ ।

कालमाधवीयः २६१,६।२७३,१६।२७५,८।२७७,१।२८०,१८।

कालचिन्तामणिः २७४,६।२७५,६।२७७,१।

दानकौमुदी १६०,१।

निर्णयामृतम् ८६,१८ ।

भीमपराक्रमः २२३,७।२२४,५ । २२६,७ । २२८,७।२२६,६-१६ ।
२३०,८।२६२,४।२७४,४।२७६,१८ ।

मदनपारिजातः २७३,२०।२७५,८ ।

मिताक्षरा २२,१४।४७,४।६८,१३।१६२,१६ ।

रत्नमाला २३५,१४।२००,६।२१३,१७।२५२,८ ।

राजमार्त्तण्डः १८,१३। १६८,४ ।२०२,१,६ । २०३,१७।२०४,१०।
२०५,८। २०६,७ । २०७,३।२०८,१५ । २१०,८-१८। २१४,१४।
२१५,७।२१७,१७।२२२,१६। २२३,२-१८।२२४,१२।२२६,१३।
२२७,७-१८ । २३०,४-१२। २३१,१२ । २३२,६। २३३,७-२०।
२३८,१६।२३६,३।२४०,७।२४३,३।२५२,४।२६१,६-१७।

शुद्धिदीपिका १६७,१८ । १६८,१५ । २००,१६ । २०३,२-११ ।
२०६,१२-१५।२०७,१५।२१०,६।२११,६।२१२,१०।२१५,२० ।
२१६,१३।२२१,१६।२२७,१५।२२६,१।२३३,६-१०।

शुद्धिविवेकः ३३,१०।३६,११।८७,२।

श्राद्धचिन्तामणिः ८६,१८।६३.१८।

श्राद्धविवेकः १५,७।३१,१८। ७५,७।८७,२। ८९,२०। ९०,१। ९४,१।
१००,१।१०१,१२।१३०,३।२३६,१८।

समयप्रकाशः १६,६।२९४,१०।

स्मृतिसागरः १८२,३।

हारलता ३०,१८।३१,८।३३,१०।५२,१७।८७,८।

# ज्योतिषग्रन्थानि ।


करणरत्नम् २१३,१४।

ज्योतिषम् २५७,१२ । २५९,१२,१७ । २६२,८,२६५,१९ । २६६,१।
२७०,२।२७१,१६।२८६,१७।२९५,९।

ज्योतिःपराशरम् १६८,८।२६५,१७।२७९,३।२८३,१५।

दैवज्ञवल्लभा २०८,११।

नष्टयात्रा २१५,५।

पशुपतिदीपिका २०६,३।२१०,१।२११,१।२१२,६।२२९,१६।

बृहज्जातकम् २०१,१५ ।

बृहद्यात्रा १९९,३।२०१,९।

ब्रह्मसिद्धान्तम् २५१,३।२६५,१५।

योगयात्रा २३८,९ ।

वराहसंहिता २१७,९।२५१,७।२७१,९।२७६,१९।

लघुयात्रा २०८,६।२१४,१९।२८०,५।

सूर्य्यसिद्धान्तम् १५५,१२। २०९,६ । २११,९ । २२५,४ । २३४,४।
२४०,१०।२४६,११।२६८,१६।२५२,१३।२५३,१४।२६९,२१।

स्वरोदयः २०३,७।

होरासारः २०५,१।२२१,११।२४२,७।


---

## शुद्धिकौमुदीधृत व्यवस्थापकवचनानामकारादिक्रमेण सूचिपत्रम्।

---

अ।


| | | | पृः | पं० |
|---|---|---|---|---|
| अक्षतायां क्षतायां वा | ... | ... | ९० | ११ |
| अक्षारलवणाशाः स्युः | ... | ... | १४२ | ४ |
| अक्षोभ्याणामपां नास्ति | ... | ... | २९८ | २ |
| अकृतचूड़ा ये बालाः | ... | ... | १२८ | १९ |
| अग्न्याधानं प्रतिष्ठाञ्च | ... | ... | १६८ | ५ |
| अग्राह्या आगता आपः | ... | ... | २९८ | ८ |
| | | | २८६ | १८ |
| अघाहःसु व्यतीतेषु | ... | ... | ३५ | २ |
| | | | ३६ | १५ |
| | | | १५५ | ४ |
| अङ्गादङ्गात् सम्भवति | ... | ... | ९३ | ५ |
| अच्छिन्ननाड्यां कर्त्तव्यम् | ... | ... | ११ | १० |
| अजा गावो महिष्यश्च | ... | ... | ३०७ | १५ |
| अजातदन्तमरणे | ... | ... | २३ | २० |
| अजातदन्तो मासैर्वा | ... | ... | २३ | ५ |
| अजारजः खररजः | ... | ... | ३५८ | २१ |

| | पृ: | पं० |
|---|---|---|
| अजीर्णेऽभ्युदिते वान्ते ... ... | १९१ | १९ |
| अतिचारं गते जीवे ... | २२८ | २ |
| | २३० | १ |
| अतिचारं गतो जीवः ... | २२९ | १७ |
| अत ऊर्द्धं द्वितीयात्तु ... | ४० | १० |
| अत ऊर्द्धं पतन्त्येते ... | ७९ | १६ |
| अत ऊर्द्धं स्वजात्युक्तम् ... | ४३ | ५ |
| अतिक्रान्ते दशाहे तु ... | ३४ | १८ |
| | ७३ | १२ |
| अतीते सूतके स्वे स्वे ... | ३७ | ४ |
| | ७३ | १५ |
| अतःपरं प्रहृष्टानाम् ... ... | २९ | ५ |
| अथ चेद्गर्भसंयुक्ता ... ... | ११७ | १८ |
| अथ तत्र वसेद्रात्रौ ... ... | ३२५ | १८ |
| अथ पुत्रादिराप्लुत्य ... ... | ११३ | १२ |
| अथानवेक्ष्यमेत्यापः ... ... | १२२ | ११ |
| अदत्तायान्तु यो जातः ... ... | ९१ | २१ |
| अदन्तजन्ममरणम् ... ... | २४ | ४ |
| अद्भिस्तु प्रकृतिस्थाभिः ... ... | ३४१ | ५ |
| अद्भिस्तु प्रोक्षणं शौचम् ... ... | ३१० | १७ |
| अधःशय्यासनादीनाम् ... ... | १४२ | १० |
| अधिमासके विवाहम् ... ... | २७९ | १९ |

| | | | पृ: | पं० |
|---|---|---|---|---|
| अधिमासे दिनपाते | ... | ... | २७६ | २० |
| अध्यायनञ्च ग्रहचारकर्म्म | ... | ... | २४१ | १५ |
| अनतीतद्विवर्षस्तु | ... | ... | २८ | २ |
| अनन्यगतिकां नित्यम् | ... | ... | २८० | १९ |
| अनस्थिसञ्चिते कश्चित् | ... | ... | ६३ | १६ |
| अनस्थिसञ्चिते शूद्रे | ... | ... | ६३ | २० |
| अनस्थिसञ्चये विप्रः | ... | ... | ६३ | १८ |
| अनाथं ब्राह्मणं दीनम् | ... | ... | ६१ | २,५ |
| अनादिदेवतां दृष्ट्वा | ... | ... | २२३ | २ |
| अनिष्टे त्रिविधोत्पाते | ... | ... | २१५ | २१ |
| अनिर्दशाया गोः क्षीरम् | ... | ... | ३२३ | ८ |
| अनिलाग्निमरुद्वरुणाः | ... | ... | २१६ | १८ |
| अनुद्धृतैरुद्धृतैर्वा | ... | ... | ३२४ | १ |
| अनुपनीतो विप्रस्तु | ... | ... | २६ | २ |
| अनूढभार्य्यः शूद्रस्तु | ... | ... | २६ | १८ |
| अनेन विधिना यस्तु | ... | ... | २४१ | ५ |
| अनौरसेषु पुत्रेषु | ... | ... | ५७ | १० |
| अन्तर्दशाहे बालस्य | ... | ... | २१ | ३ |
| | | | २२ | १ |
| अन्त्यक्रियाणां संप्रोक्ताः | ... | ... | १०२ | ९ |
| अन्त्यजैः खनिताः कूपाः | ... | ... | ३०० | ५ |
| अन्यासामाग्निनानाञ्च | ... | ... | १५१ | १८ |

| | | | पृ: | पं० |
|---|---|---|---|---|
| अन्त्योपान्त्यौ त्रिभौ ज्ञेयौ | ... | ... | २५७ | १२ |
| अन्नं कुम्भञ्च दातव्यम् | ... | ... | १७९ | १६ |
| अन्नं पर्य्युषितं भोज्यम् | ... | ... | २१८ | १७ |
| अन्यदेशमृतं ज्ञातिम् | ... | .. | २४ | २ |
| अन्यपूर्व्वा गृहे यस्य | ... | .. | ६५ | ११ |
| अन्याश्च मातरस्तद्वत् | ... | ... | १० | ७ |
| अपि दारुमयीञ्च | ... | ... | ६८ | १९ |
| अपुत्रस्य च या पुत्री | ... | ... | २१ | ६ |
| अपुत्रायां मृतायान्तु | ... | ... | १०२ | १५ |
| अपुत्रा स्त्री यथा पुत्र— | ... | ... | ९२ | २१ |
| अब्दमम्बुघटं दद्यात् | ... | ... | २९४ | ८ |
| अभोज्यं प्राहुराहारम् | ... | ... | ३१८ | १ |
| अमावस्यादिनियतम् | ... | ... | ९९ | १५ |
| अमावस्याद्वयं यत्र | ... | ... | २६६ | ७ |
| अमावस्यापरिच्छिन्नम् | ... | ... | २७० | १६ |
| अमावस्यामतिक्रम्य | ... | ... | २६१ | ७ |
| अम्भसा हेमरूप्याद्यैः | ... | ... | ३०६ | २ |
| अरण्येऽनुदके रात्रौ | ... | ... | ३१७ | १८ |
| अर्काद्विनिःसृतः प्राचीं | ... | ... | २४६ | १२ |
| अर्कोऽनुकूले शशिनि प्रशस्ते | ... | ... | २४२ | १७ |
| अर्द्धप्रसृतिमात्रन्तु | ... | ... | ३१५ | ७ |
| अर्द्धमध्वानं प्राप्तः | ... | ... | ११२ | ९ |

